१, १
कैलासशिखरासीनं कालकन्दर्पनाशनम् ।
प्रसन्नं परमेशानं जगदानन्दकारणम् ॥ १,१.१ ॥
प्रणम्य परया भक्त्या भैरवी स्तुतिमातनोत् ।
देवदेव महादेव जन्मदारिद्र्यनाशन ॥ १,१.२ ॥
प्रसीद करुणामूर्ते प्रसन्न परमेश्वर ।
दिव्यागमरहस्यानि कुलकौलादिकानि च ॥ १,१.३ ॥
जाने तव प्रसादेन मायामङ्गलविग्रह ।
श्रोतुमिच्छामि सर्वेश तव दिव्यरसायनम् ॥ १,१.४ ॥
जराजन्मामयघ्नं च खेचरत्वादिसिद्धिदम् ।
दारिद्र्यदुःखशमनं ब्रह्मत्वादिवरप्रदम् ॥ १,१.५ ॥
ईश्वर उवाच ।
साधु साधु महाभागे सर्वलोकोपकारिणि ।
तत्सर्वं जायते सूताच्छुद्धात्मप्राणवल्लभे ॥ १,१.६ ॥
सर्वलोकोपकारार्थं गुह्यात्गुह्यतमं हितम् ।
रसेन्द्रस्य समुत्पत्तिं लक्षणं च सुरार्चिते ॥ १,१.७ ॥
तत्सर्वं सम्प्रवक्ष्यामि शृणु भैरवि सम्प्रति ।
[रसोत्पत्तिः]
सुरेन्द्रैर्मुनिभिर्दिव्यैः गन्धर्वोरगकिंनरैः ॥ १,१.८ ॥
प्रार्थितो भवत्यां तु कुमारोत्पत्तिमिच्छद्भिः ।
तारकासुरनाशाय लोकानां रक्षणाय च ॥ १,१.९ ॥
तदा हिमालयगिरेः गुहायां सुचिरं प्रिये ।
संक्रीडमानयोः कालो गतो नः पुत्रलिप्सया ॥ १,१.१० ॥
त्रिजगत्क्षोभि सुरतं त्यजितुं प्रेषितः सुरैः ।
कपोतरूपमास्थाय वह्निः प्रागाद्गवाक्षतः ॥ १,१.११ ॥
तं दृष्ट्वा लज्जया देवि विसृष्टं सुरतं मया ।
निक्षिप्तं वदने वह्नेरावयोस्तेज उज्ज्वलम् ॥ १,१.१२ ॥
तेन दन्दह्यमानोऽग्निर्गङ्गायां तन्न्यमज्जयत् ।
तेन गङ्गापि संतप्ता तद्बहिर्विससर्ज च ॥ १,१.१३ ॥
तत्द्विधाभूद्बहिः प्राप्य चैकं स्कन्दप्रसूतये ।
अन्यच्छुद्धरसो जातो ह्यापदंबुधिपारदः ॥ १,१.१४ ॥
शतयोजननिम्नेषु पञ्चकूपेषु संस्थितः ।
तन्मला धातवो जाता मणयो दिव्यवस्तु च ॥ १,१.१५ ॥
तत्तत्क्षेत्रविशेषेण नामवर्णादिकान् गुणान् ।
भिन्नः प्राप्तो रसेन्द्रोऽयं जन्मदारिद्र्यभञ्जनः ॥ १,१.१६ ॥
ते कूपाः प्रलये पञ्च संज्ञा जातादि वै मुखाः ।
ससंचवर्णा निवृत्त्या निक्षिप्ता नियुतानि हि ॥ १,१.१७ ॥
पञ्चवर्णानि देवेशि सर्वसत्त्वयुतानि च ।
पूर्वस्यां पारदः श्वेतो नानावर्णैर्गदापहः ॥ १,१.१८ ॥
चञ्चलो दक्षिणस्यां तु रसेन्द्रो नीलवर्णवान् ।
दोषहीनोऽतिरूक्षश्च सुतरां चपलः प्रिये ॥ १,१.१९ ॥
तेन जाता भुजङ्गेन्द्रा जराजन्मगदोषोज्झिताः ।
पश्चिमस्यां तु सूताख्यः पीतवर्णोऽतिरूक्षकः ॥ १,१.२० ॥
सर्वदोषयुतोऽसौ तु शुद्धोऽष्टादशकर्मभिः ।
सर्वसिद्धिप्रदो देवि देहलोहादिसिद्धिदः ॥ १,१.२१ ॥

उत्तरस्यां दिशो रक्तः सर्वदोषविवर्जितः ।
रसायनं तु तेनैव देवा जन्मजरोज्झिताः ॥ १,१.२२ ॥
मध्ये तु मिश्रको ज्ञेयः सर्ववर्णसमन्वितः ।
बहिश्चन्द्रार्काच्छायो रसो दोषसमन्वितः ॥ १,१.२३ ॥
स चाष्टादशसंस्कारैः शुद्धः सिद्धिप्रदो भवेत् ।
अमराणां स्वरूपं तु रसेन्द्रो हि महेश्वरः ॥ १,१.२४ ॥
पूरयामासतुस्तौ च स्तोकतो ह्यतिदुर्लभौ ।
अन्येषु सर्वकार्येषु सिद्धदोऽपि हि कर्मभिः ॥ १,१.२५ ॥
अष्टादशभिरत्यन्तं शुद्धः सिद्धिप्रदो द्रुतम् ।
रसावतारं यो वेत्ति स तु धार्मिकसत्तमः ॥ १,१.२६ ॥
आयुष्यसुखसंतानधनारोग्यमवाप्नुयात् ।
[रसपर्यायाः तन्निरुक्तैस्त]
जन्मरोगजरामृत्युदारिद्र्यांभोनिधेः परम् ॥ १,१.२७ ॥
पारं ददाति तेनैव पारदः परिकीर्तितः ।
रसोपरसलोहादिकर्तृत्वाच्च रसेन्द्रकः ॥ १,१.२८ ॥
मम प्रत्यङ्गसूतत्वात्सूत इत्यभिधीयते ।
सूते यस्मात्सर्वसिद्धिं तस्मात्सूत इति स्मृतः ॥ १,१.२९ ॥
मम देहरसो यस्मात्रसस्तस्मात्प्रकीर्तितः ।
जरामरणदारिद्र्यरोगनाशाय शस्यते ॥ १,१.३० ॥
तस्माश्रस इति प्रोक्तो धातुत्वाच्च वरानने ।
सर्वधातून्रसत्येषः तस्माच्च रस ईरितः ॥ १,१.३१ ॥
मित्रकारी सवर्णत्वात्सर्वसिद्धिप्रदायकः ।
पारदो व्याधिसंहर्ता रसेन्द्रो रसकर्मणि ॥ १,१.३२ ॥
धातुकर्मसु सूतः स्याद्रसेन्द्रो रससाधने ।
सर्वकर्मार्हततया सर्वतया प्रिये ॥ १,१.३३ ॥
सर्वसिद्धिप्रदो देवि मिश्रकोऽयमुदाहृतः ।
[रसगता दोषाः]
अमोघसिद्धिममलं सर्वसिद्धिप्रदं रसम् ॥ १,१.३४ ॥
आलोक्य त्रिदशाः सर्वे ब्रह्मविष्णुपुरेगमाः ।
मामभिप्रार्थयामासुः स्तोत्रैश्च विविधैः प्रिये ॥ १,१.३५ ॥
रसेन्द्रदर्शनादेव नरपक्षिमृगादयः ।
सिद्धिं नानाविधां यान्ति तन्निवारय शंकर ॥ १,१.३६ ॥
तस्मात्त्रिधा कञ्चुकाभिर्दोषैश्चासौ नियोजितः ।
तदा प्रभृति दोषैश्च कञ्चुकाभिश्च वर्जितः ॥ १,१.३७ ॥
शुद्धोऽष्टादशसंस्कारैः सूतो भवति सिद्धिदः ।
[रसावस्थाः]
धूमश्चिटिचिटिश्चैव मण्डूकप्लुतिरेव च ॥ १,१.३८ ॥
सकंपश्च विकंपश्च पञ्चावस्था रसस्य तु ।
[रसगतयः]
रसस्य गतयः पञ्च जले स्याज्जलवद्गतिः ॥ १,१.३९ ॥
धूमे धूमगतिः सूतः स्तरणे हंसवद्गतिः ।
किट्टे किट्टनिभा देवि पञ्चमो जीववद्गतिः ॥ १,१.४० ॥
चतस्रो गतयो दृश्याः अदृश्या पंचमी गतिः ।
यन्त्रौषधाद्यै रोद्धव्याश्चतस्रो गतयः प्रिये ॥ १,१.४१ ॥
ध्यानमन्त्रौषधाद्यैश्च रोद्धव्या पञ्चमी गतिः ।

[नैसर्गिका दोषाः]

पार्थिवश्च तथैवाप्य आग्नेयश्चानिलस्तथा ॥ १,१.४२ ॥
नाभसो गजचर्माख्यः पुण्डरीको विसर्पकृत् ।
हारिद्रो रक्तचर्माख्यो नारङ्गो रक्तबिन्दुकः ॥ १,१.४३ ॥
असह्याग्निश्च मण्डूको मला नैसर्गिकाः स्मृताः ।

[औपधिका दोषाः]

कालिका मलिनी चैव कपोती रक्तकञ्चुका ॥ १,१.४४ ॥
सलोमी गिरिजा चैव पिङ्गली सप्त कञ्चुकाः ।
औपाधिका इमा ज्ञेयाः पारदे कीर्तिताः प्रिये ॥ १,१.४५ ॥

[यौगिका दोषाः]

विषं नागश्च वङ्गश्च यौगिकश्च त्रयः स्मृताः ।

[दोषाणां स्वरूपम्]

भौमः कुष्ठकरश्चाप्यो दोषोद्रेकं करोति सः ॥ १,१.४६ ॥
आग्नेयः कुरुते दाहं वायव्यः शूलकृद्भवेत् ।
बाधिर्यं नाभसो दोषो गजत्वग्गजचर्मकृत् ॥ १,१.४७ ॥
पुण्डरीको दद्रुकरो विसर्पश्च विसर्पकृत् ।
हारिद्रः पाडुकृत्प्रोक्तो रक्तचर्माक्षिपाटलम् ॥ १,१.४८ ॥
नारङ्गो दुम्बरं कुष्ठं रक्तबीजो मसूरिकाः ।
असह्याग्निर्मोहकारी मण्डूकश्चर्मकीलकृत् ॥ १,१.४९ ॥
मलो मूर्च्छाकरो देवि ख्याता दोषोद्भवास्तथा ।
कालिका कृष्णवर्णं च मलिनी मलसग्रहम् ॥ १,१.५० ॥
कपोती स्वरसादं च विस्फोटं रक्तकञ्चुका ।
सलोमी वमनं कुर्यात्गिरिजा जाड्यकारिणी ॥ १,१.५१ ॥
पिङ्गली नेत्रघ्नी दोषाः कचुकजाः स्मृताः ।
विषं मृत्युप्रदो नागो जाड्यं वङ्गस्सुरार्चिते ॥ १,१.५२ ॥
कुरुते पूतिगन्धत्वं गदा यौगिकसम्भवाः ।

[रसस्य स्थानान्तरगतिः]

प्रथमार्तवसुस्नाता सुरूपा शुभलक्षणा ॥ १,१.५३ ॥
शुद्धाम्बरधरा माल्यगन्धन्लिप्ता सुभूषिता ।
उत्तमाश्वसमारूढा रतिसङ्गविवर्जिता ॥ १,१.५४ ॥
अभ्यर्च्य गणनाथं च भैरवं च गुरुं पुरा ।
रसेन्द्रभैरवं ध्यात्वा कूपस्थं पारदं प्रिये ॥ १,१.५५ ॥
पश्येच्छीघ्रं ततो गच्छेत्न पुनः पृष्ठमीक्षयेत् ।
एषा योजनमात्रोआ कुमारी हयसाधना ॥ १,१.५६ ॥
तदानीमाहरेत्ततु कुमारासंजिघृक्षया ।
कूपमध्यात्समुत्पत्य सोऽनुधावति तां प्रति ॥ १,१.५७ ॥
यावद्योजनमागत्य पुनः कूपे विशेत्क्षणात् ।
परितः कृतगर्तेषु तेषु तेषु च संस्थितम् ॥ १,१.५८ ॥
तं रसेन्द्रं शुचिर्भूत्वा गृह्णीयाद्रसदेशिकः ।
गौरवादग्निवदनात्पतितो दरदाह्वये ॥ १,१.५९ ॥
देशे स सूतो भूलीनः तन्त्रज्ञै रसकोविदः ।
निक्षिप्य मृत्तिकायन्त्रे पातनाख्ये समागतः ॥ १,१.६० ॥
पारदो गृह्यते देवि दोषहीनस्स उच्यते ।
एवमेव तत्र तत्र सिद्धविद्याधरैस्सदा ॥ १,१.६१ ॥
निक्षेपितः पारदेन्द्रो विद्यते देवि सिद्धिदः ॥ १,१.६२ ॥

आक्, १, २
श्रीभैरवी ।
रसोपदेशदातारं तच्छिष्यं काकिनीस्त्रियम् ।
रसपूजां तु पृच्छामि यथावत्कथयस्व मे ॥ १,२.१ ॥
श्रीभैरवः ।
[रसोपदेशकलक्षणम्]
शृणु भैरवि तत्सर्वमपूर्वं कथयामि ते ।
आचार्यो ज्ञानवान्दक्षः शीलवान् गुणवान् शुचिः ॥ १,२.२ ॥
धर्मज्ञः सत्यसंधश्च रसशास्त्रविशारदः ।
वेदवेदान्ततत्त्वज्ञो निर्मलः शिववत्सलः ॥ १,२.३ ॥
देवीभक्तः सदा शान्तो रसमण्डपकोविदः ।
मन्त्रसिद्धो महावीरो देवतायागतत्परः ॥ १,२.४ ॥
रसदीक्षाविधानज्ञो मन्त्रौषधमहारसान् ।
रागसंख्यां बीजकल्पं द्वन्द्वमेलापनं बिडम् ॥ १,२.५ ॥
रञ्जनं सारणां तैलं दलानि क्रामणानि च ।
वर्णोत्कर्षं मृदुत्वं च जारणं बालवृद्धयोः ॥ १,२.६ ॥
खेचरीं भूचरीं चैव यो वेत्ति स गुरुर्भवेत् ।
[शिष्यलक्षणम्]
गुरुभक्तः सदाचारो लोभमायाविवर्जितः ॥ १,२.७ ॥
निस्पृहो निरहङ्कारः सत्यवाङ्नियमस्थितः ।
निरालस्यः स्वधर्मज्ञः षट्कर्मनिरतः सुधीः ॥ १,२.८ ॥
दम्भहिंसादिनिर्मुक्तः शिवाचारेषु दीक्षितः ।
अत्यन्तसाधकः शान्तो मन्त्रानुष्ठानतत्परः ॥ १,२.९ ॥
दान्तः शिष्यः स विज्ञेयः शक्तिमान् गतमत्सरः ।
[काकिनीलक्षणम्]
आकुञ्चितस्निग्धकेशा पद्मपत्रायतेक्षणा ॥ १,२.१० ॥
दीर्घोत्तुङ्गघ्राणकेशा विद्रुमाधरशोभिता ।
दाडिमीबीजदशना कम्बुग्रीवोन्नतस्तनी ॥ १,२.११ ॥
शिरीषमालामृदुलबाहुपाशविराजिता ।
संकीर्णोरस्थला निम्ननाभिः सूक्ष्मा चलाङ्गका ॥ १,२.१२ ॥
तलोदरी रोमराजिवलित्रयविभूषिता ।
विशालजघनोपेता रम्भोरुः सुभगा प्रिया ॥ १,२.१३ ॥
कादलोपमजङ्घा च पाटलाङ्घ्रिसरोरुहा ।
शोणामलनखोपेता राजहंसगतिः शुभा ॥ १,२.१४ ॥
कलकोकिलनिध्वानकलकण्ठादिमञ्जुला ।
पिप्पलच्छदसंकाशस्मरमन्दिरमण्डिता ॥ १,२.१५ ॥
युवती श्यामला स्निग्धा सुरूपा शुभलक्षणा ।
चुम्बनस्पर्शनाश्लेषरतिकर्मविचक्षणा ॥ १,२.१६ ॥
बहुले या पुष्पवती पक्षे सा काकिनी स्मृता ।
स्वस्ववर्णसद्भूता ग्राह्या वाप्यन्यवर्णजा ॥ १,२.१७ ॥
रसकर्मणि दीक्षायां प्रयोगे च रसायने ।
[काकिनीत्वापादनम्]
काकिन्यभावे तरुणी सुरूपान्याथवा भवेत् ॥ १,२.१८ ॥

गन्धकं गोघृतोपेतं निष्कं त्रिः सप्तवासरम् ।
प्रातर्दद्यात्तु सा नारी काकिनीसदृशा भवेत् ॥ १,२.१९ ॥
धार्मिकः पापभीरुश्च बलवान् ज्ञानवित्तमः ।
न्यायश्रेष्ठः सर्वसमो रसागमविशारदः ॥ १,२.२० ॥
भूपतिश्चास्य मन्त्री च सर्वशास्त्रविशारदः ।
सर्वधर्मरतः श्रेष्ठो न्यायमार्गप्रवर्तकः ॥ १,२.२१ ॥
[रसशालानिर्माणम्]
रसशालां प्रवक्ष्यामि रसेन्द्रस्य वरानने ।
निर्णयेच्च निरातङ्के देशे च निरुपप्लवे ॥ १,२.२२ ॥
आस्तिकप्राणिसुभगे धनधान्यसमाकुले ।
सौराज्ये पूर्णविभवे निरपाये ह्यनिन्दके ॥ १,२.२३ ॥
नगरे सर्ववर्णाढ्ये महामाहेश्वरावृते ।
तत्रापि विजये स्थाने पवित्रे च सुरक्षिते ॥ १,२.२४ ॥
सव्यालपशुपक्ष्यादिसंबाधपरिवर्जिते ।
समस्थले च प्राकारपरिघार्गलभूषिते ॥ १,२.२५ ॥
नारङ्गदाडिमडहजम्बीरफलपूरके ।
तालहिन्तालवकुलनारिकेलाम्लपाटले ॥ १,२.२६ ॥
अशोकजम्बूपनससालपुंनागमण्डिते ।
कपित्थपूगसरलदेवदारुसुबिल्वके ॥ १,२.२७ ॥
धात्रीन्यग्रोधवरणमधूकाम्रातमण्डिते ।
केतकीमल्लिकाजातीयूथिकामालतीयुते ॥ १,२.२८ ॥
मागधीकुन्दकुरवतिलके शतपत्रके ।
कुमुदोत्पलकल्हारपुण्डरीकांबुजोत्पलैः ॥ १,२.२९ ॥
हंससारसकारण्डचक्रवाकविराजितैः ।
सरोभिः शीतलजले परितः परिवेष्टिते ॥ १,२.३० ॥
शीतानिलाभिलुलितललितप्रसवाञ्चिते ।
चित्रोद्यानेऽतिरुचिरे रसशालां प्रकल्पयेत् ॥ १,२.३१ ॥
षोडशस्तम्भरुचिरां चतुरश्रां समायताम् ।
मनोज्ञां देवदेवेशि मत्तवारणसंयुताम् ॥ १,२.३२ ॥
वातायनसमोपेतां कवाटार्गलरक्षिताम् ।
कक्षपताकासंयुक्तां सर्वोपकरणोज्ज्वलाम् ॥ १,२.३३ ॥
समालिखितदिक्पालां समर्चितविनायकाम् ।
प्रतिष्ठितोमामाहेशां द्वारपालैश्च रक्षिताम् ॥ १,२.३४ ॥
भेरीकाहलघण्टादिदिव्यवाद्यविनादिताम् ।
वास्तुलक्षणसंयुक्तां रसशालां प्रकल्पयेत् ॥ १,२.३५ ॥
शालायां वेदिका कार्या सुदृढा दर्पणोपमा ।
इष्टकैः खचिता रम्या ससोपाना सलक्षणा ॥ १,२.३६ ॥
कपिलागोमयालिप्ता हिरण्यकलशावृता ।
[रसेन्द्रपूजाविधिः]
वेदिकायां रसेन्द्रस्य भद्रपीठं प्रकल्पयेत् ॥ १,२.३७ ॥
भद्रपीठे लिखेत्सम्यक्सिन्दूरेण द्विहस्तकम् ।
षट्कोणं वसुपत्रं च तद्बहिश्चाष्टपत्रकम् ॥ १,२.३८ ॥
कमलं चतुरश्रं च चतुर्द्वारोपशोभितम् ।
रसलिङ्गं न्यसेद्यन्त्रे पुष्पाद्यैश्च समर्चयेत् ॥ १,२.३९ ॥
[रससन्ध्या]

अथ सन्ध्यां प्रवक्ष्यामि रसकर्मफलप्रदाम् ।
प्रविशेद्रसशालां च स्नातः शुद्धोऽनुलेपितः ॥ १,२.४० ॥
शुक्लमाल्याम्बरधरः संयतात्मा जितेन्द्रियः ।
यतवाग्गुरुभक्तश्च सत्यवादी दृढव्रतः ॥ १,२.४१ ॥
उपविश्य समाचामेत्मृदुले चित्रकम्बले ।
वाङ्मायाश्रीयुतं तोयमात्मविद्याशिवात्मकम् ॥ १,२.४२ ॥
तत्त्वं च शोधयामीति त्रिवारं विधिवत्पिबेत् ।
ध्यायेद्वरदगायत्रीं त्रिवारं प्रजपेत्प्रिये ॥ १,२.४३ ॥
रसभैरवगायत्रीं शृणु भैरवि तत्त्वतः ।
ऐं रसेश्वराय विद्महे रसाङ्कुशाय धीमहि ।
तन्नः सूतः प्रचोदयात् ।
कोटिसूर्यप्रतीकाशं दशकोटीन्दुसंनिभम् ॥ १,२.४४ ॥
शुभ्रं पञ्चमुखं देवं त्रिनेत्रं चन्द्रशेखरम् ।
अष्टादशभुजं शान्तं पञ्चकृत्यपरायणम् ॥ १,२.४५ ॥
शुक्लमाल्यांबरधरं नागयज्ञोपवीतिनम् ।
स्फटिकसङ्काशं प्रेतारूढं रसेश्वरम् ॥ १,२.४६ ॥
नीलकण्ठं च सर्वज्ञं सर्वाभरणभूषितम् ।
वरदं रसशास्त्रं च पारदं भुजङ्गं सुधाम् ॥ १,२.४७ ॥
शङ्खभैषज्यकोदण्डशूलखट्वाङ्गसायकम् ।
डमरुं करवालं च गदां पावकमीश्वरि ॥ १,२.४८ ॥
आरोग्यं दिव्यमालां च ह्यभयं द्विनवैः करैः ।
रसाङ्कुशीं निजोत्सङ्गे बिभ्राणं वृषवाहनम् ॥ १,२.४९ ॥
कपर्दभाररुचिरं मन्दहासाननं शिवम् ।
रसभैरवमाचिन्त्य तस्योत्सङ्गे रसाङ्कुशीम् ॥ १,२.५० ॥
अङ्कुशं चाक्षमालां च दधतीं दक्षहस्तयोः ।
पाशाभयं च बिभ्राणां दक्षिणेतरहस्तयोः ॥ १,२.५१ ॥
चतुर्भुजां रक्तवर्णां त्रिणेत्रामिन्दुशेखराम् ।
रक्ताम्बरधरां देवीं कम्बुग्रीवां कृपामयीम् ॥ १,२.५२ ॥
रत्नालङ्काररुचिरां मन्दहासविराजिताम् ।
ध्यायेद्रसाङ्कुशीं देवीं देवस्याभिमुखीं शिवाम् ॥ १,२.५३ ॥
ततो भस्म समादाय वामहस्तेन धारयेत् ।
नैवाधःपतितं पात्रे गृहीत्वा गोमयं सुधीः ॥ १,२.५४ ॥
विशोष्य प्रदहेत्कुण्डे क्रमेण धारयेत्प्रिये ।
पुनरुद्धारणं चैव सद्योजातादिभिर्भवेत् ॥ १,२.५५ ॥
निरीक्षणं प्रोक्षणं च ताडनाभ्युक्षणं तथा ।
सद्योजातादिभिर्मन्त्रैरभिमन्त्र्य च तत्पुनः ॥ १,२.५६ ॥
मूर्ध्नि वक्त्रे च हृदये गुह्ये चरणयोः क्रमात् ।
ईशानाद्यैः पञ्चमन्त्रैस्तत्तत्स्थानेषु निक्षिपेत् ॥ १,२.५७ ॥
सर्वाङ्गोद्धूलनं कुर्यात्भस्मना पञ्चभिश्च तैः ।
संकल्पं विधिवत्कुर्यात्रसाचार्यो महेश्वरः ॥ १,२.५८ ॥
प्राणायामत्रयं कृत्वा मूलमन्त्रेण पार्वति ।
प्रोक्षयेन्मन्त्रितं तोयं मूर्ध्नि वामकरस्थितम् ॥ १,२.५९ ॥
आचम्य च पुनस्तोयं मूलमन्त्रेण मन्त्रितम् ।
त्रिधा दक्षिणहस्तस्थं पिबेदाचमनं ततः ॥ १,२.६० ॥
अर्घ्यं मूलेन दत्त्वा त्रिः पुनराचम्य पार्वति ।

अष्टोत्तरशतं जप्त्वा मूलमन्त्रमुदारधीः ॥ १,२.६१ ॥
समर्पयेच्च सूताय रससन्ध्येयमीश्वरि ।
त्रिकालमेवं कुर्वीत सन्ध्यां सर्वाघनाशिनीम् ॥ १,२.६२ ॥
[रसांकुशरसांकुशीमूलमन्त्रोद्धारः]
वक्ष्येऽहं मूलमन्त्रस्य शृणूद्धारक्रमं प्रिये ।
वाङ्माया कमला चाथ चतुर्थ्यन्तो रसेश्वरः ॥ १,२.६३ ॥
ततो महाकालपदं महाबलपदं ततः ।
अघोरभैरवपदं वज्रवीरपदं ततः ॥ १,२.६४ ॥
क्रोधकालपदं चैतत्सर्वं सम्बुद्धिसंयुतम् ।
कषष्टवर्गान्तयुतः साधोदन्तः सबिन्दुकः ॥ १,२.६५ ॥
इदं पञ्चाक्षरं कूटं ततः कर्षणसंयुतः ।
सविसर्गोऽप्ययं कूटश्चतुर्वर्णात्मकः प्रिये ॥ १,२.६६ ॥
रसेन्द्रभैरवस्यायं मन्त्रो द्वात्रिंशदर्णकः ।
गोपितः सर्वतन्त्रेषु रहस्योऽत्यन्तदुर्लभः ॥ १,२.६७ ॥
रसाङ्कुशामन्त्रमहं वक्ष्यामि शृणु भैरवि ।
वाङ्माया भुवनेशी च रमा मकरकेतनः ॥ १,२.६८ ॥
रसाङ्कुशा चतुर्थ्यां च नमोऽन्तो द्वादशार्णकः ।
मन्त्रो रसाङ्कुशायाश्च तव देव्याः प्रकीर्तितः ॥ १,२.६९ ॥
रसभैरवस्य छन्दोऽनुष्ठुप्प्रकीर्तितः ।
नन्दिकेश ऋषिः प्रोक्तो देवः श्रीरसभैरवः ॥ १,२.७० ॥
रं बीजं लं भवेत्कीलमन्त्यार्णः शक्तिरीरितः ।
रसांकुशायाः स्कन्दस्यार्द्रं बीजं कीलकं रसः ॥ १,२.७१ ॥
नमः शक्तिरिति ख्यातं रहस्यं मन्त्रमुत्तमम् ।
[रसलिङ्गार्चना]
रसलिङ्गार्चनं वक्ष्ये भैरवि शृणु तत्त्वतः ॥ १,२.७२ ॥
वामपादं पुरस्कृत्य प्रविशेद्यागमन्दिरम् ।
आसने मृदुले स्थित्वा शुचिः संयतमानसः ॥ १,२.७३ ॥
प्राणानायम्य संकल्प्य श्रीगुरुं शिरसि स्थितम् ।
शुद्धस्फटिकसंकाशं प्रशान्तं वरदाभयम् ॥ १,२.७४ ॥
स्मरेत्तन्नाम पूर्वं च तदनुज्ञामवाप्य च ।
दिवि स्थिताश्च ये भूता भूमिस्था विघ्नकारिणः ॥ १,२.७५ ॥
पाताले ये महाभूताः ते नश्यन्तु शिवाज्ञया ।
अनेनैव च मन्त्रेण दिग्विदिक्ष्वक्षतान् क्षिपेत् ॥ १,२.७६ ॥
पुष्पमस्त्राय फडिति निक्षिपेदन्तरिक्षके ।
सर्वशत्रुप्रमथनी चेति दक्षिणपार्ष्णिकाम् ॥ १,२.७७ ॥
त्रिवारं घातयेद्भूमौ प्राणायामो भवेत्पुनः ।
रसेन्द्रभद्रपीठस्य दक्षिणे चतुरश्रकम् ॥ १,२.७८ ॥
मण्डलं हस्तमात्रं च सार्धं कुर्यात्सुशोभनम् ।
त्रिकोणवृत्तषट्कोणचतुरश्रं भवेत्क्रमात् ॥ १,२.७९ ॥
इन्द्रादिलोकपालांश्च तत्तन्नामपुरःसरम् ।
प्रणवादिनमोऽन्तैश्च पूजयेत्कुसुमाक्षतैः ॥ १,२.८० ॥
वाङ्मायाकमलाबीजैर्हृदयादीन् प्रपूजयेत् ।
प्राच्यामवाच्यां क्रमशः प्रतीच्योत्तरयोः शिवे ॥ १,२.८१ ॥
ईशानलासुरमरुत्कोणे नेत्रे प्रपूजयेत् ।
अस्त्रं सर्वासु काष्ठासु चतुर्थ्यन्तं फडन्तकम् ॥ १,२.८२ ॥

छोटिका दर्शयेदष्ट पश्चादाधारमाहरेत् ।
तत्रैवावाहयेदग्निमण्डलं बीजमूलकम् ॥ १,२.८३ ॥
अग्नेर्दश कलास्तत्र या गन्धाक्षतैः क्रमात् ।
ततः पात्रं समादाय भावयेत्सूर्यमण्डलम् ॥ १,२.८४ ॥
मार्तण्डद्वादशकलास्तत्राच्र्याश्चन्दनाक्षतैः ।
गन्धोत्तमान्वितं तोयं पूरयेदर्घ्यपात्रकम् ॥ १,२.८५ ॥
चिन्तयेदैन्दवं बिम्बं तास्तत्र पूजयेत् ।
मध्ये त्रिकोणमालिख्य शक्तिबीजं समुल्लिखेत् ॥ १,२.८६ ॥
तत्र क्षिपेत्गन्धपुष्पं मूलमन्त्रं त्रिधा जपेत् ।
पूर्वादिदिक्षु चतसृषु चतुःपात्राणि धारयेत् ॥ १,२.८७ ॥
पूरयेत्पूर्ववत्तानि गन्धपुष्पाक्षतैर्यजेत् ।
प्रोक्षयेन्मूलमन्त्रेण मध्यपात्रोदकेन च ॥ १,२.८८ ॥
पात्राणि निजगात्राणि पूजाद्रव्याणि सर्वतः ।
स्वागतश्चतुरश्रं च मण्डलं परिकल्पयेत् ॥ १,२.८९ ॥
पूर्ववत्पञ्चपात्राणि पूरयेच्छुद्धवारिणा ।
निक्षिपेन्मध्यगे सूतं रत्नं दक्षिणके क्षिपेत् ॥ १,२.९० ॥
स्वर्णं तद्वामपात्रे च तत्समीपे कुशं न्यसेत् ।
रत्नपात्रसमीपस्थे पात्रे स्यादष्टगन्धकम् ॥ १,२.९१ ॥
प्रतिपात्रे त्रिकोणं च लिखेन्मायासमन्वितम् ।
न्यसेद्गन्धाक्षतं पुष्पं त्रिधा मूलेन मन्त्रयेत् ॥ १,२.९२ ॥
सप्तधा रसपात्रं च मूलमन्त्रेण मन्त्रयेत् ।
रसपात्रोदकेनैव पूजाद्रव्याणि चात्मनः ॥ १,२.९३ ॥
शरीरमुत्तमाङ्गं च प्रोक्षयेत्पीठदीपकम् ।
आसनस्य ऋषिर्मेरुः सुतलं छन्द ईरितम् ॥ १,२.९४ ॥
कूर्मरूपी तु भगवान् देवता परिकीर्तिता ।
पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ।
अनेनैव तु मन्त्रेण चासने कुसुमं क्षिपेत् ॥ १,२.९५ ॥
[भूतशुद्धिः]
भूतशुद्धिं प्रवक्ष्यामि पृथ्वी पीता सवज्रका ।
कठिना लंबीजयुता जान्वन्ताङ्गुष्ठमूलतः ॥ १,२.९६ ॥
ध्येया जान्वादिकट्यन्तमुपर्यस्यार्धचन्द्रका ।
शुभ्रा वं बीजसहिता विचिन्त्या द्रवरूपिका ॥ १,२.९७ ॥
कट्यादि हृदयान्तं च बहिर्ध्येयस्त्रिकोणगः ।
रं बीजं रक्तवर्णश्च स्वस्तिकेन विभूषितः ॥ १,२.९८ ॥
हृदादिकण्ठपर्यन्तं वायुः स्मर्योऽञ्जनप्रभः ।
यंबीजसहितो देवि षड्बिन्दुपरिभूषितः ॥ १,२.९९ ॥
षट्कोणः कर्णदेशाच्च ब्रह्मरन्ध्रान्तमीश्वरि ।
वर्तुलं हंबीजयुतं महाकृष्णं वियत्स्मरेत् ॥ १,२.१०० ॥
पृथिवीमप्सु च तास्त्वग्नौ स च वायौ स सोऽम्बरे ।
मेलयित्वा द्वादशान्ते स्थापयेत्परमेश्वरि ॥ १,२.१०१ ॥
यंबीजेनात्मनो देहं मूलाधाराद्विशोषयेत् ।
षडाधाराणि निर्भिद्य यावत्ब्रह्मबिलं प्रिये ॥ १,२.१०२ ॥
रं बीजेन दहेद्देहं सर्वमाप्लावयेत्ततः ।
वंबीजेन द्रवीभूतं ब्रह्मरन्ध्रेन्दुमण्डलात् ॥ १,२.१०३ ॥

स्यन्दमानामृतेनैव तनुमाप्लावयेच्छिवे ।
आकाशाद्वायुमादद्यात्तस्माद्वह्निं समाहरेत् ॥ १,२.१०४ ॥
वह्नेरापः समादेयास्ताभ्यो भूमिं समाहरेत् ।
एवं पञ्च च भूतानि स्वस्वस्थाने नियोजयेत् ॥ १,२.१०५ ॥
वामकुक्षिस्थितं पापपुरुषं कृष्णरूपिणम् ।
ध्यायेत्तं निर्गतं देवि खड्गचर्मधरं परम् ॥ १,२.१०६ ॥
न्यासं रसाङ्कुशेनैव कृत्वाङ्गुलिहृदादिषु ।

ऐं ह्रीं श्रीं क्ष्मौं क्ष्मं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः फट्रसेश्वराय महाकालभैरवाय शिखायै वषट् ।
रौद्ररूपाय कृष्णपिङ्गललोचनाय अवतर २ अवतारय २ जल्प २ जल्पय २ शुभाशुभं कथय २ कथापय २ मम महारक्षां कुरु कुरु कारय २ मम रससिद्धिं देहि देहि १८८८ ।
महाकालभैरवाय हृदयाय नमः ।
पूर्ववन्महाबलभैरवाय शिरसे स्वाहा ।
पूर्ववतघोरभैरवाय शिखायै वषट् ।
पूर्ववत्वज्रवीरभैरवाय कवचाय हुम् ।
पूर्ववत्क्रोधभैरवाय नेत्रत्रयाय वौषट् ।
पूर्ववत्कालभैरवाय अस्त्राय फट् ।
एवमङ्गुलिन्यासः ।

प्रतिबीजैः समुच्चार्य चतुर्थं रसांकुशम् ॥ १,२.१०७ ॥
हृदादिपञ्चस्थानेषु विन्यसेद्बीजपञ्चकम् ।
ततश्चास्त्राय फडिति चोटिकां दिक्षु दर्शयेत् ॥ १,२.१०८ ॥
मातृकां च कलान्यासं पाज्योन्यासं च कोलकम् ।
प्रकुर्वीत ततो देवि चान्तर्यजनमाचरेत् ॥ १,२.१०९ ॥
कुम्भकेन हृदम्भोजे सम्फुल्लं विदधाति हि ।
हृत्पद्मकर्णिकायां च रसमूर्तिं च चिन्तयेत् ॥ १,२.११० ॥
मानसैर्गन्धपुष्पाद्यैरुपचारैः प्रपूजयेत् ।
स्वदेहं गन्धपुष्पाद्यैरलंकुर्याद्यथासुखम् ॥ १,२.१११ ॥
अन्तर्यजनमेवं स्याद्बहिर्यजनमाचरेत् ।
अस्त्रेण लिङ्गं सम्प्रोक्ष्य लिङ्गशुद्धिं विधाय च ॥ १,२.११२ ॥
वस्त्रेन तोयेन पूरितां वर्धनीं प्रिये ।
दक्षपार्श्वे संनिवेश्य पूजयेत्तां विधानतः ॥ १,२.११३ ॥
पीठे सिन्दूररजसा विदध्याच्चतुरश्रकम् ।
षट्कोणं विलिखेत्तस्मिनृजुं स्वर्णशलाकया ॥ १,२.११४ ॥
वसुपत्रं चाष्टपत्रं सचतुर्द्वारभूगृहम् ।
चतुरश्रं बहिर्भागे दिक्पालान्पूजयेत्प्रिये ॥ १,२.११५ ॥
नन्दिनं च महाकालं भृङ्गिं रिटिं महाबलम् ।
कुम्भकर्णं च सुग्रीवं भृङ्गकं च दृढायुधम् ॥ १,२.११६ ॥
चतुर्द्वारे तु विन्यस्य द्वौ द्वौ प्रागादिपूजितौ ।
रुक्मं रौप्यं ताम्रसीसं वङ्गकान्तशठं ह्ययः ॥ १,२.११७ ॥
प्रागादिद्वार्षु सम्पूज्य क्रमाद्द्वे द्वे महेश्वरि ।
भूगृहाभ्यन्तरे प्राच्यां शुक्रमग्नौ ग्रहं यजेत् ॥ १,२.११८ ॥
दक्षिणस्यां यजेद्रुद्रमासुरे च समीरणम् ।
पश्चिमस्यां शिवं वह्निं वायव्यामुत्तरे ह्युमाम् ॥ १,२.११९ ॥
यजेत्पावकमैशान्यां ततश्चाष्टदलाग्रके ।

प्रागादौ गन्धकं तालं कासीसं च मनःशिलाम् ॥ १,२.१२० ॥
कंकुष्ठं माक्षिकं चैव नृपावर्तं च गैरिकम् ।
लेपिका क्षेपिका चैव क्रामिका रञ्जिका तथा ॥ १,२.१२१ ॥
लोहटी बन्धकारी च भूचरी मृत्युनाशिनी ।
विभूतिः खेचरी चैव दश दूत्यः क्रमेण च ॥ १,२.१२२ ॥
पूज्यास्त्वष्टदले पद्मे ह्यूर्ध्वाधस्ताद्दलेषु च ।
माणिक्यमुक्तावैडूर्यनीलगारुडविद्रुमाः ॥ १,२.१२३ ॥
गोमेदः पुष्परागश्च मणयः सर्वसिद्धिदाः ।
द्वितीयवसुपत्रस्य दलाग्रेषु प्रपूजयेत् ॥ १,२.१२४ ॥
अष्टादशभुजा रुद्राः पञ्चवक्त्रास्त्रियम्बकाः ।
चन्द्रार्धशोभिमकुटाः नीलग्रीवा वृषध्वजाः ॥ १,२.१२५ ॥
स्वस्ववर्णधराः सर्वे त्वष्टविद्येश्वरास्तु ते ।
पूजनीया महेशानि द्वितीयेऽष्टदलाम्बुजे ॥ १,२.१२६ ॥
रसकं विमलं ताप्यं चपलं तुत्थमञ्जनम् ।
षट्कोणस्य दलाग्रेषु सख्यः स्युः सर्वसिद्धिदाः ॥ १,२.१२७ ॥
वज्रवैक्रान्तवज्राभ्रकान्तपाषाणटङ्कणम् ।
भूनागः शक्तयश्चैताः षडस्रेषु प्रपूजयेत् ॥ १,२.१२८ ॥
हिंगुलं सस्यकं चैव शिलाजत्वग्निजारकम् ।
तत्कर्णिकायां पूर्वादौ पराशक्तिचतुष्टयम् ॥ १,२.१२९ ॥
हिंगुलं मालिनी शक्तिः परा शक्तिश्च सस्यकम् ।
शिलाजत्वपरा शक्तिरग्निजारः परापरा ॥ १,२.१३० ॥
प्रणवादिनमोऽन्तैश्च तत्तन्नामपुरःसरम् ।
सचतुर्थ्या यजेदेतान्नसावरणसंस्थितान् ॥ १,२.१३१ ॥
मध्ये तु दिव्यशक्तीनां पूजयेद्रसभैरवम् ।
सप्तविंशतिनिष्के तु द्राविते शुद्धहाटके ॥ १,२.१३२ ॥
नवनिष्कं सूतराजं विन्यसेच्चैकमानसः ।
मधूच्छिष्टकृते यन्त्रे लिङ्गाकारे सुलक्षणे ॥ १,२.१३३ ॥
निष्टप्ते हाटके सूतं प्रतप्ते प्रक्षिपेच्छिवे ।
मुहूर्तात्स्वाङ्गशीतं तं रसलिङ्गं पयोऽन्तरे ॥ १,२.१३४ ॥
स्थापयेत्पुनरादाय ह्युपरिस्थं मलं हरेत् ।
संघृष्य च समीकृत्य लिङ्गं संप्रोक्षयेत्ततः ॥ १,२.१३५ ॥
एवं रौप्यादिलोहैर्वा व्यस्तैर्वाथ समस्तकैः ।
अभ्रकादिमसत्त्वैर्वा लिङ्गं कुर्यात्स्वशक्तितः ॥ १,२.१३६ ॥
रसलिङ्गं द्विधा प्रोक्तं सकलं निष्कलं प्रिये ।
पूर्वोक्तं सकलं लिङ्गं निष्कलं केवलो रसः ॥ १,२.१३७ ॥
बुभुक्षूणां हि सकलं निष्कलं मोक्षमिच्छताम् ।
रसलिङ्गं हेमबद्धं ब्रह्मविष्णवीशवह्नयः ॥ १,२.१३८ ॥
अपूजयन् रूप्यबद्धं गणेशस्कन्दनन्दिनः ।
त्वयाभ्रसत्वसम्बद्धं रसलिङ्गं प्रपूजितम् ॥ १,२.१३९ ॥
ताम्रबद्धं रमावाणीकुबेरेन्द्रजलाधिपाः ।
कान्तबद्धं यममरुन्नैरृताः समपूजयन् ॥ १,२.१४० ॥
वङ्गबद्धं सिद्धसाध्यविद्याधरमहर्षयः ।
नागबद्धं नागवसुगन्धर्वोरगकिन्नराः ॥ १,२.१४१ ॥
तीक्ष्णबद्धं भद्रकालीयक्षभूतपिशाचकाः ।
मुण्डबद्धं च दुर्गाम्बा चाप्सरोगुह्यकासुराः ॥ १,२.१४२ ॥

निष्कलं रसलिङ्गं तु भृङ्ग्याद्या योगिनोऽर्चयन् ।
उक्तानि रसलिङ्गानि मानवाः फलकाङ्क्षिणः ॥ १,२.१४३ ॥
पूजयेयुः प्रयत्नेन नित्यं सर्वार्थसिद्धये ।
उक्तानां रसलिङ्गानां प्राणसंस्थापनं शृणु ॥ १,२.१४४ ॥
प्राणानायम्य विधिवत्प्राणशक्तिं स्मरेच्छिवे ।
शोणिताम्भोधिमध्यस्थरक्ताम्भोजासनां पराम् ॥ १,२.१४५ ॥
रक्तांबरधरां रक्तां नानारत्नकिरीटिनीम् ।
विमलेन्दुकलाजूटां रविवह्नीन्दुलोचनाम् ॥ १,२.१४६ ॥
कर्णताटङ्ककिरणारुणीकृतकपोलकाम् ।
श्रीपर्णीकुसुमाकारनासावंशविराजिताम् ॥ १,२.१४७ ॥
प्रवालपद्मरागाभबिम्बाधरविराजिताम् ।
कुरुविन्ददलाकारश्लक्ष्णदन्ताभिशोभिताम् ॥ १,२.१४८ ॥
शङ्खाभिरामकण्ठस्थमुक्ताहारविराजिताम् ।
अङ्गुलीयककेयूरकटकादिविभूषिताम् ॥ १,२.१४९ ॥
पाशाङ्कुशेक्षुकोदण्डपुष्पबाणाभयप्रदाम् ।
रुधिरापूर्णपात्रेण शोभमानकराम्बुजाम् ॥ १,२.१५० ॥
पीनस्तनतटोद्भासिहारकुङ्कुममण्डिताम् ।
काञ्चीमञ्जीरकटकपादाङ्गुलिविभूषिताम् ॥ १,२.१५१ ॥
प्राणप्रतिष्ठां लिङ्गस्य कुर्वीतैकाग्रमानसः ।
सृणिं मञ्च पाशश्च हंसः सोऽहमिति प्रिये ।
अमुष्य लिङ्गस्य प्राण इह प्राणः ।
अमुष्य लिङ्गस्य जीव इह स्थितः ।
अमुष्य लिङ्गस्य सर्वेन्द्रियाणि वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणा इहागत्य सुखं चिरं तिष्ठन्तु सोऽहं हंसः स्वाहा ।
यरलवशषसहोम् ।
क्रों ह्रीमाम् ।
एतन्मन्त्रं समुच्चार्य प्राणानावाहयेत्प्रिये ।
अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ।
ऋग्यजुःसामानि छन्दांसि ।
श्रीपराशक्तिर्देवता ।
आं बीजम् ।
ह्रीं शक्तिः क्रों कीलकम् ।
अमुष्य लिङ्गस्य प्राणप्रतिष्ठायां विनियोगः ।
आसनं पूजयेत्पूर्वं गन्धपुष्पाक्षतादिभिः ॥ १,२.१५२ ॥
हामाधारशक्त्यै नमः ।
ह्रीं कूर्माय नमः ।
हूमनन्ताय नमः ।
हैं पृथिव्यै नमः ।
ह्रौं कन्दाय नमः ।
अङ्कुराय नालाय कर्णिकेभ्यः दलेभ्यः केसरेभ्यः कर्णिकायै तन्मध्ये धर्माय ज्ञानाय वैराग्याय ऐश्वर्याय अधर्माय अज्ञानाय अवैराग्याय अनैश्वर्याय नमः ।
हृदम्भोजस्थितं देवं सह देव्या महेश्वरि ।
आवाहयेत्सावरणं स्वाङ्गशक्तिसमन्वितम् ॥ १,२.१५३ ॥
पीठे संस्थापयेल्लिङ्गं मूलेनार्घ्यं कुशोदकैः ।
पाद्यं गन्धोदकैर्दद्याथैमेनाचमनं भवेत् ॥ १,२.१५४ ॥
रत्नोदकैर्भवेत्स्नानं सर्वं मूलेन शाम्भवि ।

एकादशेन रुद्रेण पवमानेन पार्वति ॥ १,२.१५५ ॥
चमकैः पुरुषसूक्तैश्च फलैः पञ्चामृतैरपि ।
नालिकेरेक्षुसलिलैः सुगन्धोदकवारिणा ॥ १,२.१५६ ॥
संस्नाप्य च ततो लिङ्गं पीठे संस्थापयेच्छिवे ।
लिङ्गस्य परितः ओं वामदेवाय नमः ज्येष्ठाय रुद्राय कालाय कलविकरणाय बलाय बलविकरणाय बलप्रमथनाय सर्वभूतदमनाय इत्यष्टासु दिक्षु मनोन्मनाय इति शिवसन्निधौ पुष्पैरभ्यर्च्य ।
ओं ह्रां हृदयाय नमः ।
ओं ह्रीं शिरसे स्वाहा ।
ओं ह्रूं शिखायै वषट् ।
ओं ह्रैं कवचाय हुम् ।
ओं ह्रौं नेत्रत्रयाय वौषट् ।
ओं ह्रः अस्त्राय फट् ।
ह्रामीशानाय नमः ।
ह्रीं तत्पुरुषाय नमः ।
ह्रूमघोराय नमः ।
ह्रैं वामदेवाय नमः ।
ह्रौं सद्योजाताय नमः ।
मूलमन्त्रेण देवाय दद्यात्पुष्पाञ्जलिं प्रिये ॥ १,२.१५७ ॥
मूलमन्त्रषडङ्गेन न्यासं कुर्याच्छिवस्य च ।
लिङ्गस्य दक्षिणे भागे ऋगादीन्निगमानपि ॥ १,२.१५८ ॥
ब्रह्माणं पृथिवीं तोयं विष्णुं रुद्रं हुताशनम् ।
ईश्वरं पवनं चैवमाकाशं च सदाशिवम् ॥ १,२.१५९ ॥
श्रीकण्ठममृतांशुं च भैरवं भास्करं तथा ।
परं शिवं परात्मानं पूजयेन्मतिमान् क्रमात् ॥ १,२.१६० ॥
लिङ्गस्य वामपार्श्वे तु ब्राह्म्यादीः सप्त मातरः ।
महालक्ष्मीं महाकालीं दुर्गां स्कन्दविनायकौ ॥ १,२.१६१ ॥
योगिन्यः क्षेत्रपालाश्च शक्तयश्चादिपीठकाः ।
ओड्याणशक्तिर्जालंध्री तथा पूर्णा गिरिः प्रिये ॥ १,२.१६२ ॥
कामेश्वरीति संपूज्या रुद्रशक्तिः सुरार्चिते ।
लोपामुद्रा कुब्जिका च कालसंकर्षणी तथा ॥ १,२.१६३ ॥
मधुरादिरसा गन्धाः सर्वधान्यानि पार्वति ।
दिव्यौषध्यः सुधा हाला विषं चर्मादिधातवः ॥ १,२.१६४ ॥
इन्द्रियाणि मनो बुद्धिरहङ्कारश्च चेतनः ।
शब्दाद्या विषयाः पूज्या देहाङ्गानि च शाम्भवि ॥ १,२.१६५ ॥
लिङ्गस्य पश्चिमे भागे समुद्राः सरितो नदाः ।
पर्वता मेरुमुख्याश्च भास्कराद्या नव ग्रहाः ॥ १,२.१६६ ॥
ज्योतिश्चक्रं ध्रुवश्चैव शिशुमारः प्रजापतिः ।
कलाः काष्ठाश्च घटिका मुहूर्ताः प्रहरा दिनम् ॥ १,२.१६७ ॥
रात्रिः पक्षश्च मासश्च ऋतुकालायनानि च ।
संवत्सरा युगाः कल्पा दिशस्तारास्तिथिः शिवे ॥ १,२.१६८ ॥
पातालानि च नागेन्द्रास्तथा कालाग्निरुद्रकाः ।
यक्षाः पिशाचभूताश्च राक्षसा दनुजास्तथा ॥ १,२.१६९ ॥
गुह्यका दुष्टवेताला राजयक्ष्मादयो गदाः ।
मन्त्राः शस्त्राणि चास्त्राणि सम्पूज्य क्रमशः प्रिये ॥ १,२.१७० ॥
लिङ्गस्य पूर्वभागे तु संपूज्या गुरुपङ्क्तयः ।

सिद्धाः साध्याश्च मुनयो योगिनो ब्रह्मवादिनः ॥ १,२.१७१ ॥
विद्याधराः किन्नराश्च गन्धर्वश्चाश्विनौ तथा ।
वसवोऽप्सरसां मुख्या शृङ्गारादिरसा नव ॥ १,२.१७२ ॥
गीतं नृत्तानि तद्भेदाः काश्यपाद्यास्तथा दश ।
रुद्राः समनवः पूज्या भास्करा वह्नयस्त्रयः ॥ १,२.१७३ ॥
विश्वे देवाश्च पितरो मातरः पितृदेवताः ।
कुलाचार्या रसाचार्याः पूर्वाचार्याः शिवार्चकाः ॥ १,२.१७४ ॥
मत्स्यादिदशजन्मानि जिनो लोकायतस्तथा ।
नरकाद्याः सर्वलोका गरुडा गरुडाण्डकाः ॥ १,२.१७५ ॥
ब्रह्माण्डाः खेचराः सर्वे भूचराश्च जलेचराः ।
सम्पूज्य देवताः सर्वाः प्रणवादिनमोऽन्तकैः ॥ १,२.१७६ ॥
तत्तन्नामचतुर्थ्यन्तैः पुष्पगन्धाक्षतैः प्रिये ।
देवाय वस्त्रयुगलमुपवीतद्वयं तथा ॥ १,२.१७७ ॥
मधुपर्कं दिव्यगन्धमक्षतान् कुसुमानि च ।
सदा कैतकवर्ज्यानि दिव्यानि विदलानि च ॥ १,२.१७८ ॥
तत्पुष्पाणि च कह्लारकमलोत्पलकैरवम् ।
जातीचम्पकपुन्नागपूगनारङ्गकैः ॥ १,२.१७९ ॥
मागधीमाधवीमल्लीयूथिकाप्रभृतीनि च ।
दमनी मरुवं चैव रसेन्द्राय समर्पयेत् ॥ १,२.१८० ॥
धूपं दशाङ्गं दीपं चापूपान्नं घृतपायसम् ।
सषड्रसानि शाकानि शुद्धगन्धोत्तमान्वितम् ॥ १,२.१८१ ॥
लेह्यं चोष्यादि नैवेद्यं पारदेन्द्राय दर्शयेत् ।
हस्तप्रक्षालनं देवि दद्याद्गन्धोदकेन च ॥ १,२.१८२ ॥
सुवासितानि पूगानि घनसारयुतानि च ।
अवदातानि साग्राणि नागवल्लीदलानि च ॥ १,२.१८३ ॥
मुक्ताफलोद्भवं चूर्णं ताम्बूलं च समर्पयेत् ।
दर्पणं चामरद्वन्द्वं छत्रं नृत्तं च गीतकम् ॥ १,२.१८४ ॥
उपचारेषु सर्वेषु दद्यादाचमनं प्रिये ।
सर्वोपचारान्मूलेन दद्यात्स्तोत्रं जपेच्छिवे ॥ १,२.१८५ ॥
रसेन्द्रभैरवं देवं ध्यात्वा देवीं रसांकुशाम् ।
माहेश्वरांश्च विनतां गन्धपुष्पादिभिर्यजेत् ॥ १,२.१८६ ॥
अङ्गुष्ठानामिकाभ्यां च दद्याद्गन्धोत्तमान्वितम् ।
बिन्दुमूलेन देवाय देव्यै च गुरुपङ्क्तये ॥ १,२.१८७ ॥
क्रमादावरणस्थेभ्यो देवीभ्योऽपि च तर्पयेत् ।
ह्रीमानन्दशिवमूर्तिमाराधयामि ।
ह्रीं परानन्दशिवमूर्तिमाराधयामि ।
ह्रीं परापरानन्दशिवमूर्तिमाराधयामि ।
ह्रीमानन्दसिद्धमूर्तिमाराधयामि ।
ह्रीं परानन्दसिद्धमूर्तिमाराधयामि ।
ह्रीं परापरानन्दसिद्धमूर्तिमाराधयामि ।
क्लीमानन्दगुरुमूर्तिमाराधयामि ।
क्लीं परानन्दगुरुमूर्तिमाराधयामि ।
क्लीं परापरानन्दगुरुमूर्तिमाराधयामि ।
तेभ्यो दत्त्वा प्रसादं च तैरनुज्ञापितः स्वयम् ॥ १,२.१८८ ॥
कुण्डल्यामात्मतत्त्वं च विद्यातत्त्वं च नाभिगम् ।

हृदये शिवतत्त्वं च सर्वतत्त्वं हि तालुगम् ॥ १,२.१८९ ॥
त्रितत्त्वमेवं संचिन्त्य प्रसादं च समन्त्रकम् ।
ततः प्रज्वलितं स्मृत्वा ज्योतिरन्तर्गतं प्रिये ॥ १,२.१९० ॥
स्वीकुर्वीत प्रसादं च यथेष्टं सुरसेविते ।
प्रीणन्ति पितरो हर्षान्मूर्छया सर्वदेवताः ॥ १,२.१९१ ॥
अज्ञाना [... औ३ Zएइछेन्झ्] वप्रीतिः स एवाहं न संशयः ।
[रसेन्द्रबलिक्रमः]
गन्धोत्तमौदनं शुद्धक्षतजं च घृतं मधु ॥ १,२.१९२ ॥
संयोज्य पञ्चखण्डं च कृत्वा दद्यात्क्रमेण च ।
दक्षिणोत्तरपूर्वासु पश्चिमायां च मध्यमे ॥ १,२.१९३ ॥
तांस्तान्मन्त्रान्समुच्चार्य बलिं दद्यात्ततो नरः ।
प्रणवं मायां कमलां देवीं पुत्रप्रदं ततः ॥ १,२.१९४ ॥
ततो वटुकनाथाख्यं कपिलं जटाभारभासुरं च ततः पिङ्गल त्रिणेत्र इमां बलिं पूजां गृहृण गृहृण स्वाहा ।
ओं ह्रीं श्रीं सिद्धयोगिनीभ्यः सर्वमातृभ्यो नमः ।
ओं ह्रीं श्रीं सर्वभूतेभ्यः सर्वभूतपतिभ्यो नमः ।
ओं ह्रीं श्रीं स्थानक्षेत्रपाल इमां बलिं पूजां गृहृण गृहृण स्वाहा ।
ओं ह्रीं श्रीं रसेन्द्र क्षेत्रपाल राजराजेश्वर इमां बलिं पूजां गृहृण गृहृण स्वाहा ।
बलिं दद्यादिति शिवे सर्वविघ्नोपशान्तये ।
ततश्चाष्टोत्तरशतं जपेन्मूलं रसाग्रतः ॥ १,२.१९५ ॥
ततः स्तोत्रं जपेद्देवि रसभैरवतुष्टये ।
संतुष्टाः सर्वदेवाः स्युः तुष्टे तु रसभैरवे ॥ १,२.१९६ ॥
अयं नित्यार्चनविधिः प्रोक्तः सर्वत्र दुर्लभः ।
[पारदपूजाफलम्]
विद्धि मां पारदं देवि तत्स्मर्ता मत्समः प्रिये ॥ १,२.१९७ ॥
पारदस्त्वधिको मत्तो मदीयत्वाच्च सारतः ।
रसस्य स्मरणं पुण्यं दर्शनं स्पर्शनं तथा ॥ १,२.१९८ ॥
पूजनं भक्षणं दानं षोढा पुण्यमुदीरितम् ।
सात्त्विकं राजसं चैव तामसं त्रिविधं वपुः ॥ १,२.१९९ ॥
सात्त्विकं मुक्तिदं शुभ्रं बालं द्विभुजमण्डितम् ।
पूर्णपात्रं सूक्ष्मदण्डं द्विनेत्रं किङ्किणीस्रजम् ॥ १,२.२०० ॥
राजसं भुक्तिदं रक्तं किरीटशशिशेखरम् ।
चतुर्भुजं च तरुणं नीलकण्ठं त्रिलोचनम् ॥ १,२.२०१ ॥
सर्वैश्वर्यप्रदं ध्यायेत्शूलपात्रवराभयम् ।
तामसं कृष्णवर्णं च ज्वलदूर्ध्वशिरोरुहम् ॥ १,२.२०२ ॥
अष्टादशभुजं त्र्यक्षं पूर्वोक्तं चिन्तयेद्रसम् ।
सर्वसिद्धिप्रदं देवि सर्वकामफलप्रदम् ॥ १,२.२०३ ॥
स्मरणं रसराजस्य सर्वोपद्रवनाशनम् ।
हृदम्भोजस्थितं ध्यायेन्नश्यन्त्येनांसि भैरवि ॥ १,२.२०४ ॥
दर्शनं पारदेन्द्रस्य हन्ति पापं त्रिकालजम् ।
सेतुकेदारपर्यन्तदिव्यलिङ्गौघदर्शने ॥ १,२.२०५ ॥
यत्पुण्यं लभते मर्त्यः तत्कोटिगुणितं भवेत् ।
पृथिव्यां सर्वतीर्थेषु सागरान्तेषु दर्शनात् ॥ १,२.२०६ ॥
स्नानपानादिभिः पुण्यं तत्कोटिगुणितं भवेत् ।
गोहत्यानियुतं देवि भ्रूणहत्याशतानि च ॥ १,२.२०७ ॥
ब्रह्महत्यासहस्राणि नश्यन्ति रसदर्शनात् ।

गवां कोटिप्रदानेन स्वर्णकोटिशतेन च ॥ १,२.२०८ ॥
अश्वमेधसहस्रेण यत्पुण्यं तच्च दर्शनात् ।
रसस्य स्पर्शनं हन्यादगम्यागमनं प्रिये ॥ १,२.२०९ ॥
परद्रव्यापहारं च पापं प्राणिवधार्जितम् ।
सप्तद्वीपे धरण्यां च पाताले गगने दिवि ॥ १,२.२१० ॥
यान्यर्चयति लिङ्गानि तत्पुण्यं रसपूजया ।
स्वायंभुवेषु लिङ्गेषु दिव्येषु कृतपूजया ॥ १,२.२११ ॥
यत्पुण्यं रसलिङ्गस्य पूजया तत्फलं भवेत् ।
योगिनोऽष्टाङ्गनिरता यत्पदं ब्रह्मवादिनः ॥ १,२.२१२ ॥
तत्पदं समवाप्नोति रसलिङ्गस्य पूजया ।
कुंकुमागरुकस्तूरीकर्पूरान्तर्गतं रसम् ॥ १,२.२१३ ॥
मूर्छितं रसलिङ्गाय दद्यादिष्टार्थसिद्धये ।
भक्षणाद्रसराजस्य सर्वपापं विनश्यति ॥ १,२.२१४ ॥
अनादिमायामलिनमात्मानं च विशोषयेत् ।
भवरोगं हरेच्छीघ्रं त्रितापं च विनाशयेत् ॥ १,२.२१५ ॥
रसराजस्य दानेन चतुरब्ध्यन्तमेदिनीम् ।
महामेरुसमं स्वर्णं दत्त्वा यत्तत्फलं भवेत् ॥ १,२.२१६ ॥
ब्रह्मरूपी शुद्धरसो विष्णुरूपी स मूर्छितः ।
भस्मीकृतो रुद्ररूपी बद्धः सूतः सदाशिवः ॥ १,२.२१७ ॥
कामरूपी जलूकाभः कालरूपी च दोषवान् ।
मूर्छितो भस्मितो बद्धः पारदेन्द्रो महेश्वरि ॥ १,२.२१८ ॥
व्याधिमृत्युदरिद्रत्वं हरतेऽसौ कृपाकरः ।
[रसेन्द्रस्तोत्रम्]
ददासि त्वं रसेन्द्राशु शब्दस्पर्शनधूमतः ॥ १,२.२१९ ॥
स्वर्णमर्बुदकोट्यन्तं त्राहि खेचरसिद्धिद ।
नमस्ते कालकालाय नमः सर्वगुणात्मने ॥ १,२.२२० ॥
वलीपलितनाशाय महावीर्यप्रदायिने ।
नमः शस्त्रास्त्रहन्त्रे च मायाम्भोनिधिपारद ॥ १,२.२२१ ॥
पारदेन्द्र नमस्तुभ्यं कामिनीकेलिमन्मथ ।
सुधारूप त्रिदोषघ्न नमस्ते षड्रसात्मने ॥ १,२.२२२ ॥
घनत्वात्पृथिवीरूप द्रवत्वाज्जलरूपिणे ।
तेजोऽधिकत्वात्तेजस्विन् चाञ्चल्याद्वायुरूपिणे ॥ १,२.२२३ ॥
सूक्ष्मत्वाद्रसरूपाय नमस्ते भूतरूपिणे ।
नमस्ते योगयोग्याय प्रसीदामरवन्दित ॥ १,२.२२४ ॥
वेदगोद्विजराजेन्द्रगुरुवीरादिहिंसया ।
सम्भूतक्षयकुष्ठादीन्रोगान्हरसि पावन ॥ १,२.२२५ ॥
नष्टेन्द्रियार्थानज्ञानान् त्राता त्वमसि पारद ।
सर्वौषधीभ्योऽप्यधिको ह्यणुमात्रोपयोगतः ॥ १,२.२२६ ॥
एकोऽपि सर्वदोषघ्नोऽरुचिनाशन ते नमः ।
त्वया सृष्टा महेन्द्राद्याः सुरा ब्रह्मादयः कलाः ॥ १,२.२२७ ॥
चन्द्रार्कग्रहनक्षत्रशिवभैरवशक्तयः ।
ज्ञानाज्ञानगुणा लोका गन्धर्वोरगराक्षसाः ॥ १,२.२२८ ॥
दिव्यौषधानि सर्वाणि सर्वसिद्धिकराण्यपि ।
सूतेन्द्र भवतः श्रीमन् कलां नार्हन्ति षोडशीम् ॥ १,२.२२९ ॥
प्रत्यक्षशम्भो सूतेन्द्र किमन्यैर्भवति स्थिते ।

अणिमादिगुणोपेते नानासिद्धिप्रदायके ॥ १,२.२३० ॥
योगिनो हेममुख्यानि लोहान्यक्षयतां सदा ।
अमृतत्वं प्राप्नुवन्ति सेवया तत्र कोज्वल ॥ १,२.२३१ ॥
दृश्यादृश्यस्वरूपं त्वां भोगमोक्षप्रदं परम् ।
यो न जानाति सूतेन्द्र स मां वेत्ति कथं नरः ॥ १,२.२३२ ॥
गुरुर्माता पिता भ्राता धनं विद्या गतिः सुहृत् ।
रस त्वमेव भूतानां त्वत्तः कोऽन्यो हितंकरः ॥ १,२.२३३ ॥
रसेन्द्र तव योगे च शास्त्रे स्तोत्रे रसायने ।
यस्तु भक्तियुतो लोके स एवाहं न संशयः ॥ १,२.२३४ ॥
ब्रह्मज्ञानेऽपि निष्णातो यस्त्वां निन्दति पारद ।
त्याज्योऽसौ सर्वलोकेषु नैवाहं रक्षितुं क्षमः ॥ १,२.२३५ ॥
यस्त्वां नास्तीति च वदेत्तस्य सिद्धिर्न कुत्रचित् ।
यस्त्वामस्तीति च वदेत्तस्य सिद्धिर्भवेत्सदा ॥ १,२.२३६ ॥
रसेन्द्रं यस्तु लोकेऽस्मिन्कुलीनो वाधमान्वयः ।
संस्कृतं कुरुते सूत त्वामष्टादशकर्मभिः ॥ १,२.२३७ ॥
स पुण्यः स व्रती धन्यः स श्लाघ्यः स च बुद्धिमान् ।
स पुमान्स च सर्वज्ञः स सिद्धः स च दैवतम् ॥ १,२.२३८ ॥
तत्कुलं पावनं भूमिः पुण्या राजा जयान्वितः ।
तत्पुरं सोत्सवं नित्यं कृतार्था च तदम्बिका ॥ १,२.२३९ ॥
तस्य संदर्शनं पुण्यं स्पर्शनं भाषणं तथा ।
प्रत्यक्षादिप्रमाणेन पारद त्वं सदाशिवः ॥ १,२.२४० ॥
त्वत्तो देहादि लोहानि वज्रत्वं यान्ति हेमताम् ।
रसेन्द्र त्वत्प्रसादेन मानिन्यो मृगलोचनाः ॥ १,२.२४१ ॥
चक्रवाकसमोत्तुङ्गपीनवृत्तस्तनोज्ज्वलाः ।
चञ्चला मन्मथासक्ता विद्रुमाधरशोभिताः ॥ १,२.२४२ ॥
शुकतुण्डप्रतीकाशवक्रतीक्ष्णनखाङ्कुराः ।
शिरीषमालासुभुजाः चम्पकस्रक्समप्रभाः ॥ १,२.२४३ ॥
निम्ननाभिसमुद्भूतरोमराजिविराजिताः ।
सर्वाङ्गसौष्ठवाः कान्ताः स्निग्धा वश्या भवन्ति च ॥ १,२.२४४ ॥
सूतेन्द्र शुष्ककाष्ठानां राशिमग्निर्यथा दहेत् ।
तथैव जन्मदारिद्र्यमृत्युदुःखमहामयान् ॥ १,२.२४५ ॥
जारणार्थेऽग्निमध्ये त्वां धारयेत्कति वासरान् ।
तावत्कल्पसहस्राणि शिवलोके सुखं वसेत् ॥ १,२.२४६ ॥
तव कार्येषु सूतेन्द्र किंचिद्द्रव्यं व्ययेन्नरः ।
तेषां ददासि तद्वित्तं कोटिकोटिगुणाधिकम् ॥ १,२.२४७ ॥
परमा पारदी विद्या सर्वलोकेषु दुर्लभा ।
भोगमोक्षप्रदा पुण्या पुत्रारोग्यप्रवर्धनी ॥ १,२.२४८ ॥
ये त्वां निन्दन्ति सूतेन्द्र मार्जालखरवायसाः ।
जम्बूका ऋषभाः श्वानः क्लीबान्धबधिरा जडाः ॥ १,२.२४९ ॥
मूकाः कुब्जाः पङ्गवश्च व्यङ्गा वन्ध्याश्च रोगिणः ।
कैवर्ताः पापकर्माणो जायन्तेऽनेकजन्मसु ॥ १,२.२५० ॥
भवतो निन्दकैः सार्धं भाण्डपक्वान्नमिश्रणम् ।
यः कुर्यादासनं शय्यां भोजनालापसंगतिम् ॥ १,२.२५१ ॥
स पापिष्ठो भवेत्त्याज्यः सर्वधर्मबहिष्कृतः ।
इति स्तोत्रं मया प्रोक्तं पारदेन्द्रस्य भैरवि ॥ १,२.२५२ ॥

यः पठेत्शृणुयाद्भक्त्या त्रिसन्ध्यं रससिद्धये ।
ब्रह्महत्यादिपापैश्च पातकैरुपपातकैः ॥ १,२.२५३ ॥
त्रिकर्मकलिभिर्देवि मुच्यते नात्र संशयः ।
घोरे युद्धे महारण्ये दिग्भ्रमे शत्रुसंकटे ॥ १,२.२५४ ॥
नदीप्रतरणे देवि चोरव्याघ्रादिसङ्कटे ।
जपेत्स्तोत्रमिदं देवि ध्यात्वा श्रीरसभैरवम् ॥ १,२.२५५ ॥
इति स्तुत्वा सूतराजं सर्वं कर्म समर्पयेत् ।
रसो दाता रसो भोक्ता रसः कर्ता च कारणम् ॥ १,२.२५६ ॥
रसो होता च हव्यं च सर्वव्यापी रसः सदा ।
अनेनैव च मन्त्रेण रसेन्द्राय समर्पयेत् ॥ १,२.२५७ ॥
ततो न्यासं च मूलेन कुर्याद्ध्यात्वा च पूर्ववत् ।
संहारमुद्रां कृत्वाथ वहेन्नद्यां रसेश्वरम् ॥ १,२.२५८ ॥
हृत्पद्मे स्थापयेद्देवं साङ्गावरणशक्तिकम् ।
शिवोऽहमिति सद्भावं चिन्तयेद्रसदेशिकः ॥ १,२.२५९ ॥
पूजास्थानं च संमार्ज्य प्रोक्षयेदुदकेन च ।
ततो होमालयं प्राप्य समाचम्य च देशिकः ॥ १,२.२६० ॥
शालायामग्निदिग्भागे योनिकुण्डे त्रिमेखलम् ।
दर्भैः प्रागुदगग्रैश्च परिस्तीर्णं यथाविधि ॥ १,२.२६१ ॥
न्यासं मूलेन संकल्प्य प्राणायामं विधाय च ।
पञ्चभूसंस्कृतं कृत्वा स्वस्त्रिया वा द्विजेन वा ॥ १,२.२६२ ॥
आनीय वह्निं निक्षिप्य कुण्डे प्रज्वालयेत्ततः ।
वह्निं पिङ्गजटाजूटं त्रिनेत्रं शुक्लवाससम् ॥ १,२.२६३ ॥
रक्ताम्भोजस्थितं देवं माल्याभरणभूषितम् ।
सप्तहस्तं चतुःशृङ्गं द्विशीर्षं च त्रिपादकम् ॥ १,२.२६४ ॥
त्रिधा बद्धं च ऋषभं शक्त्याद्यायुधधारिणम् ।
ध्यात्वा तस्यार्घ्यपाद्यादि कुर्यात्सर्वोपचारकम् ॥ १,२.२६५ ॥
गन्धाक्षतसुपुष्पैश्च पूजयेज्जातवेदसम् ।
तस्मिन्नावाहयेद्देवं संचिन्त्य रसभैरवम् ॥ १,२.२६६ ॥
न्यासं देवस्य कुर्वीत मूलमन्त्रेण होमयेत् ।
तिलाज्यव्रीहिभिर्मन्त्रं शतमष्टोत्तरं प्रिये ॥ १,२.२६७ ॥
अष्टाविंशति वा कुर्यात्मूलात्पूर्वाहुतिं हुनेत् ।
प्राणायामं ततो न्यासं कृत्वा च हृदि धारणम् ।
एवं नित्यार्चनविधिः प्रोक्तस्तव सुरार्चिते ॥ १,२.२६८ ॥

आक्, १, ३
[रसदीक्षाक्रमः]
अथ दीक्षां प्रवक्ष्यामि सर्वसिद्धिप्रदायिनीम् ।
सा च पञ्चविधा प्रोक्ता समयादिविभेदतः ॥ १,३.१ ॥
समया प्रथमा दीक्षा साधकाख्या द्वितीयका ।
निर्वाणाख्या तृतीया च चतुर्थ्याचार्यसंज्ञका ॥ १,३.२ ॥
पञ्चमी सिद्धसंज्ञा च प्रायशो दुर्लभा नृणाम् ।
पूर्वोक्तलक्षणोपेतः शिष्यो भक्तिनतः शुचिः ॥ १,३.३ ॥
गुरुं प्रणम्य चाष्टाङ्गं स्तुत्वा च बहुधा ततः ।
अनुगृह्णीष्व मे दीक्षामिति विज्ञापयेद्गुरुम् ॥ १,३.४ ॥

दीक्षां च विधिवत्प्राप्य शिष्यः सर्वार्थदृग्भवेत् ।
[दीक्षायोग्याः शुभतिथ्यादयः]
अश्विनीमूलरेवत्यो मृगः पुण्यः पुनर्वसुः ॥ १,३.५ ॥
रोहिणी श्रवणो मैत्रं हस्तः स्यादुत्तरात्रयम् ।
मघाश्विनी श्रेष्ठतमा दीक्षाकर्मणि तारकाः ॥ १,३.६ ॥
तृतीया पञ्चमी चैव सप्तमी च चतुर्दशी ।
अष्टमी पौर्णमासी च दशमी च त्रयोदशी ॥ १,३.७ ॥
एतास्तु तिथयो मुख्याः सौम्येन्दुगुरुभार्गवाः ।
आदित्य इति वारेषु रसदीक्षा सुशोभना ॥ १,३.८ ॥
[समयादीक्षाक्रमः]
शुक्लपक्षे सुयोगे च करविष्टिविवर्जिते ।
चन्द्रताराबलोपेतविषुवायनसंक्रमे ॥ १,३.९ ॥
ग्रहणे शिवरात्रे च जन्मर्क्षे सुमुहूर्तके ।
शुभग्रहे सिद्धयोगे दद्याद्दीक्षां गुरूत्तमः ॥ १,३.१० ॥
रसशालां प्रविश्याथ सर्वोपकरणोज्ज्वलाम् ।
पुष्पमालासमाकीर्णामुत्तोरणपताकिनीम् ॥ १,३.११ ॥
नित्यपूजाग्निकार्यं च कृत्वा दीक्षाक्रमं भजेत् ।
देवस्य दक्षिणे पार्श्वे विस्तरे तण्डुलान् श्रितान् ॥ १,३.१२ ॥
चतुरश्रं च तन्मध्ये क्षिपेत्प्रस्थं सुतण्डुलम् ।
तदूर्ध्वं विन्यसेत्कुम्भं सितसूत्रेण वेष्टितम् ॥ १,३.१३ ॥
वासोभ्यां वेष्टितं सूतपञ्चरत्नसमन्वितम् ।
पञ्चमृत्पल्लवत्वग्भिः पावितं जलपूरितम् ॥ १,३.१४ ॥
दूर्वागन्धोत्तमतिलहेमदर्भाक्षतान्वितम् ।
शिवसंज्ञमिदं कुम्भं शिवरूपं विचिन्तयेत् ॥ १,३.१५ ॥
तद्वामभागे संस्थाप्य वर्धनीसंज्ञकं घटम् ।
शक्तिरूपं च पूर्वोक्तसर्वद्रव्यसमन्वितम् ॥ १,३.१६ ॥
परितः सर्वतोभद्रं श्रीगौरीतिलकं लिखेत् ।
नन्द्यावर्तं स्वस्तिकं च पञ्चवर्णविराजितम् ॥ १,३.१७ ॥
प्रक्षाल्य पादौ पाणी च समाचम्य गुरूत्तमः ।
निजासनं समासाद्य प्राणायामत्रयं तथा ॥ १,३.१८ ॥
शिष्यस्यास्यायुरारोग्यसंपत्संतानवृद्धये ।
मुक्तये चाष्टसिद्ध्यै च संकल्प्याभ्यर्चयेच्छिवम् ॥ १,३.१९ ॥
गन्धपुष्पाक्षैर्धूपैर्दीपैर्नैवेद्यदर्शनैः ।
शिवकुम्भं वर्धनीं च पूजयेत्सोपचारकम् ॥ १,३.२० ॥
रसाङ्कुशीं मूलमन्त्रं प्रजपेच्च सहस्रकम् ।
तद्दशांशं हुनेत्कुण्डे त्रिकोणे लक्षणान्विते ॥ १,३.२१ ॥
फलं त्रिमधुसंयुक्तं ततो गन्धोत्तमान्वितम् ।
क्रमादावृतिदेवांश्च चतुर्थ्या स्वस्वनामकम् ॥ १,३.२२ ॥
स्वाहान्तं प्रणवादिं च समुच्चार्य हुनेद्धविः ।
शिवत्रयं पुरा देवि ततः सिद्धत्रयं यजेत् ॥ १,३.२३ ॥
ततो गुरुत्रयं देवि कुलवृद्धान् गुरूत्तमः ।
योगिनीं पूजयित्वा तु लब्धानुज्ञो गुरुस्ततः ॥ १,३.२४ ॥
स शक्तिमानन्दशिवमूर्तिमाराधयामि च ।
तथा परानन्दशिवमूर्तिमाराधयामि च ॥ १,३.२५ ॥
एवं त्रिसिद्धमूर्तिं च श्रीबीजसहितं यजेत् ।

एवं त्रिगुरुमूर्तिं च मारबीजयुतं यजेत् ॥ १,३.२६ ॥
तत्त्वत्रयं गृहीत्वा च पुनर्न्यासं समाचरेत् ।
स्वयं शिवतनुर्भूत्वा शिवोऽहमिति भावयेत् ॥ १,३.२७ ॥
हृष्टं शक्तियुतं शिष्यं शिवद्रष्टा विलोकयेत् ।
स्ववामपार्श्वे संस्थाप्य तन्मूर्धनि विनिक्षिपेत् ॥ १,३.२८ ॥
मूलाभिमन्त्रितं भस्म तन्नेत्रं वस्त्ररोधितम् ।
कृत्वा तन्मूर्ध्नि संप्रोक्ष्य शिववर्धनिवारिणा ॥ १,३.२९ ॥
त्रिधा स्वदक्षिणे हस्ते शिवं सावरणं यजेत् ।
विज्ञेयः शिवहस्तोऽयं भवपाशनिकृन्तनः ॥ १,३.३० ॥
अङ्कुशीमूलमन्त्रं च त्रिवारं च समुच्चरेत् ।
शिष्यदक्षिणकर्णे च कुर्यान्मन्त्रोपदेशकम् ॥ १,३.३१ ॥
पूर्वं गणपतेर्मन्त्रं क्षेत्रपालमनुं ततः ।
ऋषिस्तु गणकश्छन्दो न्यृचिद्गायत्रिका स्मृतम् ॥ १,३.३२ ॥
देवो गणपतिर्ज्ञेयो न्यासं बीजाक्षरेण च ।
आदिवर्गतृतीयार्णं सार्धचन्द्रं गणाख्यकम् ॥ १,३.३३ ॥
पतिं चतुर्थ्या संयुक्तं नमोऽन्तं मनुमुच्चरेत् ।
पाशाङ्कुशं मोदकं च बिभ्राणं स्वविपाणकम् ॥ १,३.३४ ॥
गजाननं प्रवालाभं मकुटेन्दुकलाधरम् ।
तुन्दिलं गणनाथं च ध्यात्वा लक्षं जपेन्मनुम् ॥ १,३.३५ ॥
दशांशं तर्पणं होमं सगुडं सतिलं हुनेत् ।
कषबिन्दुयुतं क्षेत्रपालं च सचतुर्थिकम् ॥ १,३.३६ ॥
नमोऽन्तं मनुमुच्चार्य न्यासं बीजाक्षरेण च ।
छन्दः पङ्क्तिर्मुनिर्ज्ञेयो भृगुर्देवश्च भैरवः ॥ १,३.३७ ॥
चतुर्भुजं शूलपात्रवरदाभयशोभितम् ।
कालाम्बुदनिभं नागभूषणं किङ्किणीस्रजम् ॥ १,३.३८ ॥
त्रिनेत्रं वक्रदंष्ट्रं च ध्यात्वा लक्षं जपेन्मनुम् ।
दशांशं तर्पणं होमं पायसं त्रिमधुप्लुतम् ॥ १,३.३९ ॥
हुनेदिति समादिश्य सामयाचारिकं भजेत् ।
देवतापरिचर्यां च शुश्रूषां च गुरोः कुरु ॥ १,३.४० ॥
अतन्द्रितो जपं कुर्यात्शास्त्रश्रवणमादरात् ।
पूर्वोक्ताचारमार्गेण निरतो भव संततम् ॥ १,३.४१ ॥
प्रह्वः कृताञ्जलिर्भूत्वा करिष्यामि तथा प्रभो ।
धन्योऽहं कृतकृत्योऽस्मि श्रीनाथ त्वत्प्रसादतः ॥ १,३.४२ ॥
इति विज्ञापयेच्छिष्यः समयाचारबृंहितः ।
प्रातस्तरां समुत्थाप्य गुरूंश्च शिरसि स्मरेत् ॥ १,३.४३ ॥
निवेद्यावश्यकं कर्म स्नातः संध्यां समाचरेत् ।
नद्यास्तीर्थे तटाके वा पुष्करिण्यां शुचौ जले ॥ १,३.४४ ॥
उपस्पृश्य च संकल्प्य नित्यतर्पणमाचरेत् ।
आदौ शिवत्रयं विघ्ननाथं क्षेत्राधिपं हरिम् ॥ १,३.४५ ॥
ब्रह्माणं भास्करादींश्च ग्रहान् दुर्गां च मातृकाः ।
भैरवानसिताङ्गादीन् ततः सिद्धत्रयं वदेत् ॥ १,३.४६ ॥
आदिनाथं मीननाथं गोरक्षं कोङ्कणेश्वरम् ।
जालन्ध्रेशं कन्धनीशमोड्डीशं चिञ्चिणीश्वरम् ॥ १,३.४७ ॥
चौरङ्गिमेतान्नाथाख्यान्नव संतर्पयेत्ततः ।
चौरङ्गिं चर्पटिं घोडाचूलिं रामद्वयं ततः ॥ १,३.४८ ॥

भोलगोविन्दसिद्धं च व्याडिं नागार्जुनं तथा ।
कोरण्डं शूर्पकर्णं च मुक्तार्यीं रेवणं तथा ॥ १,३.४९ ॥
सिद्धं कुक्कुरपादं च शूर्पपादं कणैरिकम् ।
सिद्धं किङ्किणिकाख्यं च सिद्धान् षोडश तर्पयेत् ॥ १,३.५० ॥
ततो गुरुत्रयं तर्प्य मातरं पितरं गुरुम् ।
आचार्यं भ्रातरं मित्रं तर्प्य चान्यान्कुलोद्भवान् ॥ १,३.५१ ॥
तर्पयेद्विधिनाचम्य देवताराधनं ततः ।
नद्यास्तीरे तटाके वा गोष्ठे देवालये तथा ॥ १,३.५२ ॥
शुचिस्थले वा संस्तीर्य सैकतं वर्तुलाकृतिम् ।
आवाहयेद्दिनाधीशं पाटलं शिवरूपिणम् ॥ १,३.५३ ॥
द्विनेत्रपद्मयुगलधारिणं द्विभुजं परम् ।
रक्तस्रगम्बरालेपभूषापद्मासनोज्ज्वलम् ॥ १,३.५४ ॥
ध्यात्वार्चयेद्रक्तपुष्पैस्ततो विघ्नेशभैरवौ ।
ध्यात्वा पूर्वोक्तवत्तौ द्वौ रक्तपुष्पैः समर्चयेत् ॥ १,३.५५ ॥
अष्टाङ्गदण्डप्रणतिं कुर्यात्द्वादशवारकम् ।
पुनः संस्थापयेत्स्वान्ते सेवायै स्वगुरोर्व्रजेत् ॥ १,३.५६ ॥
इत्युक्ता समया दीक्षा साधका कथ्यतेऽधुना ।
[साधकदीक्षा]
समयाचारनिरतं सच्छिष्यं पक्वमानसम् ॥ १,३.५७ ॥
दीक्षयेत्सुदिने लग्ने दीक्षया साधकाख्यया ।
कुर्यान्नैमित्तिकीं पूजां शिष्यमावाहयेद्गुरुः ॥ १,३.५८ ॥
स्वयं शिवतनुः शिष्यं गौरीगर्भगतं स्मरेत् ।
भूमौ विभूतिं संस्तीर्य तस्मिन्कोणत्रयं लिखेत् ॥ १,३.५९ ॥
तत्रोपवेश्य शिष्यं च बन्धयित्वा विलोचने ।
गर्भाधानं पुंसवनं सीमन्तोन्नयनं ततः ॥ १,३.६० ॥
जातकर्म च दीक्षाङ्गं नामधेयं च कल्पयेत् ।
व्रतकर्मणि सम्प्रोक्ष्य मूलमन्त्रेण भस्मना ॥ १,३.६१ ॥
गौरीपुत्रं भावयित्वा तस्य दीक्षां प्रकल्पयेत् ।
शिवदृष्ट्या विलोक्यामुं शिवभस्म च मूर्धनि ॥ १,३.६२ ॥
निधाय मूलमन्त्रं च पूजयेद्दशवारकम् ।
तस्य दक्षिणकर्णे च उपदिश्याद्दशाक्षरम् ॥ १,३.६३ ॥
[रसगायत्री]
रसेन्द्रभैरवं मन्त्रं गायत्रीं रससंज्ञिकाम् ।
स बिन्दुहुतभुग्बीजं रसेन्द्रस्य पदं ततः ॥ १,३.६४ ॥
भैरवं च चतुर्थ्यन्तं कर्मास्त्रं च दशांशकम् ।
वह्निबीजं दीर्घयुक्तं करन्यासं समाचरेत् ॥ १,३.६५ ॥
अघोराख्य ऋषिश्छन्दो विराड्देवो महेश्वरः ।
पूर्वसेवाजपं लक्षं दशांशं होमतर्पणम् ॥ १,३.६६ ॥
तिलाज्यव्रीहिभिः कुर्याद्धोमं निश्चलमानसः ।
पूर्वोक्तां रसगायत्रीं जपेल्लक्षं च तर्पणम् ॥ १,३.६७ ॥
हुनेद्दशांशमाज्येन सतिलव्रीहिभिः प्रिये ।
दद्याच्छिष्यायाक्षमालां रसलिङ्गं रसागमम् ॥ १,३.६८ ॥
पूर्वोक्ताचारवान् भूत्वा रसलिङ्गं समर्चयेत् ।
स्वशास्त्रार्थावगमनं कुर्यात्सूतेन्द्रसंस्कृतिम् ॥ १,३.६९ ॥
गुरुसेवारतं नित्यं शिष्यमाज्ञापयेदिति ।

शिष्यो बद्धाञ्जलिर्नम्रस्तवाज्ञामाचराम्यहम् ॥ १,३.७० ॥
इत्युक्ता साधका दीक्षा निर्वाणाख्या प्रशस्यते ।
[निर्वाणदीक्षा]
कृतनित्यक्रियः पूर्वं कृतनैमित्तिकार्चनः ॥ १,३.७१ ॥
पूर्ववच्छिवकुम्भादि वर्धनीं स्थापयेत्क्रमात् ।
स्ववामे भस्म संस्तीर्य षट्कोणं भूगृहं लिखेत् ॥ १,३.७२ ॥
शिष्यं संवेश्य कुम्भस्थजलैः संप्रोक्षयेद्गुरुः ।
मूलाभिमन्त्रितं भस्म तस्य मूर्ध्नि निक्षिपेत् ॥ १,३.७३ ॥
गन्धपुष्पाक्षतं दद्यात्बध्नीयाद्दक्षिणे करे ।
कङ्कणं चरणाङ्गुष्ठब्रह्मरन्ध्रान्तमानकम् ॥ १,३.७४ ॥
सूत्रं तन्मूलमन्त्रेण मन्त्रितं सुरभीकृतम् ।
शिवहस्तं च तन्मूर्ध्नि निधाय गुरुसत्तमः ॥ १,३.७५ ॥
रसांकुशां द्वादशार्णामुपदिश्यान्मनुं परम् ।
रसभैरवदैवत्यं दद्याच्छिष्याय देशिकः ॥ १,३.७६ ॥
ऋषिश्छन्दो देवता च न्यासं पूर्वोक्तवत्प्रिये ।
तर्पणं चाथ होमं च ध्यानं कुर्याच्च पूर्ववत् ॥ १,३.७७ ॥
उत्थाय च गुरुं नत्वा बहुशः स्तोत्रमुच्चरेत् ।
गुरुः शिष्याय वै दद्याद्व्याघ्रचर्मासनं च यत्र ॥ १,३.७८ ॥
भस्त्रिकां वस्त्रसम्पूर्णां दद्याद्भैषज्यभस्त्रिकाम् ।
रसागमं पाठयित्वा भव शिष्य चिकित्सकः ॥ १,३.७९ ॥
रुद्ररूपी भवान् जातः सर्वभूतहितो भव ।
इत्यादिशेद्गुरुः शिष्यं शिष्यो हृष्टमनास्ततः ॥ १,३.८० ॥
कृतकृत्योऽस्मि पूतोऽस्मि तीर्णसंसारसागरः ।
इति विज्ञापयेच्छिष्यः स्तुत्वा च बहुधा गुरुम् ॥ १,३.८१ ॥
प्रोक्ता निर्वाणदीक्षेयमथाचार्याभिषेचनम् ।
[आचार्यदीक्षा]
निर्वाणदीक्षितस्यास्य शिष्यस्यापि महात्मनः ॥ १,३.८२ ॥
आचार्यदीक्षां कुर्वीत यथावद्गुरुसत्तमः ।
यथा निर्वाणदीक्षायास्तथा सर्वं प्रकल्पयेत् ॥ १,३.८३ ॥
विशेषाच्छिववर्धन्योः पुरतः स्थापयेद्घटम् ।
रूप्यगन्धादिलोहाशादिव्यौषधगणान्वितम् ॥ १,३.८४ ॥
शिवकुम्भवदन्यच्च सर्वमस्मिन् विनिक्षिपेत् ।
गुरुकुम्भं जपेत्स्पृष्ट्वा मूलमष्टोत्तरं शतम् ॥ १,३.८५ ॥
गुरुकुम्भमिमं विद्धि गुरुमन्त्रेण पूजयेत् ।
आवाहनासनार्घ्याद्यैरुपचारैश्च षोडशैः ॥ १,३.८६ ॥
शिवादिपङ्क्तिं तत्रैव पूजयेद्गुरुणा सह ।
यथापूर्वं समासीनं शिष्यं चैकाग्रमानसम् ॥ १,३.८७ ॥
पूर्ववच्छिववर्धन्योरम्बुना परिषेचयेत् ।
पूर्ववच्छिवहस्तं च मूलमन्त्रोपदेशकम् ॥ १,३.८८ ॥
कृत्वा तदुत्तमाङ्गे च गुरुपङ्क्तिं गुरुं तथा ।
आवाहनाद्यैः सम्पूज्य गन्धस्रग्दीपकैः ॥ १,३.८९ ॥
फलगन्धोत्तमोपेतैर्नैवेद्यैः पूजयेत्क्रमात् ।
गुरुः कुम्भजलैः कुर्यात्प्रोक्षणं पञ्चपल्लवैः ॥ १,३.९० ॥
मूलमन्त्रेण शतधा शिवपङ्क्त्या त्रिसप्तधा ।
तथैव सिद्धपङ्क्त्या च गुरुपङ्क्त्या तथैव च ॥ १,३.९१ ॥

शिष्याय गुरुभक्ताय शक्तियुक्ताय धीमते ।
हारकेयूरकटकमुद्रिकामकुटानि च ॥ १,३.९२ ॥
वाहनासनसच्छत्रचामरव्यजनानि च ।
मणिकुण्डलयुग्मं च भूत्याढ्यं पात्रमक्षयम् ॥ १,३.९३ ॥
सशिरस्त्राणमुष्णीषं पट्टकूर्पासमुत्तमम् ।
योगपट्टं योगदण्डं तथैवोड्याणबन्धनम् ॥ १,३.९४ ॥
दद्यात्तस्मै तथैवाज्ञां त्वमाचार्योऽसि संप्रति ।
ईश्वरोऽस्यद्य धन्योऽसि सर्वेषां देशिको भव ॥ १,३.९५ ॥
रसागमानां दिव्यानां व्याख्याता भव तत्त्ववित् ।
इत्यादिशेद्गुरुः शिष्यं प्रणतं गुरुवत्सलम् ॥ १,३.९६ ॥
इति चाचार्यदीक्षेयं सिद्धदीक्षाद्य कथ्यते ।
[सिद्धदीक्षा]
नवं सप्तरात्रं वा पञ्चरात्रं त्रिरात्रकम् ॥ १,३.९७ ॥
वीराः शक्तियुताः पूज्याः एकविंशति चान्वहम् ।
तत्संख्या योगिनः पूज्याः कुमाराः कन्यकाः स्त्रियः ॥ १,३.९८ ॥
गन्धपुष्पाक्षतैः पुष्पैः फलगन्धोत्तमार्पणैः ।
तोषयित्वा प्रदद्याच्च वस्त्राभरणदक्षिणाः ॥ १,३.९९ ॥
अथासनसमासीनं शिष्यं भक्तियुतं शुचिम् ।
स्पृष्ट्वा कराभ्यां तच्छीर्षं दक्षिणे श्रवणे मनुम् ॥ १,३.१०० ॥
वह्निं सबीजं शीतांशुं सविसर्गं च दीक्षयेत् ।
मूलाधारात्समुद्भूतं रेफं वह्निशिखोपमम् ॥ १,३.१०१ ॥
षडाधाराम्बुजं तीर्त्वा ब्रह्मरन्ध्रान्तगं स्मरेत् ।
ब्रह्मरन्ध्राद्द्रवीभूतं सकारं सोमरूपिणम् ॥ १,३.१०२ ॥
आप्लावयन्तं सर्वाङ्गं सिद्धः संचिन्तयेन्मनुम् ।
उच्छ्वासनिश्वासभवं संहारस्थितिकारणम् ॥ १,३.१०३ ॥
ज्ञात्वेत्थं मनसा नित्यं सर्वमन्त्रात्मकं सदा ।
सर्वदेवमयं पुण्यं सर्वसिद्धिप्रदायकम् ॥ १,३.१०४ ॥
जीवतो मुक्तिदं शुद्धं शिवशक्त्यात्मकं परम् ।
रसमन्त्रमिमं विद्धि चाग्नीषोमात्मकं भज ॥ १,३.१०५ ॥
एकविंशतिसाहस्रषट्शताधिकसंख्यकम् ।
प्रवर्तितं दिवारात्रं मनस्तत्र निधेहि च ॥ १,३.१०६ ॥
मन्त्रस्यास्य ऋषिर्जीवश्छन्देत्युक्ताः प्रकीर्तिताः ।
रसो देवस्तु रं बीजं सं शक्तिस्तु प्रकीर्तितः ॥ १,३.१०७ ॥
रेफदीर्घयुतं कुर्यात्कराङ्गन्यासमाचरेत् ।
ध्यायेद्धृदम्बुजे देवि कोटिसूर्येन्दुसन्निभम् ॥ १,३.१०८ ॥
शुद्धस्फटिकसंकाशं रसं संसारपारदम् ।
एवं निष्कलरूपं तं ध्यात्वा तन्मयतां व्रजेत् ॥ १,३.१०९ ॥
[निष्कलरसस्तोत्रम्]
त्वं रसस्त्वं शिवस्त्वं हि शक्तिस्त्वं भैरवेश्वरः ।
त्वं ब्रह्मा त्वं हि रुद्रश्च सूर्यस्त्वं शीतदीधितिः ॥ १,३.११० ॥
त्वं भूस्त्वं सलिलस्त्वं च वह्निस्त्वं च सदागतिः ।
त्वं व्योम त्वं पराकाशः त्वं जीवस्त्वं परा गतिः ॥ १,३.१११ ॥
त्वं सिद्धस्त्वं प्रबुद्धस्त्वं सुगन्धस्त्वं च मन्मथः ।
त्वं लोकपालस्त्वं तारा मातृकास्त्वं गजाननः ॥ १,३.११२ ॥
त्वं स्कन्दस्त्वं गुरुस्त्वं च त्वं सर्वजनकः शुचिः ।

त्वं यज्वा त्वं हरिस्त्वं च त्रेताग्निस्त्वं च ऋत्विजः ॥ १,३.११३ ॥
येन त्वमर्च्यसे तेन पूजिताः सर्वदेवताः ।
त्वयि तुष्टे च संतुष्टा ब्रह्मविष्णुमहेश्वराः ॥ १,३.११४ ॥
त्वत्पादोदकपानेन सर्वतीर्थफलं लभेत् ।
यस्त्वां पश्यति सद्भक्त्या तमालोकयते शिवः ॥ १,३.११५ ॥
यस्त्वां संकीर्तयेत्तस्य सर्वमन्त्रफलं भवेत् ।
यत्र त्वं क्षणमात्रे च पुण्यक्षेत्रं तदुच्यते ॥ १,३.११६ ॥
त्वं यं पश्यति सिद्धेन्द्र स ब्रह्मा विष्णुरीश्वरः ।
यत्र भुङ्क्षेऽन्नकवलं तत्र त्रैलोक्यमति हि ॥ १,३.११७ ॥
येन त्वं ध्रियसे नाथ त्वयायं स्त्रियतेक्षणम् ।
स एव चित्सदानन्दः परमात्मा ध्रुवं भवेत् ॥ १,३.११८ ॥
एवं निश्चितचित्तस्य सिद्धस्य तव योगिनः ।
वर्णाश्रमसदाचाराः कृत्याकृत्यविवेकतः ॥ १,३.११९ ॥
पापं पुण्यं सुखं दुःखं शीतमुष्णं प्रियाप्रिये ।
स्नानास्नानं हानिवृद्धी शुद्धाशुद्धं भयाभयम् ॥ १,३.१२० ॥
ग्राह्याग्राह्यं क्षुधा तृष्णा न किंचिदिह विद्यते ।
स्वेच्छाहारविहारश्च सुखी संहृष्टमानसः ॥ १,३.१२१ ॥
निर्ममः सर्वकार्येषु कलत्रादिषु बन्धुषु ।
एवमाचार्यवचनमङ्गीकृत्य च दीक्षितः ॥ १,३.१२२ ॥
अद्य प्रभृति वन्द्यस्त्वं मा कुरु प्रणतिं क्वचित् ।
मत्समानोऽसि सिद्धोऽसि जीवन्मुक्तोऽसि संप्रति ॥ १,३.१२३ ॥
इत्युक्त्वाचार्यवर्योऽपि सिद्धमालिङ्ग्य च क्षणम् ।
सिद्धदीक्षेयमाख्याता शिवसायुज्यदायिनी ॥ १,३.१२४ ॥
दुर्लभा सर्वतन्त्रेषु तव प्रीत्या प्रकाशिता ।
देवीत्थमेव मन्तव्यं दुर्लभं समयेषु च ॥ १,३.१२५ ॥

आक्, १, ४
[रससंकाराः]
श्रीभैरवी ।
रससंस्कारमीश त्वं यथावत्कथयस्व मे ।
श्रीभैरवः ।
अष्टादश स्युः संस्कारा रसस्य परमेश्वरि ॥ १,४.१ ॥
तान्सिद्धसाधकाभ्यर्च्ये यथावत्कथयामि ते ।
अथादौ स्वेदनं कर्म द्वितीयं मर्दनं प्रिये ॥ १,४.२ ॥
मूर्छा तृतीयमुत्थानं चतुर्थं पातनं शिवे ।
पञ्चमं रोधनं षष्ठं नियामं सप्तमं स्मृतम् ॥ १,४.३ ॥
दीपनं चाष्टमं देवि नवमं चानुवासनम् ।
दशमं चारणं देवि जारणं रुद्रसंख्यकम् ॥ १,४.४ ॥
गर्भद्रुतिर्द्वादशी स्यात्बाह्यद्रुतिस्त्रयोदशी ।
चतुर्दशं स्याद्रागाख्यं सारणा दशपञ्चमी ॥ १,४.५ ॥
अनुसारणा षोडशी च विख्याता प्रतिसारणा ।
सप्तदशी चाष्टदशं वेधनं देहलोहयोः ॥ १,४.६ ॥
[रससंस्कारप्रकारः]
अथ वक्ष्यामि संस्कारान् रसराजस्य पार्वति ।

लिङ्गस्य दक्षिणे भागे लिखेत्षट्कोणमण्डले ॥ १,४.७ ॥
तद्बहिश्चाष्टपत्रं च कमलं चतुरश्रकम् ।
दिग्द्वारशोभितं तस्य कर्णिकायां न्यसेच्छिवे ॥ १,४.८ ॥
ताम्रजं कान्तजं वापि खल्वं तु स्वर्णरेखितम् ।
तन्मध्ये रसराजं तु पलानां शतमात्रकम् ॥ १,४.९ ॥
तदर्धं वा तदर्धं वा क्षिप्त्वा भक्त्या प्रपूजयेत् ।
साधको रसराजस्य ततः संस्कारमाचरेत् ॥ १,४.१० ॥
[स्वेदनम्, धान्याम्लसन्धानप्रकारः]
यवगोधूमकलममाषमुद्गचणादिभिः ।
श्यामाककोद्रवाद्यैश्च नानाधान्यैश्च निस्तुषैः ॥ १,४.११ ॥
धान्यं चतुर्गुणजले मृद्घटे निक्षिपेत्प्रिये ।
प्राप्नोति यावदम्लत्वं तावद्यत्नेन रक्षयेत् ॥ १,४.१२ ॥
तन्मध्ये हंसपादीं च मीनाक्षीं द्विपुनर्नवाम् ।
चित्रकं भृङ्गराजं च विष्णुक्रान्तां शतावरीम् ॥ १,४.१३ ॥
सर्पाक्षीं गिरिकर्णीं च मुण्डीं च सहदेविकाम् ।
त्रिफलां खण्डशः कृत्वा सर्वानेतान्विनिक्षिपेत् ॥ १,४.१४ ॥
धान्यस्य च चतुर्थांशान् धान्याम्लमिदमुत्तमम् ।
स्वेदनादिषु कार्येषु पारदस्य विशिष्यते ॥ १,४.१५ ॥
आतप्ते कान्तजे खल्वे रसराजं विनिक्षिपेत् ।
चूर्णं च गृहधूमं च चित्रकं त्रिफलां गुडम् ॥ १,४.१६ ॥
दग्धोर्णामिष्टकां कन्यां लवणं बृहतीद्वयम् ।
मागधीं राजिकां चैव वन्ध्यां कर्कोटकीं तथा ॥ १,४.१७ ॥
एतान्कलांशान्सूतस्य तस्मिन्क्षिप्त्वा विमर्दयेत् ।
दत्त्वा दत्त्वाथ धान्याम्लमेवं कृत्वा दिनत्रयम् ॥ १,४.१८ ॥
सम्यक्सोष्णारनालेन रसं प्रक्षालयेत्प्रिये ।
पटुं राजीं त्रिकटुकं मूलकं चित्रकं वराम् ॥ १,४.१९ ॥
पुनर्नवां मेषशृङ्गीं मेघनादं दुरालभाम् ।
आर्द्रकं रजनीं नागबलां च नवसारकम् ॥ १,४.२० ॥
समं धान्याम्लकैः पिष्ट्वा श्लक्ष्णं वस्त्रे प्रलेपयेत् ।
यावदङ्गुलिमात्रं च तस्मिन्पूर्वरसं क्षिपेत् ॥ १,४.२१ ॥
तद्बद्ध्वा ताम्रजे पात्रे क्षिप्त्वा धान्याम्लपूरिते ।
घटे दोलाख्ययन्त्रे च स्वेदयेत्तमहर्निशम् ॥ १,४.२२ ॥
तमुद्धृत्य पुनः सोष्णैरारनालैः शरावके ।
प्रक्षालयेत्सूतराजमेवं कुर्यात्त्रिसप्तधा ॥ १,४.२३ ॥
प्रस्वेदितं सूतराजं ततः संमर्दयेत्प्रिये ।
[मर्दनम्]
अथातो मर्दनं कर्म वक्ष्यामि शृणु भैरवि ॥ १,४.२४ ॥
चूर्णादिपूर्ववद्द्रव्यं विशालां राजवृक्षकम् ।
अङ्कोलं कृष्णधुत्तूरं त्रिकटुं च समं समम् ॥ १,४.२५ ॥
सर्वं सूतकलांशं च तप्तखल्वे रसं क्षिपेत् ।
मर्दयेत्पूर्वधान्याम्लैर्दिवारात्रं पुनश्च तम् ॥ १,४.२६ ॥
क्षालयेन्मृण्मये पात्रे ततः सोष्णारनालकैः ।
मर्दनं क्षालनं चैवमेकविंशतिवासरम् ॥ १,४.२७ ॥
एवं विमर्दितं सूतं समादायाथ मूर्छयेत् ।
अभ्रजीर्णोऽथवा बीजजीर्णः सूतोऽपि मर्द्यते ॥ १,४.२८ ॥

चूर्णादिपूर्वद्रव्यैश्च रागान् गृह्णाति निर्मलः ।
[मूर्च्छा]
अथ मूर्छां प्रवक्ष्यामि शृणु त्वं सावधानतः ॥ १,४.२९ ॥
राजिका मेषशृङ्गी च चित्रकं च फलत्रयम् ।
क्षीरकन्दं सूरणं च सर्पाक्षी काकमाचिका ॥ १,४.३० ॥
नीला वचा बला कन्या कृष्णोन्मत्तस्तथाकुली ।
श्वेतापराजिताङ्कोलं गोजिह्वा गरुडी तथा ॥ १,४.३१ ॥
एतेषां स्वरसैर्मर्द्यो रविक्षीरेण पारदः ।
व्यस्तानां वा समस्तानां रसैरेषां दिनावधि ॥ १,४.३२ ॥
मर्दयेत्तप्तखल्वे च मूषायां तं रसं क्षिपेत् ।
निरुध्य भूधरे यन्त्रे विपचेत्तं पुनः प्रिये ॥ १,४.३३ ॥
राजिकाद्यौषधभवै रसैस्त्रिः सप्तवासरम् ।
मर्दनं भूधरे पाकं कुर्यात्संमूर्छितो रसः ॥ १,४.३४ ॥
भवेत्तदुत्थानविधिं प्रकुर्वीत सुरार्चिते ।
[उत्थापनविधिः]
एवं संमूर्छितं सूतं क्षालयेत्कांजिकेन च ॥ १,४.३५ ॥
सोष्णेन वारिणा वापि सूतमुत्थापयेत्प्रिये ।
पातनायन्त्रयोगे वा रसस्योत्थापनं भवेत् ॥ १,४.३६ ॥
[पातनम्]
पातनं त्रिविधं प्रोक्तं रसराजस्य पार्वति ।
ऊर्ध्वपातमधःपातं तिर्यक्पातनमुच्यते ॥ १,४.३७ ॥
[ऊर्ध्वपातनविधिः]
रसस्य पातनं वक्ष्ये पाठा ब्राह्मी च चित्रकम् ।
शाङ्गेरी काकमाची च मण्डूकी गिरिकर्णिका ॥ १,४.३८ ॥
कुमारी च जया भृङ्गी गोजिह्वा शङ्खपुष्पिका ।
भूपाटली च निर्गुण्डी काकजङ्घा शतावरी ॥ १,४.३९ ॥
आर्द्रकं देवदाली च तिलपर्णी च नीलिका ।
आरग्वधः क्षीरकन्दमङ्कोलो देवदारु च ॥ १,४.४० ॥
एषां रसैः समस्तानां व्यस्तानां वा दिनं रसम् ।
मर्दयेत्तप्तखल्वे तत्शुल्बं सूतचतुर्थकम् ॥ १,४.४१ ॥
तं पिष्ट्वा पातयेद्यन्त्रे ह्यूर्ध्वपातनके दिनम् ।
ऊर्ध्वलग्नं रसं शुद्धं तमादायाथ मर्दयेत् ॥ १,४.४२ ॥
पूर्वोदितौषधरसैः पूर्ववत्शुल्बसंयुतम् ।
पातयेन्मर्दयेदेवं सप्तधैवं पुनः पुनः ॥ १,४.४३ ॥
ऊर्ध्वपातनसंशुद्धं पारदं पातयेदधः ।
[अधःपातनविधिः]
अथाधःपातनं वक्ष्ये त्र्यूषणं लवणं वराम् ॥ १,४.४४ ॥
चित्रकं राजिकां शिग्रुं सर्वं सूतसमं क्षिपेत् ।
मर्दयेत्तप्तखल्वे च रसं धान्याम्लकेन च ॥ १,४.४५ ॥
तत्कल्केन लिपेदूर्ध्वं भाण्डं सम्यक्निरोधयेत् ।
ऊर्ध्वभाण्डस्य पृष्ठे तु दद्याल्लघुपुटं ततः ॥ १,४.४६ ॥
इत्यधःपातनं कुर्यात्सप्तवारं पुनः पुनः ।
अधःपातनशुद्धस्य तिर्यक्पातनमाचरेत् ॥ १,४.४७ ॥
[तिर्यक्पातनविधिः]
वक्ष्यामि तिर्यक्पतनं सूतं धान्याभ्रकं समम् ।

धान्याम्लैर्मर्दयेद्यामं तिर्यक्पातनयन्त्रके ॥ १,४.४८ ॥
चण्डाग्निना पचेदेवं सप्तवारं पुनः पुनः ।
एवं त्रिधा पातितं च ततः सूतं निरोधयेत् ॥ १,४.४९ ॥
अभ्रकं वाथ गन्धं वा माक्षिकं विमलामपि ।
स्वर्णं वा रजतं वापि कान्तं वा तीक्ष्णमेव वा ॥ १,४.५० ॥
प्रत्येकं शोधितं देयं ताम्रवत्पादमात्रकम् ।
पाठादिकरसैः कुर्यान्मर्दनं पातनं क्रमात् ॥ १,४.५१ ॥
यद्यद्द्रव्यान्वितः सूतस्तत्तद्द्रव्यगुणप्रदः ।
पातने ताम्रयोगेन नागवङ्गौ त्यजेद्रसः ॥ १,४.५२ ॥
अथवा दीपिकायन्त्रे शुद्धः स्यात्पातितो रसः ।
[निरोधनम्]
कदर्थितो भवेत्सूतः स्वेदाद्यैः पञ्चकर्मभिः ॥ १,४.५३ ॥
आप्यायनार्थं सूतस्य कर्म कुर्यान्निरोधनम् ।
अथ कर्म निरोधाख्यं पेषयेल्लवणं जलैः ॥ १,४.५४ ॥
स्थालीमध्ये रसं क्षिप्त्वा तदूर्ध्वं लवणं क्षिपेत् ।
किंचिज्जलं च निवपेत्तं शरावेण रोधयेत् ॥ १,४.५५ ॥
कुर्यात्सम्यक्सन्धिलेपं तदूर्ध्वं च पुटेल्लघु ।
एवं निरोधनं कर्म विदध्यात्सप्तधा प्रिये ॥ १,४.५६ ॥
आप्यायितो भवेत्सूतोऽनेन षण्डत्ववर्जितः ।
निरोधकर्मसिद्धोऽसौ वीर्यवान् सुनियम्यते ॥ १,४.५७ ॥
[नियामनम्]
अथो नियामनं कर्म कथयामि वरानने ।
यवचिञ्चा क्षीरकन्दं सर्पाक्षी पटु भृङ्गराट् ॥ १,४.५८ ॥
वन्ध्या कर्कोटकी निम्बः सर्वं धान्याम्लपेषितम् ।
कृत्वालोड्यारनालेन तद्द्रवैः स्वेदयेद्दिनम् ॥ १,४.५९ ॥
यन्त्रे नियामके सप्तवासरं तं च दीपयेत् ।
[दीपनम्]
अथातो दीपनं कर्म वदामि तव पार्वति ॥ १,४.६० ॥
स्वर्णपुष्पी च मरीचं त्रिक्षारं पञ्चपुष्पिका ।
भूखगः पञ्चलवणं राजिका शिग्रुमूलकम् ॥ १,४.६१ ॥
कासीसं विजया कन्या पातालगरुडी कणा ।
क्षीरकन्दं च कर्कोटी गिरिकर्णी जया मधु ॥ १,४.६२ ॥
चित्रकं काकजङ्घा च सर्वमम्लगणेन च ।
कल्कयेत्पारदं तेन मर्दयेत्तद्द्रवैरपि ॥ १,४.६३ ॥
डोलायन्त्रे पचेदेकदिनमेवं च सप्तधा ।
मर्दनं पाचनं कुर्यात्ग्रासार्थी दीपितो रसः ॥ १,४.६४ ॥
एवं प्रदीपितं सूतं शुद्धं तमनुवासयेत् ।
[अनुवासनम्]
अथानुवासनं कर्म मृत्पात्रे दीपितं रसम् ॥ १,४.६५ ॥
क्षिप्त्वा जम्बीरजद्रावैस्तीव्रघर्मेऽनुवासयेत् ।
एवं सप्तदिनं कुर्यात्ततश्चारणमाचरेत् ॥ १,४.६६ ॥
नवभिः स्वेदनाद्यैश्च शुद्धः स्यात्कर्मभिः प्रिये ।
पारदः सर्वरोगघ्नः सप्तकञ्चुकवर्जितः ॥ १,४.६७ ॥
श्रीभैरवी ।
स्वेदनादीनि कर्माणि श्रुतानि वद शङ्कर ।

त्वत्प्रसादादसंदेहं संशृण्वे चारणादिकम् ॥ १,४.६८ ॥
श्रीभैरवः ।
साधु पृष्टं महाभागे शृणु तच्चारणादिकम् ।
[चारणविधिः]
अथाभ्रचारणं कर्म वक्ष्यामि परमेश्वरि ॥ १,४.६९ ॥
समुखे वा निर्मुखे वा रसे वा वासनामुखे ।
गगनं चारयेद्गर्भपिष्टिग्रासक्रमैः क्रमात् ॥ १,४.७० ॥
[समुखचारणम्]
अत्रादौ कथ्यते देवि समुखं चारणं स्फुटम् ।
समुखो ग्रसति ग्रासं निर्मुखो ग्रसनाक्षमः ॥ १,४.७१ ॥
तस्मात्परं रसेन्द्रस्य मुखीकरणमाचरेत् ।
[प्रथमो मुखीकरणप्रकारः]
इष्टकामध्यभागे तु गम्भीरं वर्तुलं समम् ॥ १,४.७२ ॥
गर्तं कृत्वा तत्र सूतं प्रक्षिपेदनुवासितम् ।
निरुन्ध्यात्स्वच्छवस्त्रेण रसस्य दशमांशकम् ॥ १,४.७३ ॥
गन्धं तदूर्ध्वं निक्षिप्य शरावेण निरोधयेत् ।
तत्पृष्ठेऽल्पपुटं दद्यात्गन्धे जीर्णे पुनः पुनः ॥ १,४.७४ ॥
क्षिप्त्वा क्षिप्त्वा शतगुणं चारयेत्पातयेदिति ।
चतुर्गुणे सान्द्रवस्त्रे गालयेत्तं रसेश्वरम् ॥ १,४.७५ ॥
वेणौ क्षिप्त्वा निरुध्यास्यं पचेद्गोमूत्रपूरिते ।
भाण्डे त्रिसप्तदिवसं पुनस्तं तप्तखल्वके ॥ १,४.७६ ॥
जम्बीरमातुलुङ्गाम्लवेतसैर्भूखगैस्त्र्यहम् ।
भूनागैश्च त्र्यहं मर्द्यं तं पश्चादिष्टकोदरे ॥ १,४.७७ ॥
एकैकं गर्तमादद्याद्धान्याभ्रं गन्धकं तथा ।
प्रत्येकं दशनिष्कं च यामं जम्बीरमर्दितम् ॥ १,४.७८ ॥
अनेन लेपयेद्गर्तद्वयमेकेष्टकान्तरे ।
गर्ते क्षिप्त्वाथ तं तं विंशन्निष्कं तदूर्ध्वतः ॥ १,४.७९ ॥
अपरामिष्टकां दद्यात्तत्सन्धिं लोणमृत्स्नया ।
दृढं लिप्त्वाथ दीपाग्नौ पचेत्सप्तदिनावधि ॥ १,४.८० ॥
इष्टकां स्वाङ्गशीतां तामवतार्य हरेद्रसम् ।
किट्टहीनं पुनरपि कुर्यादित्थं त्रिवारकम् ॥ १,४.८१ ॥
एवं कृते रसेन्द्रस्य सुखं स्याद्देवसंज्ञकम् ।
[द्वितीयो मुखीकरणप्रकारः]
पुनरन्यं प्रवक्ष्यामि मुखीकरणमुत्तमम् ॥ १,४.८२ ॥
रसेन्द्रं जीविभूनागसमं संमर्दयेत्त्र्यहम् ।
तत्क्षिपेत्भूलतालिप्तमूषायां संनिवेशयेत् ॥ १,४.८३ ॥
तदूर्ध्वं भूलताकल्कं क्षिप्त्वा रुद्ध्वा विशोषयेत् ।
आर्द्रगोमयलिप्तां तां पादमग्नां निवेशयेत् ॥ १,४.८४ ॥
तद्गर्ते च पुटं देयं तुषकारीषवह्निना ।
दिनान्ते तत्समुद्धृत्य पूर्ववन्मर्दयेत्पचेत् ॥ १,४.८५ ॥
त्रिंशद्वारं पुनः कुर्यादित्थं वह्निमुखो रसः ।
ग्रसते गुह्यसूतोऽयं सर्वसिद्धिप्रदो भवेत् ॥ १,४.८६ ॥
[तृतीयो मुखीकरणप्रकारः]
पुनरन्यं प्रवक्ष्यामि मुखीकरणमुत्तमम् ।
गोमूत्रपूरिते भाण्डे डोलायन्त्रे पचेद्रसम् ॥ १,४.८७ ॥

त्रिः सप्तवारं सम्यक्च रन्ध्रितं वेणुनालके ।
मुखं भवति सूतस्य चारणार्हं वरानने ॥ १,४.८८ ॥
[चतुर्थो मुखीकरणप्रकारः]
इष्टकाद्वयमध्ये च गर्तं तु चतुरङ्गुलम् ।
दशनिष्कं शुद्धगन्धं धान्याभ्रं दशनिष्ककम् ॥ १,४.८९ ॥
जम्बीरनीरैः संमर्द्य यामं कल्केन तेन च ।
गर्तद्वयं समांशेन लिप्त्वा गर्ते विनिक्षिपेत् ॥ १,४.९० ॥
वासितं रसराजं तं विंशन्निष्कं तदूर्ध्वतः ।
इष्टकामपरां न्यस्य श्लक्ष्णमृल्लवणैर्दृढम् ॥ १,४.९१ ॥
लेपयेदथ दीपाग्निमधः प्रज्वालयेत्प्रिये ।
अनुस्यूतं सप्तरात्रं स्वाङ्गशीतं समुद्धरेत् ॥ १,४.९२ ॥
किट्टं विहाय तं सूतं पूर्ववच्च त्रिवारकम् ।
कुर्यादेवं हि सूतस्य मुखं भवति शोभनम् ॥ १,४.९३ ॥
[निर्मुखचारणाप्रकारः]
दिव्यौषधिप्रभावेन रसश्चरति निर्मुखः ।
अथवा वज्रवैक्रान्तस्पर्शादभ्रादिकं चरेत् ॥ १,४.९४ ॥
पारदस्य चतुःषष्टिनिष्कं वैक्रान्तभस्म च ।
चतुर्निष्कं वज्रभस्म निष्कं दिव्यौषधिद्रवैः ॥ १,४.९५ ॥
सर्वं सप्तदिनं मर्द्य स रसोऽभ्रादिकं चरेत् ।
[वासनामुखचारणम्]
गन्धकं जारयेत्सूते दोलाख्ये पूर्वभाषिते ॥ १,४.९६ ॥
यन्त्रे च षोडशगुणं रसः स्याद्वासनामुखः ।
[अभ्रकाभिषेकः चारणीयाभ्रकस्य संस्कारः]
चारणार्हाभ्रकस्याहमभिषेकं वदामि ते ॥ १,४.९७ ॥
[प्रथमः प्रकारः]
मृतमभ्रं तु रुधिरैः क्षारैर्जलकणैरपि ।
सृष्टित्रयैस्तुम्बुरुभिर्मर्दयेदम्लवर्गकैः ॥ १,४.९८ ॥
सप्ताहं तच्चरेत्सूतः समुखो निर्मुखोऽथवा ।
[द्वितीयः प्रकारः]
मृतमभ्रं च कदली मूलकं च शतावरी ॥ १,४.९९ ॥
पुनर्नवा मेघनादो यवचिञ्चा च शिग्रुकः ।
सूरणं च रसैरेषां मर्दयेद्भावयेत्प्रिये ॥ १,४.१०० ॥
सप्ताहं तच्चरेत्सूतः समुखो निर्मुखोऽथवा ।
[तृतीयः प्रकारः]
शुल्वपात्रे तु लवणसर्जिटङ्कणभूखगान् ॥ १,४.१०१ ॥
क्षिप्त्वारनालं त्रिदिनं कुर्यात्पर्युषितं यथा ।
तस्मिन्नागं तु विद्राव्य ढालयेच्छतधा प्रिये ॥ १,४.१०२ ॥
रौप्यकर्मणि वङ्गस्य तद्द्रवैर्भावयेद्घनम् ।
सप्ताहं तच्चरेत्सूतः समुखो निर्मुखोऽथवा ॥ १,४.१०३ ॥
[चतुर्थः प्रकारः]
धान्याभ्रमर्कक्षीरेण मर्दयेदेकवासरम् ।
निरुध्य संपुटे पच्यात्कपोताख्ये पुटे पुनः ॥ १,४.१०४ ॥
चतुर्वारं पुटेदेवं मर्दयेच्च पुनस्तथा ।
रम्भाद्रवैस्त्रिधा मर्द्यं मूलकस्य द्रवैस्त्रिधा ॥ १,४.१०५ ॥
काकमाची मेघनादो मत्स्याक्षी च पुनर्नवा ।

अपामार्गश्चित्रकं च विदारी भृङ्गराण्मुनिः ॥ १,४.१०६ ॥
चतुर्वारं पचेदेवं मर्दयेच्च पुनस्तथा ।
एतैरेकैकधा मर्द्यं पुटपाकं पृथक्पृथक् ॥ १,४.१०७ ॥
तदभ्रकं भावयेच्च मुसली यवचिञ्चिकाः ।
तण्डुली कदली शिग्रुर्वरी चार्कः पुनर्नवा ॥ १,४.१०८ ॥
एकैकैश्च द्रवैर्भाव्यमेकैकं दिवसं पृथक् ।
तदभ्रकं पारदेन्द्रश्चरत्येव सुरार्चिते ॥ १,४.१०९ ॥
[पञ्चमः प्रकारः]
धान्याभ्रं रविदुग्धेन मर्दयेद्याममात्रकम् ।
तदभ्रं संपुटे रुद्ध्वा कपोताख्यपुटे पचेत् ॥ १,४.११० ॥
वारांश्चतुर्दशैवं स्यात्ततो रम्भार्कपीलुकाः ।
नागवल्ली च मुसली कुबेराक्षी च शिग्रुकः ॥ १,४.१११ ॥
तुम्बी तुम्बुरुरङ्कोलबलापामार्गकाः प्रिये ।
गृहीत्वैषामेकरसं सव्योषं च सकांजिकम् ॥ १,४.११२ ॥
भाण्डमध्ये विनिक्षिप्य डोलायन्त्रे पचेत्त्र्यहम् ।
पूर्वाभ्रं च ततस्तस्मात्समुद्धृत्याथ साधयेत् ॥ १,४.११३ ॥
टङ्कणं तुवरी सिन्धुकासीसं च समं समम् ।
अभ्रकस्य दशांशं तु सर्वमेतद्विमर्दयेत् ॥ १,४.११४ ॥
तदभ्रकं चरेत्सूतः समुखो निर्मुखोऽथवा ।
[षष्टः प्रकारः]
मुण्डीद्रवे तु शतधा द्रुतं नागं प्रढालयेत् ॥ १,४.११५ ॥
तद्द्रवेण च धान्याभ्रं मर्दयेत्संपुटे क्षिपेत् ।
रुद्ध्वा पचेत्कपोताख्ये पुटे चैवं तु सप्तधा ॥ १,४.११६ ॥
आर्द्रकस्य द्रवैरेवं सप्तधा चित्रकद्रवैः ।
तत्समं गन्धकं दत्त्वा मर्दयेद्भावयेत्क्रमात् ॥ १,४.११७ ॥
प्रागुक्तमुण्डीस्वरसैर्बीजपूररसेन च ।
स्तन्यैरेकदिनं भाव्यं तदभ्रं च चरेद्रसः ॥ १,४.११८ ॥
एवं सर्वाणि बीजानि सत्त्वं चाभ्रकस्य च ।
स्वर्णादिसर्वलोहानि सत्वानि विविधानि च ॥ १,४.११९ ॥
द्वन्द्वानि सर्वरत्नानि यद्यत्स्याच्चारणार्हकम् ।
तत्तत्पिष्ट्वाभ्रवत्कार्यं तत्तच्चरति पारदः ॥ १,४.१२० ॥
[सप्तमः प्रकारः]
तिलपर्णीरसैः पिष्ट्वा धान्याभ्रं पुटयेत्त्रिधा ।
सप्तधा भावयेदस्य मर्दनेन च पारदः ॥ १,४.१२१ ॥
पिष्टतां याति सहसा गगनं चरति क्षणात् ।
[अष्टमः प्रकारः]
त्रिक्षारं पञ्चलवणं काङ्क्षी कासीसटङ्कणम् ॥ १,४.१२२ ॥
भूखगं हेममाक्षीकं सौराष्ट्री वत्सनाभकम् ।
तुवरी वेतसाम्लं च सर्वमेतत्समांशकम् ॥ १,४.१२३ ॥
तत्समांशं तु धान्याभ्रं धान्याम्लैर्मर्दयेद्दिनम् ।
अर्कक्षीरं भृङ्गराजो मेघनादः पुनर्नवा ॥ १,४.१२४ ॥
मूलकं चित्रकं रंभा काकमाची शतावरी ।
अपामार्गस्तालमूली विदारी तण्डुली मुनिः ॥ १,४.१२५ ॥
मीनाक्षी शिग्रु बृहती कुमारी यवचिञ्चिका ।
बला तुम्बी कुबेराक्षी व्योषं तुम्बुरुपीलुनी ॥ १,४.१२६ ॥

अङ्कोलः फणिवल्ली च सर्वमेतत्समांशकम् ।
संपेष्य कल्कयेद्देवि धान्याम्ले तच्चतुर्गुणे ॥ १,४.१२७ ॥
द्रुतं नागं शतं वारान्क्षिपेत्तस्मिन्पुनः पुनः ।
कल्कद्रवेण पूर्वाभ्रं यामं संमर्दयेद्दृढम् ॥ १,४.१२८ ॥
कपोताख्ये पुटे पच्यादेवं विंशतिवारकम् ।
तत्तुल्यं गन्धकं दत्त्वा पूर्वोक्तैरौषधद्रवैः ॥ १,४.१२९ ॥
सस्तन्यैर्बीजपूरोत्थैर्द्रवैर्भाव्यं त्रिवासरम् ।
एतदभ्रं तु सूतस्य चारणे परमं हितम् ॥ १,४.१३० ॥
द्वंद्वितं व्योमसत्वं च बीजानि विविधानि च ।
हेमादिसर्वलोहानि रत्नानि विविधानि च ॥ १,४.१३१ ॥
द्वंद्वितं वज्रबीजं च चारणायां विधीयते ।
समस्तमेतत्पूर्वोक्तप्रकारेणैव कारयेत् ॥ १,४.१३२ ॥
तदा रसेन्द्रश्चरति तत्सर्वं चारणोचितः ।
[नवमः प्रकारः]
पात्रे तु कासीसं कांक्षी माक्षीकगन्धकम् ॥ १,४.१३३ ॥
क्षारत्रयं पञ्चलोणमम्लयुक्तं क्षणं क्षिपेत् ।
दिव्याभिषेकयोगोक्तं शतधा ढालयेदहिम् ॥ १,४.१३४ ॥
वङ्गं वानेन वस्तूनि चारणार्हाणि भावयेत् ।
वरी पुनर्नवा रंभा गवाक्षी यवचिञ्चिका ॥ १,४.१३५ ॥
शिग्रुका मेघनादश्च रसैरेषां विभावयेत् ।
वज्राभ्रकं क्रमेणैव सप्ताहं सुरवन्दिते ॥ १,४.१३६ ॥
तदभ्रकं नागवल्ल्या कोबेर्या शिग्रुकस्य वा ।
बाणाङ्कोलबलारंभास्फोतानां पीलुकस्य वा ॥ १,४.१३७ ॥
अलम्बुषाहिमरुचामुसलीतुम्बुरोरपि ।
अथवा खरमञ्जर्यास्तिक्तशाकस्य वा प्रिये ॥ १,४.१३८ ॥
एकेनैषां रसेनैव व्योषसर्षपसंयुतम् ।
स्विन्नं त्रिदिवसं कुर्यात्तस्मिन्टङ्कणसैन्धवम् ॥ १,४.१३९ ॥
कासीसं तुवरीं क्षिप्त्वा पूर्वाभिषवयोगतः ।
एतदभ्रं चरेत्सूतः समुखो निर्मुखोऽथवा ॥ १,४.१४० ॥
तदभ्रकप्रभावेन गोलकः सिद्धिदो भवेत् ।
[दशमः प्रकारः]
धान्याम्लैरम्लवर्गैश्च स्वेदयेदभ्रकं दिनम् ॥ १,४.१४१ ॥
ततः स्नुक्क्षीरतो मर्द्यं कपोताख्ये पुटे दहेत् ।
मुनित्रयं मेघनादं रम्भाकन्दं च मूलकम् ॥ १,४.१४२ ॥
मत्स्याक्षी शृङ्गिवेरं च काकमाची पुनर्नवा ।
अपामार्गस्त्वरूपूगश्चैतेषां तु रसेन च ॥ १,४.१४३ ॥
एकैकेन पुनर्दद्यादेकैकं पूर्वमभ्रकम् ।
डोलायन्त्रे स्नुहीक्षीरयुक्तमेकदिनं पचेत् ॥ १,४.१४४ ॥
ततश्छायागते शुष्के घनेऽस्मिन्नवसारकम् ।
निम्बं वचां च कासीसं चणकाम्लं पृथक्पृथक् ॥ १,४.१४५ ॥
अभ्रस्य षोडशांशं च निक्षिपेत्ताम्रभाजने ।
घर्षयेत्तच्चरेत्सूतो लोहपात्रस्य योगतः ॥ १,४.१४६ ॥
[एकादशः प्रकारः]
धान्याभ्रं मर्दयेत्सोमवल्लीतोयैर्दिनं दृढम् ।
पुटेदेवं त्रिधा पश्चात्सोमवल्ल्या रसेन च ॥ १,४.१४७ ॥

भावयेत्सप्तधा देवि रसश्चरति तद्घनम् ।
[द्वादशः प्रकारः]
सारनाले तु शतधा निषिच्य तमनेन च ॥ १,४.१४८ ॥
शतधा प्लावयेदभ्रं ताम्रवासनया सह ।
खलल्यां तच्चरेत्सूतो नात्र कार्या विचारणा ॥ १,४.१४९ ॥
[गन्धकभावना]
चारणार्थस्य गन्धस्य भावनां शृणु पार्वति ।
सौराष्ट्रं चाजमोदं च सर्जी सीसमेव च ॥ १,४.१५० ॥
मर्दयेच्छिग्रुतोयेन गन्धकं तेन भावयेत् ।
सप्ताहं मर्दितं गन्धं चारयेत्पारदस्य च ॥ १,४.१५१ ॥
रागं धत्ते रसेन्द्रस्य बीजानां पाकजारणे ।
पक्षच्छेदे रसेन्द्रस्य श्रेष्ठः स्यात्सर्वकर्मणि ॥ १,४.१५२ ॥
पलाशपुष्पस्वरसैः शाकवृक्षच्छदद्रवैः ।
विष्णुक्रान्ताद्रवैर्गन्धं भावयेत्सप्तवासरम् ॥ १,४.१५३ ॥
तं गन्धं चारयेत्सूते इष्टकायन्त्रयोगतः ।
[अभ्रचारणे श्रेष्ठा दिव्यमूल्यः]
अथाभ्रचारणे श्रेष्ठा दिव्यमूलीर्वदामि ते ॥ १,४.१५४ ॥
वज्री रंभा हंसपदी चिञ्चिका व्याघ्रपादिका ।
मण्डूकी बृहती पुङ्खा कुमारी लाङ्गली तथा ॥ १,४.१५५ ॥
सर्पाक्षी चाग्निधमनी शङ्खपुष्पीन्द्रवारुणी ।
षण्डजारी च कर्कोटी विख्याता दिव्यमूलिका ॥ १,४.१५६ ॥
[गन्धकाभ्रकचारणम्]
अथातश्चारणं कर्म प्रवक्ष्यामि समासतः ।
धान्याभ्रकं द्रुते गन्धे समं क्षिप्त्वा नियोजयेत् ॥ १,४.१५७ ॥
ख्यातो गन्धाभ्रयोगोऽयं श्रेष्ठश्चारणकर्मणि ।
समुखं निर्मुखं वापि पारदं दशनिष्ककम् ॥ १,४.१५८ ॥
गन्धाभ्रयोगनिष्के द्वे पिष्टं कुर्याद्यथा तथा ।
तं पिष्टं नागपिष्ट्याथ समया परिवेष्टयेत् ॥ १,४.१५९ ॥
हेमकर्मणि वङ्गस्य पिष्ट्या रजतकर्मणि ।
ताम्रपिष्ट्या देहसिद्धौ वेष्टयेत्परमेश्वरि ॥ १,४.१६० ॥
तां पिष्टिं विद्रुते गन्धे विपचेद्दिवसत्रयम् ।
तां पिष्टिं दीपिकायन्त्रे पाचयेत्पातयेदधः ॥ १,४.१६१ ॥
तं रसं पूर्ववत्पिष्टिं कुर्याद्वेष्टनवर्जिताम् ।
त्रिदिनं विद्रुते गन्धे विपचेत्पातयेदधः ॥ १,४.१६२ ॥
तं रसं तप्तखल्वे तु चतुःषष्टिगुणं क्षिपेत् ।
भागैकमभिषिक्ताभ्रं मर्द्यं दिव्यौषधैर्दिनम् ॥ १,४.१६३ ॥
तत्क्षिपेच्चारणायन्त्रे जम्बीररससंयुते ।
तीव्रातपे दिनं स्थाप्यं सूतश्चरति तद्घनम् ॥ १,४.१६४ ॥
एवं पुनः पुनर्गर्भपिष्टीग्रासक्रमात्मकम् ।
पत्राभ्रचारणं प्रोक्तमेवं सत्वाभ्रचारणम् ॥ १,४.१६५ ॥
एवं कुर्याद्यथाशक्यं चारणं परमेश्वरि ।
रसेऽभ्रं चारयेत्पूर्वं चतुःषष्टितमांशकम् ॥ १,४.१६६ ॥
द्वात्रिंशत्तमभागं स्यात्तदेतत्षोडशांशकम् ।
अष्टमांशं चतुर्थांशं द्वितीयांशं समं क्रमात् ॥ १,४.१६७ ॥
द्विगुणं चतुर्गुणं चाष्टगुणं षोडशकं गुणम् ।

द्वात्रिंशद्गुणमेवं स्यात्चतुःषष्टिगुणं क्रमात् ॥ १,४.१६८ ॥
पक्षच्छेदस्त्वदोषत्वं लघुता ग्रासयोग्यता ।
मुखिताग्निसहत्वं च व्यापित्वं गतिहीनता ॥ १,४.१६९ ॥
रसेन्द्रस्यानवस्थत्वं च भवेदभ्रकचारणात् ।
[जारणा]
यस्याहमपि तुष्टः स्यां तस्य सूतेन्द्रजारणे ॥ १,४.१७० ॥
मतिर्भवेन्न सन्देहो जारणा भुक्तिमुक्तिदा ।
दुर्लभा जारणा देवि विना भाग्यं न लभ्यते ॥ १,४.१७१ ॥
जारणा द्विविधा बालजारणा वृद्धजारणा ।
[जारणे क्रमः]
गगनं जारयेत्पूर्वं सर्वसत्वान्यतः परम् ॥ १,४.१७२ ॥
द्वंद्वानि सर्वलोहानि पक्वबीजानि भैरवि ।
पद्मरागादिरत्नानि जारयेच्च यथाक्रमम् ॥ १,४.१७३ ॥
[जारणाय अभ्रकसत्वनिर्माणप्रकारः, प्रथमः प्रकारः]
जारणार्हं व्योमसत्वं रसराजस्य वक्ष्यते ।
धान्याभ्रकं च विधिवन्मारयेद्वज्रसंज्ञकम् ॥ १,४.१७४ ॥
अभिषेकं पूर्ववत्स्यात्तस्मिन् ताप्यं दशांशकम् ।
पञ्चमाहिषगव्यश्च मर्दयेत्कर्षसन्निभाः ॥ १,४.१७५ ॥
कुर्वीत वटिकाः कोष्ठीयन्त्रे सत्वं विपातयेत् ।
सत्वस्य च चतुर्थांशं ताप्ये मूषागतं धमेत् ॥ १,४.१७६ ॥
एवं कृत्वा चतुर्वारं तत्सत्वं रसजारणे ।
रसायने च भैषज्ये श्रेष्ठं सकलकर्मणि ॥ १,४.१७७ ॥
[द्वितीयः प्रकारः]
मृताभ्रं तच्चतुर्थांशं नागं तत्पादमाक्षिकम् ।
पञ्चभिर्माहिषैर्गव्यैः पातयेत्सत्त्वमुज्ज्वलम् ॥ १,४.१७८ ॥
तत्सत्वं तच्चतुर्थांशं माक्षिकं तत्समां शिलाम् ।
धमेत्प्रलिप्तमूषायां सत्वं स्याद्धेमसन्निभम् ॥ १,४.१७९ ॥
एवं कुर्याच्चतुर्वारं तत्सत्वं ग्रसते रसः ।
[तृतीयः प्रकारः]
मृताभ्रकं षोडशांशं तच्चतुर्थांशकं त्रपु ॥ १,४.१८० ॥
तत्समं तालकं क्षिप्त्वा पञ्चमाहिषगव्यतः ।
सत्त्वं निपातयेत्तच्च चतुर्थं हरितालकम् ॥ १,४.१८१ ॥
क्षिप्त्वा क्षिप्त्वा चतुर्वारं तत्सत्वं ग्रसते रसः ।
[चतुर्थः प्रकारः, अभ्रकसत्त्वमृदूकरणम्]
वज्रमूषागतं कृत्वा घनसत्वं च तत्समम् ॥ १,४.१८२ ॥
कचं च टङ्कणं क्षिप्त्वा रुद्ध्वा तीव्राग्निना धमेत् ।
तत्क्षिपेदम्लवर्गेण चिञ्चाबीजं स्नुहीदलम् ॥ १,४.१८३ ॥
पिष्ट्वा तस्मिन्पुनस्तद्वत्काचटङ्कणयोगतः ।
धमेदेवं सप्तवारं सेचनं च पुनः पुनः ॥ १,४.१८४ ॥
तदभ्रसत्त्वं शुभ्रं स्यान्मृदु स्याच्चारणोदितम् ।
[पञ्चमः प्रकारः]
रसेन्द्रं टङ्कणं ताप्यं भागैकैकं पृथक्पृथक् ॥ १,४.१८५ ॥
त्रिभागं शोधितं नागं मृताभ्रं दशभागकम् ।
यवक्षारं च दग्धोर्णां सर्जक्षारं च गुग्गुलुम् ॥ १,४.१८६ ॥
अजापञ्चाङ्गसंयुक्तमम्लमूत्रगणैर्युतम् ।

मर्दयेत्पूर्ववत्सत्वं पातयेन्मृदु निर्मलम् ॥ १,४.१८७ ॥
[द्वन्द्वमेलापनाय मूषालेपः: प्रथमः प्रकारः]
द्वन्द्वमेलापने मूषालेपं वक्ष्यामि पार्वति ॥ १,४.१८८ ॥
मेषशृङ्गं खुरं गुञ्जा टङ्कणं च विषं समम् ।
स्थूलभेकस्य वसया पिष्ट्वा मूषां प्रलेपयेत् ॥ १,४.१८९ ॥
मिलन्ति सर्वसत्वानि मूषायां चूर्णितानि च ।
गुग्गुलुं धातकीपुष्पं गुडं क्षारत्रयं समम् ॥ १,४.१९० ॥
स्तन्यैः पिष्ट्वाथ मूषायां लेपनं द्वन्द्वमेलनम् ।
[द्वितीयः प्रकारः]
अश्मभेदी लाङ्गली च भूलता च मरीचकः ॥ १,४.१९१ ॥
कार्पासस्य फलं शक्रगोपश्चैतांश्च मर्दयेत् ।
नारीस्तन्येन तेनैव मूषामन्तः प्रलेपयेत् ॥ १,४.१९२ ॥
तस्यां मिलन्ति सत्वानि सर्वाणि च महारसाः ।
हेममुख्यानि लोहानि चण्डाग्निधमनेन च ॥ १,४.१९३ ॥
[तृतीयः प्रकारः]
चुचुन्दर्याश्च पिशितं टङ्कणं च विषं समम् ।
मर्दयित्वा च मूषान्तर्लेपयेत्तत्र निक्षिपेत् ॥ १,४.१९४ ॥
द्वन्द्वयोग्यं तु यद्यत्स्यात्तत्सर्वं धमनान्मिलेत् ।
[चतुर्थः प्रकारः]
भस्मीकृतमपामार्गं कङ्गुणीतैलमर्दितम् ॥ १,४.१९५ ॥
मूषायां लेपयेत्तेन द्वन्द्वद्रव्यं विनिक्षिपेत् ।
मिलेत्तीव्राग्निधमनात्तत्तन्मारकवापनात् ॥ १,४.१९६ ॥
[द्वन्द्वमेलापनम्]
अत एव प्रवक्ष्यामि द्वन्द्वमेलापनं शृणु ।
वर्षाभूकदलीकन्दकाकमाचीपुनर्नवम् ॥ १,४.१९७ ॥
स्वर्णं नरकपालं च गुञ्जा टङ्कणमभ्रकम् ।
सत्वं मूषागतं ध्मातं हेमाभ्रं मिलति क्षणात् ॥ १,४.१९८ ॥
अभ्रकं चूर्णयित्वा तु काकमाचीरसप्लुतम् ।
कपित्थतोयसंयुक्तं सूतटङ्कणसंयुतम् ॥ १,४.१९९ ॥
वङ्गपत्रान्तरे न्यस्तं ध्मातं वङ्गाभ्रकं मिलेत् ।
आवर्त्य कटुतैलेन भस्मापामार्गजं क्षिपेत् ॥ १,४.२०० ॥
हेमाभ्रं नागताप्येन ताराभ्रं हरितालकात् ।
गन्धकेन तु शुल्वाभ्रं तीक्ष्णाभ्रं सिन्धुहिङ्गुलात् ॥ १,४.२०१ ॥
वङ्गाभ्रं हरितालेन नागाभ्रं शिलया मिलेत् ।
लाङ्गली चमरीकेशाः कार्पासास्थि कुलत्थकम् ॥ १,४.२०२ ॥
भूलता चाश्मदमनी स्त्रीस्तन्यं सुरगोपकः ।
द्वन्द्वे प्रलिप्तमूषायां सुध्मातास्तीव्रवह्निना ॥ १,४.२०३ ॥
कान्ताभ्रशैलविमलाः मिलन्ति सकलाः क्षणात् ।
अथ चुच्छुन्दरीमांसं विषटङ्कणयोजितम् ॥ १,४.२०४ ॥
मूषाप्रलेपात्कुरुते सर्वद्वन्द्वेषु मेलनम् ।
जौरभ्रमरशृङ्गं च मण्डूकस्य वसामिषम् ॥ १,४.२०५ ॥
गुञ्जाटङ्कणलेपेन सर्वसत्वेषु मेलनम् ।
टङ्कणोर्णागिरिजतुकर्णाक्षीमलकर्कटैः ॥ १,४.२०६ ॥
मिलन्ति सर्वद्रव्याणि स्त्रीस्तन्यपरिपेषितैः ।
धातकीगुग्गुलुगुडसर्जयावकटङ्कणैः ॥ १,४.२०७ ॥

स्त्रीस्तन्यपेषितं शस्तं द्वन्द्वं स्यात्तु रसायने ।
सूक्ष्मचूर्णं तु यत्किंचित्पूर्वकल्केन संयुतम् ॥ १,४.२०८ ॥
अन्धमूषागतं ध्मातं संकरं मिलति क्षणात् ।
वापितं ताप्यरसकसस्यकैर्दरदेन च ॥ १,४.२०९ ॥
स सत्वं स्यादनिबिडं दृढं ध्मातं मिलेत्ततः ।
रसोपरसलोहानि सर्वाण्येकत्र मेलयेत् ॥ १,४.२१० ॥
[प्रथमः प्रकारः]
अन्योन्यं द्वंद्वतां यान्ति द्रवन्ति सलिलं यथा ।
वज्राभ्रसत्त्वचूर्णं तु यत्किंचिल्लोहचूर्णकम् ॥ १,४.२११ ॥
द्वयं समं तयोस्तुल्यमरिवर्गं विनिक्षिपेत् ।
द्वन्द्वमेलनमूषायां धमनान्मेलनं भवेत् ॥ १,४.२१२ ॥
[द्वितीयः प्रकारः]
मर्दयेट्टङ्कणं रम्भाकन्दतोयेन लेपयेत् ।
मूषां श्वेताभ्रकं वङ्गं धमनान्मिलति प्रिये ॥ १,४.२१३ ॥
[तृतीयः प्रकारः]
वनशिग्रुष्टङ्कणश्च गुञ्जा च नृकपालकम् ।
पिष्ट्वा योषित्स्तन्यनीरैस्तेन मूषां प्रलेपयेत् ॥ १,४.२१४ ॥
वङ्गश्वेताभ्रसत्वं च चूर्णयित्वा क्षिपेद्धमेत् ।
असंशयं मिलन्त्येव श्रेष्ठं रजतकर्मणि ॥ १,४.२१५ ॥
[चतुर्थः प्रकारः]
श्वेताभ्रसत्वं संचूर्ण्य तच्चतुर्थांशपारदम् ।
सूततुल्यं टङ्कणं च मर्दयेत्काकमाचिजैः ॥ १,४.२१६ ॥
द्रवैस्तद्गोलकं कृत्वा वङ्गपत्रेण वेष्टयेत् ।
श्वेताभ्रसत्वतुल्येन लिप्तमूषागतं धमेत् ॥ १,४.२१७ ॥
भवेत्सम्मेलनं सम्यक्मुख्यः स्याद्रूप्यकर्मणि ।
[वज्रहेममेलापने मूषालेपः: प्रथमः प्रकारः]
अथातो वज्रकनकद्वन्द्वमेलाप्रलेपनम् ॥ १,४.२१८ ॥
गुञ्जा कान्तमुखं तुल्यं द्वन्द्वयोर्द्विगुणं बलिम् ।
स्तन्येन योषितां पिष्ट्वा मूषायामन्तरे तथा ॥ १,४.२१९ ॥
मेलयेद्वज्रमेलापोऽयं कथितो मया ।
[द्वितीयः प्रकारः]
शिलाधातुः कान्तमुखं शशदन्ताश्च गन्धकः ॥ १,४.२२० ॥
अम्लवेतसकं तुल्यं पिष्ट्वा मूषां प्रलेपयेत् ।
हेमवज्रं मिलत्येव मूषायां नात्र संशयः ॥ १,४.२२१ ॥
[तृतीयः प्रकारः]
कुलीरास्थि शिलाधातु महिषीकणदृङ्मलम् ।
टङ्कणोर्णासमं सर्वं कान्तास्तन्येन मर्दयेत् ॥ १,४.२२२ ॥
अनेन लेपयेन्मूषां हेमवज्रं मिलत्यलम् ।
[चतुर्थः प्रकारः]
कान्तास्यं टङ्कणं बालवत्सविड्भ्रमरास्थि च ॥ १,४.२२३ ॥
मनुष्यचिकुरास्थीनि स्त्रीस्तन्येन विमर्दयेत् ।
अनेन लिप्तमूषायां हेमवज्रं मिलेद्ध्रुवम् ॥ १,४.२२४ ॥
[पञ्चमः प्रकारः]
ताप्यटङ्कणभूनागकान्तकाचमधूनि च ।
कुलीरास्थि स्नुहीक्षीरमर्कक्षीरं समं समम् ॥ १,४.२२५ ॥

स्तन्येन मर्दयेत्सर्वं मूषालेपं तु कारयेत् ।
मूषालेपो भवेदेष वज्रहाटकमेलनः ॥ १,४.२२६ ॥
वज्रं भस्मीभवेद्यैस्तैर्मूषामन्तर्विलेपयेत् ।
धमेत्तीव्राग्निना हेमवज्रमेलापनं भवेत् ॥ १,४.२२७ ॥
[वज्रहेममेलापनम्; प्रथमः प्रकारः]
अथातो मेलनं वक्ष्ये वज्रहेम्नोः सुरेश्वरि ।
स्वर्णं द्वादशभागं स्यात्तदर्धं शुद्धपारदम् ॥ १,४.२२८ ॥
रसेन्द्रार्धं नागभस्म नागार्धं मृतवज्रकम् ।
एतच्चतुष्टयं चाम्लैर्मर्दयेत्तप्तखल्वके ॥ १,४.२२९ ॥
उद्धृत्य द्वन्द्वमेलापे मूषायां रोधयेद्धमेत् ।
हठात्तच्च मिलत्येतन्नात्र कार्या विचारणा ॥ १,४.२३० ॥
[द्वितीयः प्रकारः]
भावयेच्छारिवाक्षीरे मृतं वज्रं दिनं ततः ।
मर्दयेद्गोलकं कृत्वा शेषयेच्चैकभागकम् ॥ १,४.२३१ ॥
त्रिभागं रसराजं च चतुर्भागं सुवर्णकम् ।
अम्लेन मर्दयेत्पिष्टिं कृत्वा तद्गोलकम् ॥ १,४.२३२ ॥
तत्पिष्ट्वा वेष्टयेत्तच्च भूर्जपत्रेण वेष्टयेत् ।
पक्षं न्यसेद्धान्यराशौ तदुद्धृत्य पुनः पुनः ॥ १,४.२३३ ॥
धमेद्धठान्मिलत्येव नात्र कार्या विचारणा ।
[तृतीयः प्रकारः]
वज्रं षोडशभागेन हेमपत्रेण वेष्टयेत् ॥ १,४.२३४ ॥
तत्क्षिपेल्लिप्तमूषायां स्वर्णांशं श्वेतकाचजम् ।
चूर्णं वा नृकपालं वा चूर्णं कृत्वा विनिक्षिपेत् ॥ १,४.२३५ ॥
निरुध्य च धमेत्तीव्रमेवं कुर्यात्पुनः पुनः ।
क्षिप्त्वा क्षिप्त्वा श्वेतकाचं नृकपालमथापि वा ॥ १,४.२३६ ॥
सप्तधैवं मिलत्येव पुनरेवं विधीयते ।
अस्य हेम्नः षोडशांशं मृतं वज्रं विनिक्षिपेत् ॥ १,४.२३७ ॥
पूर्ववल्लिप्तमूषायां काचं वा नृकपालकम् ।
क्षिप्त्वा क्षिप्त्वा धमेत्तीव्रं सप्तवारं मिलत्यलम् ॥ १,४.२३८ ॥
एवं तृतीयवारं च कुर्यादेवं चतुर्थकम् ।
[द्वन्द्वितानामभिषेकः]
अथातो द्वंद्वितानां च प्रवक्ष्याम्यभिषेचनम् ॥ १,४.२३९ ॥
कासीसं पञ्चलवणं माक्षीकं गन्धकं तथा ।
कांक्षी क्षारत्रयं तुल्यमारनालेन मर्दयेत् ॥ १,४.२४० ॥
तत्कल्कमातपे ताम्रपात्रे संस्थापयेत्त्र्यहम् ।
तस्मिन्क्षिपेद्द्रुतं नागंशतधा तद्द्रुतं द्रुतम् ॥ १,४.२४१ ॥
ताम्रपात्रस्थसौवीरैर्भावयेच्छतवारकम् ।
द्वंद्वितं तच्चरेत्सूतो यत्किंचिज्जारणार्हकम् ॥ १,४.२४२ ॥
रूप्यकर्मणि वङ्गं स्यान्नागं स्याद्धेमकर्मणि ।
[पक्वबीजविधानम्]
अथातः सम्प्रवक्ष्यामि पक्वबीजं सुरार्चिते ॥ १,४.२४३ ॥
[प्रथमं विधानम्]
सुवर्णे विद्रुते तुल्यं नागाभ्रं द्वंद्वितं प्रिये ।
वाहयेद्द्वादशगुणं स्वर्णशेषं यथा धमेत् ॥ १,४.२४४ ॥
पक्वबीजमिदं ख्यातं जारयेत्पारदे क्रमात् ।

[द्वितीयं विधानम्]
पीताभ्रसत्वं स्वर्णं च समांशं द्वंद्वितं धमेत् ॥ १,४.२४५ ॥
वाहयेद्द्वादशगुणं स्वर्णशेषं यथा धमेत् ।
पुनः पीताभ्रसत्वं च वहेद्दशगुणं शनैः ॥ १,४.२४६ ॥
स्वर्णशेषं भवेद्यावत्पक्वबीजमिदं भवेत् ।
[तृतीयं विधानम्]
नागार्कव्योमरसकं चतुस्त्रिर्द्व्येकभागिकम् ॥ १,४.२४७ ॥
चूर्णयेल्लिप्तमूषायामन्धयेच्च धमेद्दृढम् ।
माक्षिकेण च तत्खोटं संपेष्याम्लैः पुटे पचेत् ॥ १,४.२४८ ॥
पुनस्तत्सममाक्षीकमम्लैः पिष्ट्वा पुटे पचेत् ।
एवं पञ्चपुटं दत्त्वा तद्द्रुते हेम्नि वाहयेत् ॥ १,४.२४९ ॥
धमेद्दशगुणं यावत्तावत्स्यात्पक्वबीजकम् ।
[चतुर्बीजक्रमः]
अथातः सम्प्रवक्ष्यामि चतुर्बीजं वरानने ॥ १,४.२५० ॥
हेमताराहिकुटिलबीजान्येतानि तत्त्वतः ।
हेमबीजं नागबीजं शस्यते हेमकर्मणि ॥ १,४.२५१ ॥
तारबीजं वङ्गबीजं कथिते रूप्यकर्मणि ।
हेमबीजं तारबीजं भवेतां च रसायने ॥ १,४.२५२ ॥
नागबीजं वङ्गबीजं न रसायनकर्मणि ।
चत्वार्येतानि बीजानि भवेयू रोगशान्तये ॥ १,४.२५३ ॥
अन्यथा नैव योज्यानि बीजान्येतानि शाम्भवि ।
[हेमबीजविधानम्, प्रथमं हेमबीजम्]
गन्धकं सस्यकं वापि माक्षीकं वाथ तालकम् ॥ १,४.२५४ ॥
शिलां च विमलां वापि वैक्रान्तं वाञ्जनं च वा ।
खर्परं वा कान्तमुखं वा चूर्णयित्वा समांशकम् ॥ १,४.२५५ ॥
शतवारान्द्रुते हेम्नि वाहयेच्च पुनः पुनः ।
[द्वितीय नागभस्मसिद्धं हेमबीजम्]
सूतहिंगुलकंकुष्ठलोहपर्पटिकाभ्रकम् ॥ १,४.२५६ ॥
मृतार्कमाक्षीकशिलाविमलांश्च समांशकान् ।
एतान्नागकलाभागान् स्नुह्यर्कपयसा प्रिये ॥ १,४.२५७ ॥
मर्दयेत्तेन पत्राणि शुद्धनागस्य लेपयेत् ।
पुटेद्द्वात्रिंशतिपुटे नागो भस्मति तद्वहेत् ॥ १,४.२५८ ॥
समं समं च शतधा विद्रुते पूर्ववाहिते ।
सुवर्णे च तथा हेमशेषं तावद्धमेद्दृढम् ॥ १,४.२५९ ॥
[तृतीयं वङ्गभस्मसिद्धं हेमबीजम्]
अथवा भस्मयेद्वङ्गं तालशङ्खाभ्रपारदैः ।
चिञ्चाक्षारैस्त्रपुसमैः स्नुह्यर्कक्षीरमर्दितैः ॥ १,४.२६० ॥
पुटेत्षोडशभिस्तच्च शतधा हेम्नि वाहयेत् ।
[चतुर्थं ताम्रभस्मसिद्धं हेमबीजम्]
अथवा मारयेच्छुल्बमूर्ध्वाधो गन्धकं समम् ॥ १,४.२६१ ॥
क्षिप्त्वा पुटेदष्टवारं तत्ताम्रं हेम्नि वाहयेत् ।
[पञ्चमं तीक्ष्णभस्मसिद्धं हेमबीजम्]
अथवा मारयेत्तीक्ष्णं तीक्ष्णतुल्यं च हिंगुलम् ॥ १,४.२६२ ॥
स्त्रीस्तन्यैर्मर्दयित्वा तु पुटेदथ कलांशकम् ।
तीक्ष्णस्य हिंगुलं दत्त्वा मर्दयेत्पुटयेत्क्रमात् ॥ १,४.२६३ ॥

एवं तत्षोडशपुटैः तत्तीक्ष्णं हेम्नि वाहयेत् ।
शतधा हेम तदिशं विद्रुते हेम्नि वाहयेत् ॥ १,४.२६४ ॥
[षष्ठं हेमबीजम्]
तद्धेम्नि द्विगुणं ताप्यं पूर्णितं तद्धमेद्दृढम् ।
तच्चूर्णयेद्द्वित्रिपुटैः पञ्चभिर्मारितं भवेत् ॥ १,४.२६५ ॥
तद्वाहयेद्दशगुणं द्रुते हेम्नि धमन् धमन् ।
तदेव जायते दिव्यं सर्वसिद्धिप्रदायकम् ॥ १,४.२६६ ॥
हेमबीजमिदं ख्यातं हितं स्याद्रसजारणे ।
[सप्तमं हेमबीजम्]
सस्यकाभ्रकवैक्रांतसत्वं स्वर्णमहिं रविम् ॥ १,४.२६७ ॥
तीक्ष्णं च चूर्णयेल्लिप्तमूषायां चान्धितं धमेत् ।
पुनः प्रकटमूषायां धमेत्तस्मिन्द्रुते सति ॥ १,४.२६८ ॥
माक्षिकं निक्षिपेत्किंचित्किंचिद्दत्त्वा पुनः पुनः ।
यावत्स्वर्णावशेषं स्यात्ततस्तस्मिन् विनिक्षिपेत् ॥ १,४.२६९ ॥
स्वर्णं नागं रविं तीक्ष्णं पूर्ववच्च धमेत्क्रमात् ।
वाहयेन्माक्षिकं तद्वद्धमेत्स्वर्णावशेषकम् ॥ १,४.२७० ॥
हेमबीजमिदं ख्यातं हितं स्याद्रसजारणे ।
[अष्टमं हेमबीजम्]
समांशं चूर्णयेदभ्रं सत्वं ताम्रमयं शुभम् ॥ १,४.२७१ ॥
अभ्रकाद्द्विगुणं धौतं ताप्यं सर्वं धमेद्धठात् ।
मूषायां द्वन्द्वलिप्तायां तत्खोटं चूर्णयेत्ततः ॥ १,४.२७२ ॥
मर्द्यं दिव्यौषधिरसैः संपुटे रोधयेद्दृढम् ।
पचेद्गजपुटे तद्वच्चूर्णयेन्मर्दयेत्पुटेत् ॥ १,४.२७३ ॥
एवं पञ्चपुटैः पक्वं तद्वहेत्कनके द्रुते ।
यावद्दशगुणं तावन्मूषायां प्रकटे धमेत् ॥ १,४.२७४ ॥
ततस्तस्मिन् शुद्धताप्यं क्षिप्त्वा क्षिप्त्वा धमेद्धमेत् ।
यावत्स्वर्णावशेषं स्यात्स्वर्णबीजमिदं प्रिये ॥ १,४.२७५ ॥
[नवमं हेमबीजम्]
तीक्ष्णार्कनागभस्मानि ताप्यचूर्णं समं समम् ।
एतद्द्रुते वहेद्धेम्नि यावद्दशगुणं भवेत् ॥ १,४.२७६ ॥
तावत्स्वर्णावशेषं स्यात्स्वर्णबीजमिदं प्रिये ।
[दशमं हेमबीजम्]
मृततारार्कतीक्ष्णायः समं सर्वं धमेद्दृढम् ॥ १,४.२७७ ॥
मूषायां द्वन्द्वलिप्तायां तत्खोटं चूर्णयेत्ततः ।
तच्चूर्णं द्राविते स्वर्णे वाहयेच्च शनैः शनैः ॥ १,४.२७८ ॥
यावद्दशगुणं पश्चात्ताप्यचूर्णं क्षिपन्क्षिपन् ।
धमेत्स्वर्णावशेषं स्याद्धेमबीजमिदं प्रिये ॥ १,४.२७९ ॥
[एकादशं हेमबीजम्]
नागमेकं चतुस्ताम्रं सत्त्वं रसकसम्भवम् ।
मूषायां द्वन्द्वलिप्तायां सर्वं ध्मातं विचूर्णयेत् ॥ १,४.२८० ॥
तच्चूर्णं वाहयेत्स्वर्णे विद्रुते षड्गुणं शनैः ।
स्वर्णशेषं भवेद्यावत्तावत्स्यात्स्वर्णबीजकम् ॥ १,४.२८१ ॥
[द्वादशं हेमबीजम्]
ताप्येन मारयेत्ताम्रं तन्नागे वाहयेच्छनैः ।
यावच्छतगुणं ताप्यं चूर्णं क्षिप्त्वा धमन्धमन् ॥ १,४.२८२ ॥

तद्वाहयेद्धमेद्धेम्नि क्रमाद्द्वात्रिंशतं गुणम् ।
स्वर्णशेषं भवेद्यावत्तावत्स्याद्धेमबीजकम् ॥ १,४.२८३ ॥
[त्रयोदशं हेमबीजम्]
भागैकं खर्परीसत्वं द्विभागं चाभ्रसत्वकम् ।
त्रिभागं ताम्रचूर्णं च लिप्तमूषागतं धमेत् ॥ १,४.२८४ ॥
तत्खोटं चूर्णयेत्ताप्यं तुल्यमम्लैर्विमर्दयेत् ।
तत्क्षिपेत्संपुटे रुद्ध्वा पुटेल्लघुपुटे पुनः ॥ १,४.२८५ ॥
एवं पञ्चपुटैः पक्वं तच्चूर्णं वाहयेद्द्रुते ।
सहस्रगुणितं हेम्नि यावत्स्वर्णावशेषितम् ॥ १,४.२८६ ॥
तावत्ताप्यं वहेद्युक्त्या स्यादिदं हेमबीजकम् ।
[चतुर्दशं हेमवीजम्]
भागैकमभ्रसत्वं च द्विभागं शुद्धताम्रकम् ॥ १,४.२८७ ॥
चूर्णयेल्लिप्तमूषायां क्षिप्त्वा रुद्ध्वा धमेद्दृढम् ।
ततस्तं चूर्णयेत्ताप्यं तुल्यमम्लेन मर्दयेत् ॥ १,४.२८८ ॥
तद्रुद्ध्वा संपुटे पच्यात्पुटे तच्चूर्णयेत्पुनः ।
पूर्ववन्माक्षिके क्षिप्त्वा मर्दयेत्पातयेत्प्रिये ॥ १,४.२८९ ॥
एवं पञ्चपुटे कार्ये तच्चूर्णं वाहयेत्प्रिये ।
स्वर्णे शतगुणं यावत्तावत्स्याद्धेमबीजकम् ॥ १,४.२९० ॥
[पञ्चदशं हेमबीजम्]
माक्षिकं गन्धपाषाणं हरितालं मनःशिलाम् ।
वैक्रान्तकं कान्तमुखं सस्यकं विमलांजने ॥ १,४.२९१ ॥
रसकं चापि शतशश्चूर्णितं हेम्नि वाहयेत् ।
लोहपर्पटिकाताप्यकङ्कुष्ठविमलाभ्रकैः ॥ १,४.२९२ ॥
मृतशुल्बशिलासूतस्नुह्यर्कक्षीरहिङ्गुलैः ।
नागो निर्जीवतां याति योगैः पुनः पुनः ॥ १,४.२९३ ॥
रसतालकशुद्धचिंचाक्षारैस्तथा त्रपु ।
मृतं नागं मृतं वङ्गं शुल्बं तीक्ष्णं च वा मृतम् ॥ १,४.२९४ ॥
एकैकमुत्तमे हेम्नि वाहयेत्सुरवन्दिते ।
निरुद्धे पन्नगे हेम्नि निर्व्यूढे शतसंगुणैः ॥ १,४.२९५ ॥
[हेम्नि नागादिनिर्वहणेन वर्णव्यत्यासः]
नागजीर्णं रोचनाभं हारीतं ताम्रवाहितम् ।
तीक्ष्णजीर्णं रविसमं वङ्गजीर्णं जपानिभम् ॥ १,४.२९६ ॥
[प्रथमं तारबीजम्]
श्वेताभ्रसत्वं तीक्ष्णं च ताप्यं च विमलां तथा ।
खर्परं च समं सर्वं कुटिलं च चतुर्गुणम् ॥ १,४.२९७ ॥
धमेत्सर्वं चूर्णयेच्च भस्मयेत्पुटपञ्चकैः ।
तारे द्रुते शतगुणं वाहयेच्च शनैः शनैः ॥ १,४.२९८ ॥
तारबीजमिदं ख्यातं जारणे परमं हितम् ।
[द्वितीयं तारबीजम्]
यथा ताप्येन कुटिलं तथा ताप्येन मारयेत् ॥ १,४.२९९ ॥
तद्भागं च समं तालं तत्समं रजते द्रुते ।
त्रिंशद्गुणं भवेद्यावत्तावद्वाह्यं क्रमेण च ॥ १,४.३०० ॥
तारबीजमिदं ख्यातं पारदे तच्च जारयेत् ।
[तृतीयं तारबीजम्]
तीक्ष्णं वङ्गं च विमलां समांशं चूर्णयेत्प्रिये ॥ १,४.३०१ ॥

द्वन्द्वमेलोपलिप्तायां धमेत्तत्खोटकं भवेत् ।
तत्खोटं चूर्णयेदम्लैर्मर्दयेत्पुटयेदिति ॥ १,४.३०२ ॥
पञ्चवारं प्रकुर्वीत भस्म तज्जायते प्रिये ।
तद्भस्म विद्रुते तारे वाहयेच्च समं समम् ॥ १,४.३०३ ॥
धमन् धमन् दशगुणं यावद्भवति भैरवि ।
तारबीजमिदं श्रेष्ठं रसराजस्य जारणे ॥ १,४.३०४ ॥
[चतुर्थं तारबीजम्]
श्वेताभ्रसत्वं कुटिलं तारमाक्षीकसत्वकम् ।
त्रयं समांशं संचूर्ण्य लिप्तमूषागतं धमेत् ॥ १,४.३०५ ॥
तच्चूर्णं वाहयेत्तारे तारतुल्यं विनिक्षिपेत् ।
यावद्दशगुणं तावत्तारमाक्षीकवापतः ॥ १,४.३०६ ॥
तारबीजमिदं प्रोक्तं जारणे परमं हितम् ।
[पञ्चमं तारबीजम्]
त्रिद्व्येकभागान् देवेशि तीक्ष्णतालामलान् क्रमात् ॥ १,४.३०७ ॥
चूर्णितान् लिप्तमूषायां क्षिप्त्वा तीव्राग्निना धमेत् ।
तत्खोटं चूर्णयेदम्लैर्मर्दयेत्पुटयेदिति ॥ १,४.३०८ ॥
सप्तधा तदद्रुते तारे वाह्यं दशगुणं ततः ।
क्षिप्त्वा क्षिप्त्वा तालचूर्णं तारशेषं यथा धमेत् ॥ १,४.३०९ ॥
तारबीजमिदं श्रेष्ठं जारणे परमं हितम् ।
[षष्ठं तारबीजम्]
खर्परी तालशुभ्राभ्रसत्त्वकं तारमाक्षिकम् ॥ १,४.३१० ॥
तुल्यं सर्वसमं वङ्गं सर्वं मूषागतं धमेत् ।
चूर्णयेन्मर्दयेदम्लैः पुटेदेवं तु सप्तधा ॥ १,४.३११ ॥
तच्चूर्णं वाहयेत्तारे द्रुते दशगुणं धमन् ।
तारशेषं भवेद्यावत्तावत्स्यात्तारबीजकम् ॥ १,४.३१२ ॥
[सप्तमं तारबीजम्]
श्वेताभ्रसत्वं वङ्गं च द्वन्द्वं कुर्याच्च पूर्ववत् ।
तच्चूर्णे तालकं दत्त्वा पादमम्लैर्विमर्दयेत् ॥ १,४.३१३ ॥
पुटेत्तस्मिन्क्षिपेत्तालं पूर्ववन्मर्दनं पुटम् ।
एवं पञ्चपुटं कुर्यात्तच्चूर्णं वाहयेद्द्रुते ॥ १,४.३१४ ॥
रजते द्वादशगुणं तद्भवेत्तारबीजकम् ।
[अष्टमं तारबीजम्]
श्वेताभ्रसत्वं वङ्गं च वङ्गार्धं तीक्ष्णचूर्णकम् ॥ १,४.३१५ ॥
तीक्ष्णांशा तारविमला सर्वं मूषागतं धमेत् ।
ततस्तच्चूर्णयेदम्लैः पिष्ट्वा रुद्ध्वा पुटेत्पचेत् ॥ १,४.३१६ ॥
पञ्चवारं पुनस्तच्च वाहयेद्रजते द्रुते ।
यावच्छतगुणं तावत्तालकं च क्षिपन् धमेत् ॥ १,४.३१७ ॥
तारशेषं भवेद्यावत्तावत्स्यात्तारबीजकम् ।
[ताम्रबीजम्]
ताम्रबीजं प्रवक्ष्यामि जारणार्थं रसस्य तु ॥ १,४.३१८ ॥
स्वर्णं ताम्रं समं देवि तयोस्तुल्यं च माक्षिकम् ।
ऊर्ध्वाधो निक्षिपेल्लिप्तमूषायां तद्धमेद्दृढम् ॥ १,४.३१९ ॥
धमेदेवं च दशधा दत्त्वा दत्त्वाथ माक्षिकम् ।
ताम्रबीजमिदं ख्यातं भास्वत्किरणसंनिभम् ॥ १,४.३२० ॥
[प्रथमं नागबीजम्]

अभ्रकं रसकं तुल्यं नागभस्म चतुर्गुणम् ।
धमयेच्चूर्णयेत्तच्च माक्षिकेण च मारयेत् ॥ १,४.३२१ ॥
एतत्समं शिलाचूर्णमेकीकृत्याथ वापयेत् ।
तद्वमेत्सद्दशे हेम्नि विद्रुते शतधा प्रिये ॥ १,४.३२२ ॥
नागबीजमिदं प्रोक्तमेतत्सूते तु जारयेत् ।
[द्वितीयं नागबीजम्]
नागबीजं प्रवक्ष्यामि श्रेष्ठं तद्रसजारणे ॥ १,४.३२३ ॥
रसकाभ्रकताम्रेऽहिं भागवृद्ध्या धमेत्ततः ।
माक्षिकेण हतं तच्च बीजं निर्वाहयेत्प्रिये ॥ १,४.३२४ ॥
द्वात्रिंशांशगुणं हेम्नि वङ्गं ताप्यहतं वहेत् ।
त्रिंशद्गुणं शिलावाप्यं नागबीजमुदाहृतम् ॥ १,४.३२५ ॥
[वङ्गबीजक्रमः]
बीजं प्रवक्ष्यामि वङ्गं तालं च ताप्यकम् ।
समं धमेच्चूर्णयेच्च तत्समं ताप्यतालकम् ॥ १,४.३२६ ॥
मर्दयेत्पुटयेदम्लैर्भस्म स्यात्षोडशैः पुटैः ।
तारे द्रुते शतगुणं वाहयेद्वङ्गभस्म च ॥ १,४.३२७ ॥
तत्तारे तालकं देवि द्वात्रिंशद्गुणमावहेत् ।
वङ्गबीजमिदं ज्ञेयमेतत्सूते तु जारयेत् ॥ १,४.३२८ ॥
[जारणे बिडयोगाः]
विडयोगान्प्रवक्ष्यामि जारणार्हान् सुरार्चिते ।
[१. वडवानलविडः]
सौवीरं गन्धकं कांक्षी कासीसं व्योषसैन्धवम् ॥ १,४.३२९ ॥
सौवर्चलं सर्जिका च मालतीतीरसम्भवम् ।
शिग्रुमूलरसैः सर्वं भावयेत्सप्तवासरम् ॥ १,४.३३० ॥
बिडोऽयं जारणे श्रेष्ठो नाम्ना च वडबानलः ।
[२. वैश्वानरविडः]
अर्कक्षीरैर्दग्धशङ्खं भावयेत्पुटयेत्प्रिये ॥ १,४.३३१ ॥
शतधायं विडः प्रोक्तो नाम्ना वैश्वानरो महान् ।
[३. ज्वालामुखबिडः]
गन्धकं शङ्खचूर्णं च सैन्धवं च विषं समम् ॥ १,४.३३२ ॥
शतवारं गवां मूत्रैः शिग्रुमूलरसैस्तथा ।
भावितोऽयं बिडः प्रोक्तो नाम्ना ज्वालामुखः स्मृतः ॥ १,४.३३३ ॥
[४. अग्निजिह्वकबिडः]
पलाशस्य रसैर्भाव्यं टङ्कणं शतधा प्रिये ।
लोहानां जारणे श्रेष्ठो बिडो नाम्नाग्निजिह्वकः ॥ १,४.३३४ ॥
[५ वडबाबिडः]
कान्तास्यं गन्धकं चूली चैकैकं लोहजारकम् ।
चूलीगन्धकसिन्धूत्थतालभूखगटङ्कणान् ॥ १,४.३३५ ॥
सक्षारमूत्रैर्विपचेन्नाम्नायं वडबामुखः ।
[६. महावैश्वानरो विडः]
देवदालिं मोक्षकं च निचुलं च पुनर्नवाम् ॥ १,४.३३६ ॥
पलाशं काञ्चनं वासामेरण्डं वास्तुकं तिलम् ।
कदलीमपि सर्वाङ्गं खण्डितं नाति शोषयेत् ॥ १,४.३३७ ॥
मूत्रवर्गे चाष्टगुणे प्रक्षिपेत्तदनन्तरम् ।
समूलं मूलकं दग्ध्वा तिलकाण्डं च तत्समम् ॥ १,४.३३८ ॥

क्षारद्वयं पूर्वरसे क्षिप्त्वा स्थाप्यं त्र्यहं खरे ।
आतपे तद्वस्त्रपूतं लोहपात्रे द्रवं पचेत् ॥ १,४.३३९ ॥
बहवो बुद्बुदा बाष्पा उद्भवन्ति यदा यदा ।
त्रिक्षारं त्रिकटुं गन्धं कासीसं लोणपञ्चकम् ॥ १,४.३४० ॥
सौराष्ट्रीं रामठं चूलिं समं चूर्णीकृतं क्षिपेत् ।
प्रचालयेल्लोहदर्व्या गुडपाको यथा भवेत् ॥ १,४.३४१ ॥
समुत्तार्य क्षिपेल्लोहसंपुटे सप्तवासरम् ।
भूगर्भे धान्यराशौ च सप्ताहं धारयेत्पुनः ॥ १,४.३४२ ॥
सप्ताहं धारयेद्घर्मे महावैश्वानरो बिडः ।
[७. वह्निबिडः]
जम्बीराम्लेन शतधा वनशिग्रुरसेन च ॥ १,४.३४३ ॥
गन्धकं भावयेदेष बिडः स्याद्वह्निसंज्ञकः ।
नवसारोऽपि च तथा गन्धवत्स बिडो भवेत् ॥ १,४.३४४ ॥
[८. चित्रभानुबिडः]
गन्धकं निचुलक्षारं गुंजाबीजं च टङ्कणम् ।
मूलबीजं देवदाल्याः समं सर्वं च भावयेत् ॥ १,४.३४५ ॥
तिक्तकोशातकीनीरैः सप्तधाम्लगणैस्तथा ।
बिडोऽयं चित्रभानुः स्यात्प्रधानं हेमजारणे ॥ १,४.३४६ ॥
[९. महाबिडः]
मूलकं शृङ्गिवेरं च वह्निं दग्ध्वा त्रयं समम् ।
गोमूत्रे निक्षिपेत्तच्च वस्त्रपूतं च कारयेत् ॥ १,४.३४७ ॥
अनेन भावितो गन्धः शतधा स्यान्महाबिडः ।
[१०. अन्यो महाबिडः]
तालं शिला टङ्कणं च शङ्खं लवणशुक्तिके ॥ १,४.३४८ ॥
मूत्राम्लैर्विपचेन्मन्दं वह्नावेष बिडो महान् ।
[११. वज्रानलबिडः]
अर्कक्षीरैर्दग्धशङ्खं शतधा भावयेत्ततः ॥ १,४.३४९ ॥
मर्दयित्वाम्लवर्गेण रुद्ध्वा पञ्चपुटैः पचेत् ।
तत्समं टङ्कणक्षारं क्षिप्त्वाम्लगणभावितम् ॥ १,४.३५० ॥
कृत्वा मनःशिलां गन्धं दरदं विद्रुमं ततः ।
नृपावर्तं तु पञ्चानां शंखचूर्णं समं प्रिये ॥ १,४.३५१ ॥
भावयेदम्लवर्गेण त्रिदिनं स्यान्महाबिडः ।
नाम्ना वज्रानलः प्रोक्तः खोटः सूतस्य जारणे ॥ १,४.३५२ ॥
द्वन्द्वमेलापमूषायां सारणे योजयेत्सदा ।
पारदस्तु क्षणादेव वज्रादीन्यपि जारयेत् ॥ १,४.३५३ ॥
[१२. अन्यो विडः]
निर्दग्धशङ्खचूर्णं च रविक्षीरशताप्लुतम् ।
पुटितं बहुशो देवि प्रशस्तो जारणे बिडः ॥ १,४.३५४ ॥
[१३. बडबामुखो बिडः]
शतशो वा प्लुतं चूर्णं गन्धकस्य गवां जलैः ।
निर्दग्धशङ्खचूर्णं तु शिग्रुमूलाम्बुभावितम् ॥ १,४.३५५ ॥
शतशो विषसिन्धूत्थसंयुतं वडबामुखः ।
[१४. सर्वजारकबिडः]
गन्धकं भावयेत्कन्याधुत्तूरकरवीरजैः ॥ १,४.३५६ ॥
द्रवैस्तु शतधा घर्मे विडोऽसौ सर्वजारकः ।

[१५. अन्यो बिडः]
ताम्रवल्लीदलरसैः प्लावयेद्गन्धसैन्धवम् ॥ १,४.३५७ ॥
सप्ताहेन भवेदेनं नियुञ्ज्याद्धेमजारणे ।
[१६. सिद्धबिडः]
सैन्धवं कुनटी गन्धं प्रत्येकं च पलं पलम् ॥ १,४.३५८ ॥
भूलता त्रिपलं सर्वं मर्दयेच्छोषयेत्पचेत् ।
एवं कुर्यादष्टवारमयं सिद्धबिडः स्मृतः ॥ १,४.३५९ ॥
[अभ्रकजारणम्]
अथाभ्रजारणं कर्म वक्ष्यामि शृणु पार्वति ।
तप्तखल्वे चतुःषष्टिनिष्कसूतं सुचारितम् ॥ १,४.३६० ॥
भावितं गगनं चैकं निष्कं तत्र विनिक्षिपेत् ।
त्रिक्षारं पञ्चलवणं भूखगाम्लजवेतसान् ॥ १,४.३६१ ॥
षोडशांशान् रसेन्द्रस्य क्षिपेज्जम्बीरवारिणा ।
मर्दयेद्याममात्रं तु कूर्मयन्त्रे विडान्विते ॥ १,४.३६२ ॥
पचेद्दिनं विनिक्षिप्य जीर्णग्रासो भवेद्रसः ।
एतत्सूतं तप्तखल्वे क्षिप्त्वा राजीगुडोर्णकम् ॥ १,४.३६३ ॥
इष्टिकां गृहधूमं च सैन्धवं पारदस्य तु ।
एतत्सर्वं षोडशांशं मर्द्यमम्लगणैर्दिनम् ॥ १,४.३६४ ॥
चण्डातपे पिण्डितं तद्रसे बद्ध्वाथ पोटलम् ।
अम्लवर्गेण भरिते डोलायन्त्रे पचेद्दिनम् ॥ १,४.३६५ ॥
प्रतिग्रासे त्विदं कुर्यात्पुनर्ग्रासमपेक्षते ।
ग्रासोऽजीर्णो यदि भवेत्पाच्यः कच्छपयन्त्रके ॥ १,४.३६६ ॥
एवं ग्रासक्रमेणैव जारयेद्गगनादिकम् ।
चतुःषष्टितमांशादि चतुःषष्टिगुणावधि ॥ १,४.३६७ ॥
रसेन्द्रे जारयेद्ग्रासं दत्त्वा दत्त्वा पुनः ।
[जीर्णाभ्रकरसलक्षणम्]
चतुःषष्ट्यंशके सूतो व्योमसत्वे तु जारिते ॥ १,४.३६८ ॥
दण्डधारी जलूकाभो वैष द्वात्रिंशदंशके ।
षोडशांशे वायसस्य विष्ठातुल्योऽष्टमांशके ॥ १,४.३६९ ॥
दधिमण्डसमो देवि चतुर्थांशे तु जारिते ।
नवनीतसमो द्व्यंशे गोलाभो जारितो भवेत् ॥ १,४.३७० ॥
अभ्रके समजीर्णे तु शतवेधी भवेद्रसः ।
घने द्विगुणजीर्णे तु सहस्रांशेन वेधयेत् ॥ १,४.३७१ ॥
चतुर्गुणेऽभ्रके जीर्णे त्वयुतायुर्भवेत्प्रिये ।
गगनेऽष्टगुणे जीर्णे ब्रह्मायुर्लक्षवेधकः ॥ १,४.३७२ ॥
विष्ण्वायुः षोडशगुणे जीर्णेऽभ्रे कोटिवेधकः ।
द्वात्रिंशद्गुणिते जीर्णे रुद्रायुर्दशकोटिभिः ॥ १,४.३७३ ॥
चतुःषष्टिगुणे जीर्णे नित्यायुः शतकोटिभिः ।
अभ्रके समजीर्णे तु रसो दोषान्विमुञ्चति ॥ १,४.३७४ ॥
जहाति स्वगतान्सर्वान् सर्वलोहानि भक्षयेत् ।
[पक्षच्छेद]
यन्त्रादधो न पतति नैवोत्पतति चोर्ध्वतः ॥ १,४.३७५ ॥
नोद्गारी कपिलो वर्णे वह्नौ तिष्ठति निश्चलः ।
विप्रुषो मुञ्चते देवि छिन्नपक्षो भवेद्रसः ॥ १,४.३७६ ॥
समजीर्णे तु बालः स्याद्युवा जीर्णचतुर्गुणः ।

व्योमषड्गुणजीर्णस्तु वृद्धसंज्ञो भवेद्रसः ॥ १,४.३७७ ॥
बालो विध्यति कल्केन युवा पत्रप्रलेपतः ।
जारितस्तु रसेन्द्रोऽयं वृद्धो लोहानि विध्यति ॥ १,४.३७८ ॥
बालः सूतो रुजं हन्ति न समर्थो रसायने ।
युवा रसायने दक्षो वृद्धः स्याद्देहलोहयोः ॥ १,४.३७९ ॥
[अन्यजारणप्रकारः]
अभावे घनसत्वस्य कान्तसत्वं प्रदीयते ।
तदभावे भवेत्तीक्ष्णमेवं द्वन्द्वानि जारयेत् ॥ १,४.३८० ॥
घनजीर्णस्य सूतस्य ततो द्वन्द्वानि जारयेत् ।
रसेन्द्रो द्वन्द्वरहितं न चरेदभ्रसत्वकम् ॥ १,४.३८१ ॥
तस्माद्धेमादिलोहेन युक्तमभ्रं चरेद्ध्रुवम् ।
नागाभ्रं वापि वङ्गाभ्रं ताम्राभ्रं वा सुरार्चिते ॥ १,४.३८२ ॥
ताराभ्रं वापि हेमाभ्रं ताप्याभ्रं वापि जारयेत् ।
घनसत्वं यथा जीर्णं तथा द्वन्द्वानि जारयेत् ॥ १,४.३८३ ॥
द्वन्द्वबीजरसस्याथ पक्वबीजानि जारयेत् ।
[जारणाफलम्]
खल्वं तु पीठिका देवि रसेन्द्रो लिङ्ग उच्यते ॥ १,४.३८४ ॥
मर्दनं चन्दनं तस्य ग्रासः पूजा विधीयते ।
क्षीयमाणे पातकौघे सुलभा रसजारणा ॥ १,४.३८५ ॥
जारणायां च लब्धायां ज्ञानं कैवल्यदं भवेत् ।
तावन्मुक्तिः कुतः कान्ते यावन्नो वेत्ति जारणाम् ॥ १,४.३८६ ॥
जारणा साधकेन्द्रस्य मुक्तिव्यक्तिकरा प्रिये ।
जारणार्थं रसो यावद्दिनं वह्नौ तु धार्यते ॥ १,४.३८७ ॥
शिवलोके सुखं भुङ्क्ते तावत्कल्पसहस्रकम् ।
धारयेद्यो रसं वह्नावेकाहं वा तदर्धकम् ॥ १,४.३८८ ॥
क्षीयन्ते तस्य पापानि बहुजन्मार्जितानि च ।
सुवर्णरेतसो मित्रं स्वर्णदेहस्तथा रसः ॥ १,४.३८९ ॥
असहत्वं सूतवह्नौ तोये मैत्रं सुवर्णतः ।
चतुर्गुणेन वस्त्रेण पीडितो निर्मलश्च सः ॥ १,४.३९० ॥
गालनक्रियया ग्रासे सति निःशेषनिर्गते ।
स भवेद्दण्डधारी च जीर्णग्रासस्तदा रसः ॥ १,४.३९१ ॥
ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः फट्रसेश्वराय सर्वसत्त्वोपहाराय ग्रासं गृहण गृहण ह्रीं स्वाहा ।
[गर्भद्रुतिः; गर्भद्रावणयोग्यबीजसिद्धिः; प्रथमः प्रकारः]
गर्भद्रुतिं प्रवक्ष्यामि जारितस्य रसस्य च ।
गर्भद्रावणयोग्यानि बीजानि शृणु भैरवि ॥ १,४.३९२ ॥
नागभस्म च माक्षीकं गन्धकं च समं समम् ।
चूर्णितं वाहयेत्स्वर्णे त्रिगुणं द्राविते धमन् ॥ १,४.३९३ ॥
पूतिबीजमिदं सूतगर्भे द्रवति तत्क्षणात् ।
[द्वितीयः प्रकारः]
स्वर्णे नागं समावर्त्य शिलाचूर्णं क्षिपन्क्षिपन् ॥ १,४.३९४ ॥
नागक्षये पुनर्नागं दत्त्वा दत्त्वा त्रिवारकम् ।
स्वर्णशेषं भवेद्यावत्तावद्धाम्यं पुनः पुनः ॥ १,४.३९५ ॥
एतद्बीजं द्रवत्येव रसगर्भे तु मर्दनात् ।
[तृतीयः प्रकारः]
सुवर्णं ताप्यसत्वं तु समं मूषागतं धमेत् ॥ १,४.३९६ ॥

तस्मिन्द्रुते ताप्यचूर्णं तुल्यं तुल्यं क्षिपन्क्षिपन् ।
माक्षीकसत्वं त्रिगुणमेवं वाहयं पुनः पुनः ॥ १,४.३९७ ॥
एतद्बीजं रसेन्द्रस्य गर्भे द्रवति मर्दनात् ।
[चतुर्थः प्रकारः]
सुवर्णस्य समं ताप्यसत्वमावर्तयेत्ततः ॥ १,४.३९८ ॥
कुर्यात्कण्टकवेध्यानि पत्राणि च विलेपयेत् ।
लवणेनाम्लपिष्टेन गन्धतुल्येन पार्वति ॥ १,४.३९९ ॥
तानि पत्राणि च पुटे पचेद्धेमावशेषितम् ।
एतद्बीजं रसेन्द्रस्य गर्भे द्रवति मर्दनात् ॥ १,४.४०० ॥
[पञ्चमः प्रकारः]
ताप्यतुल्यं च सिन्धूत्थं मर्दयेदम्लकेन च ।
तत्संपुटे पुटे पच्यात्पुनः संमर्दयेत्पुटेत् ॥ १,४.४०१ ॥
पुनः पुनर्द्विषड्वारमस्य तुल्यं च नागजम् ।
भस्म संमर्दयेदम्लैरनेन स्वर्णपत्रकम् ॥ १,४.४०२ ॥
लिप्त्वा लिप्त्वा धमेत्सप्तवारं तद्वाहयेत्ततः ।
द्रुतं तं वापयेत्पूर्वं कल्कितैः सप्तवारकम् ॥ १,४.४०३ ॥
एतद्बीजं रसेन्द्रस्य गर्भे द्रवति मर्दनात् ।
[षष्ठः प्रकारः]
कासीसं टङ्कणं गन्धं ताप्यं सौवर्चलं शिलाम् ॥ १,४.४०४ ॥
तुल्यं संमर्दयेत्सर्वांश्चणकाम्लैर्दिनावधि ।
एतद्बीजं रसेन्द्रस्य गर्भे द्रवति मर्दनात् ॥ १,४.४०५ ॥
[गर्भद्रावणे मूषायन्त्रसिद्धिः]
सुवर्चलं च कासीसं यवक्षारं च टङ्कणम् ।
माक्षिकं सैन्धवं चुल्ली सामुद्रं राजिका तथा ॥ १,४.४०६ ॥
तुल्यं कांक्षीं च कर्पूरमर्कस्नुक्क्षीरमर्दितम् ।
अनेन लेपयेन्मूषां बिडेनांगुलमात्रकम् ॥ १,४.४०७ ॥
मूषायन्त्रमिदं श्रेष्ठं गर्भद्रावणकर्मणि ।
[गर्भद्रुतिप्रकाराः; प्रथमः प्रकारः]
स्वर्णं ताम्रं मृतं तीक्ष्णं रञ्जितं पक्वबीजकम् ॥ १,४.४०८ ॥
गर्भद्रावणबीजं च सर्वमावर्तयेद्दृढम् ।
द्रुतेऽस्मिंस्ताप्यचूर्णं च क्षिप्त्वा क्षिप्त्वा धमन्धमन् ॥ १,४.४०९ ॥
यावत्क्षयं गते ताम्रतीक्ष्णे तावत्सुरेश्वरि ।
एतद्बीजं रसेन्द्रस्य गर्भे द्रवति मर्दनात् ॥ १,४.४१० ॥
[द्वितीयः प्रकारः]
हेम गन्धहतं नागं पक्वबीजस्य साधनम् ।
तद्द्वयं लिप्तमूषायामन्ध्रयित्वा धमेद्दृढम् ॥ १,४.४११ ॥
तच्चूर्णमभिषिक्तं च रसगर्भे द्रवत्यलम् ।
[तृतीयः प्रकारः]
सुवर्णे विद्रुते शुल्बं मृतं तीक्ष्णं शनैः शनैः ॥ १,४.४१२ ॥
वाहयेत्षड्गुणं यावत्तद्रसे द्रवति प्रिये ।
[चतुर्थः प्रकारः]
महारसाननुरसान्क्षीणलोहानि चाक्षये ॥ १,४.४१३ ॥
समांशं सममाक्षीकगन्धकावापयोगतः ।
शतशो वाहयेदेतदक्षीणांशावशेषितम् ॥ १,४.४१४ ॥
समांशं रसराजस्य गर्भे द्रवति निश्चितम् ।

[पञ्चमः प्रकारः]
जारितस्य रसेन्द्रस्य चतुःषष्टितमांशकम् ॥ १,४.४१५ ॥
गर्भद्रावणबीजं च तप्तखल्वे विनिक्षिपेत् ।
शिलारुचकमाक्षीकगन्धकासीसटङ्कणैः ॥ १,४.४१६ ॥
मर्दयेच्चणकाम्लेन सर्वमेतद्दिनावधि ।
रसस्यैतत्षोडशांशं दत्त्वा बीजं च दापयेत् ॥ १,४.४१७ ॥
मुच्यते यत्र यत्रैव तत्तद्द्रवति तत्क्षणात् ।
[षष्ठः प्रकारः]
अपामार्गपलाशोत्थभस्मक्षारं समाहरेत् ॥ १,४.४१८ ॥
टङ्कणं सयवक्षारं कासीसं च सुवर्चलम् ।
सामुद्रं सैन्धवं राजीं माक्षिकं नवसारकम् ॥ १,४.४१९ ॥
कर्पूरं माक्षिकं तुल्यं स्नुह्यर्कक्षीरमर्दितम् ।
मूषालेपमनेनैव कृत्वा कुर्याद्बिडेन च ॥ १,४.४२० ॥
लेपमङ्गुलमानेन प्राक्सूतं चात्र निक्षिपेत् ।
रुद्ध्वा स्वेद्यं दिनैकं तु करीषाग्नौ द्रवत्यलम् ॥ १,४.४२१ ॥
इत्येवं द्रावितं जार्यं यावद्बीजं तु षड्गुणम् ।
[१३. बाह्यद्रुतिः]
शिवे वक्ष्यामि ते बाह्यद्रुतिकर्म यथाक्रमम् ॥ १,४.४२२ ॥
येनोपायेनाभ्रकादिद्रुतिर्भवति तच्छृणु ।
[अभ्रकद्रुतिः]
अथाभ्रकद्रुतिं वक्ष्ये कञ्चुकीकन्दमेव च ॥ १,४.४२३ ॥
कपितिन्दौ केशतैले प्रत्येकं तु त्रिधा वपेत् ।
मूषायां द्रावयित्वा तदभ्रसत्वं द्रुतिर्भवेत् ॥ १,४.४२४ ॥
[स्वर्णद्रुतिः]
फलपांशुर्देवदाल्याः शकगोपोऽश्वलालकाः ।
टङ्कणं जालिनीनीरैर्भावयेद्बहुधा प्रिये ॥ १,४.४२५ ॥
द्रावयेत्काञ्चनं तत्र वपेत्सूतसमा द्रुतिः ।
[सर्वरत्नद्रुतिः]
त्रिक्षारं चणकाम्लं च रामठं चाम्लवेतसम् ॥ १,४.४२६ ॥
तथा ज्वालामुखीक्षारं स्थलकुम्भीरसेन च ।
पिष्ट्वा स्नुह्यर्कयोः क्षीरैस्तद्गोले मृदु हीरकम् ॥ १,४.४२७ ॥
निक्षिपेत्तच्च जम्बीरे डोलायन्त्रे त्र्यहं पचेत् ।
एवं कृते हीरकस्य द्रुतिर्भवति सूतवत् ॥ १,४.४२८ ॥
पद्मरागादिरत्नानां द्रुतिरेव कृते भवेत् ।
[द्रुतिमेलापनम्]
द्रुतीनां मेलनं वक्ष्ये शृणु भैरवि तत्त्वतः ॥ १,४.४२९ ॥
कृष्णागरुश्च कस्तूरी ब्रह्मबीजं च माक्षिकम् ।
नारीपुष्पं विषं हिंगु लशुनं टङ्कणं निशा ॥ १,४.४३० ॥
एतैः समं द्रुतिं सूतं तप्तखल्वे विमर्दयेत् ।
पाठा वन्ध्या तालमूली नीली त्रिविधचित्रकम् ॥ १,४.४३१ ॥
पद्मकन्दं क्षीरकन्दं बला गुञ्जामृतार्द्रकम् ।
अश्वलाला निम्बपत्रं स्त्रीस्तन्यं च समं समम् ॥ १,४.४३२ ॥
एतेषां ग्राहयेत्स्वच्छं रसं वस्त्रेण गालितम् ।
एतद्द्रुतियुते सूते क्षिप्त्वा क्षिप्त्वा विमर्दयेत् ॥ १,४.४३३ ॥
मिलन्ति द्रुतयः सर्वाः पारदे नात्र संशयः ।

द्रुतयो मिलिता येन यन्त्रं तेनैव कच्छपम् ॥ १,४.४३४ ॥
लिम्पेच्च बिडयोगेन मेलयेज्जारयेत्क्रमात् ।
इत्येवं रसराजस्य षड्गुणां जारयेद्द्रुतिम् ॥ १,४.४३५ ॥
[१४. रञ्जनम्]
द्रुतिजीर्णस्य सूतस्य रञ्जनं शृणु पार्वति ।
तस्माद्रञ्जकबीजानां रञ्जनं च वदामि ते ॥ १,४.४३६ ॥
[रञ्जनतैलविधिः]
पलाशपुष्पं मञ्जिष्ठा लोहितं करवीरजम् ।
पुष्पं च खदिरं रक्तचन्दनं कुक्कुटी तथा ॥ १,४.४३७ ॥
निशाद्वयं च सरलं देवदारुं जपासुमम् ।
अन्यानि रक्तपुष्पाणि लाक्षातोयेन मर्दयेत् ॥ १,४.४३८ ॥
एतच्चतुर्गुणं तैलं तैलाद्रक्तप्रसूनजम् ।
द्रवं चतुर्गुणं देयं तैलशेषं यथा भवेत् ॥ १,४.४३९ ॥
तस्मिन्निषेचयेद्बीजमेकविंशतिवारकम् ।
रञ्जयेत्पक्वबीजानि सर्वाण्येवं सुरार्चिते ॥ १,४.४४० ॥
[नागबीजरञ्जनम्]
खर्परे नागमादाय चण्डाग्निं ज्वालयेदधः ।
पलाशपर्णबीजानि क्षिपेत्तस्मिन्प्रचालयेत् ॥ १,४.४४१ ॥
पलाशदण्डेनामर्द्यं चतुर्यामेन भस्मति ।
तद्भस्म गन्धकं तुल्यमम्ले यामं प्रपेषयेत् ॥ १,४.४४२ ॥
रुद्ध्वा पुटेद्गजपुटे स्वाङ्गशीतं तदुद्धरेत् ।
तच्चतुर्थांशकं गन्धं दत्त्वा पिष्ट्वा पुटे पचेत् ॥ १,४.४४३ ॥
एवं द्विसप्तवारेण नागं स्याद्रक्तवर्णकम् ।
वाशापञ्चाङ्गचूर्णं च तच्चूर्णं ककुभस्य च ॥ १,४.४४४ ॥
शिग्रुकिंशुककोरण्डशाकपुष्पाणि नागिनीम् ।
अहिमारं कुमारीं च नागकन्यां च चूर्णयेत् ॥ १,४.४४५ ॥
एतत्सर्वं चैकभागं द्विभागं च मनःशिलाम् ।
भाण्डे सर्वं विनिक्षिप्य गवां मूत्रे चतुर्गुणे ॥ १,४.४४६ ॥
पचेत्पादावशेषं तु पूर्वनागे क्षिपन्क्षिपन् ।
चुल्ल्यां पचेद्ब्रह्मदण्डैश्चालयेत्सप्तवासरम् ॥ १,४.४४७ ॥
इदं नागं पक्वबीजे द्रुते निर्वाहयेत्त्रिधा ।
रञ्जितं जायते बीजं मुख्यं स्याद्रसरञ्जने ॥ १,४.४४८ ॥
[बीजरञ्जनप्रकारः]
ताप्यसत्वं च कृष्णाभ्रसत्वचूर्णं धमेत्समम् ।
तस्मिन्द्रुते ताप्यचूर्णं मृतशुल्बं क्रमाद्वहेत् ॥ १,४.४४९ ॥
त्रिगुणं तद्भवेद्बीजं रञ्जकं परमेश्वरि ।
[अन्यः प्रकारः]
कुनटी माक्षिकं गन्धं दरदं पेषयेत्समम् ॥ १,४.४५० ॥
रक्तवर्गस्य गोमूत्रे पेषितस्य रसे प्रिये ।
पेषयेच्छोषयेत्सप्तवारं तच्चूर्णयेत्क्षिपेत् ॥ १,४.४५१ ॥
द्वंद्विते तीक्ष्णताम्रे च तुल्यं क्षिप्त्वा धमेद्दृढम् ।
ज्योतिष्मतीतैलयुक्ते रक्तवर्गे निषेचयेत् ॥ १,४.४५२ ॥
पुनश्च पूर्वचूर्णं तु तुल्यं क्षिप्त्वा धमेत्प्रिये ।
सेचयेत्सप्तधा त्वेवं स्याद्बीजं रसरञ्जकम् ॥ १,४.४५३ ॥
[अन्यः प्रकारः]

तारं च विमलासत्त्वं समांशं द्रावयेत्ततः ।
सरक्तवर्गे गोमूत्रे भावितं दरदं त्रिधा ॥ १,४.४५४ ॥
तत्तुल्यं निक्षिपेत्तस्मिन् धमेदेवं तु सप्तधा ।
क्षिप्त्वा क्षिप्त्वा च दरदं स्याद्बीजं रसरञ्जकम् ॥ १,४.४५५ ॥
[अन्यः प्रकारः]
घनसत्त्वमहिं स्वर्णं समांशं द्वंद्वितं धमेत् ।
खर्परे रक्तवर्गं च माक्षिकं गैरिकं शिलाम् ॥ १,४.४५६ ॥
समं संचूर्णयेत्तस्मिन् वापयेच्च समं समम् ।
दशवारं भवेदेतद्बीजं सूतेन्द्ररञ्जकम् ॥ १,४.४५७ ॥
[अन्यः प्रकारः]
यवचिञ्चारसैर्भाव्या रक्तवर्णा मनःशिला ।
विंशद्वारं प्रयत्नेन तेन कल्केन लेपयेत् ॥ १,४.४५८ ॥
नागपत्रं पुटे पच्याद्यावच्चूर्णमुपागतम् ।
रसकस्य तु भागांस्त्रीन् भागैकं दरदस्य च ॥ १,४.४५९ ॥
शिलागन्धविषाणां च त्रयाणामेकभागकम् ।
सेचयेन्मातुलुङ्गाम्लैः तेन कल्केन लेपयेत् ॥ १,४.४६० ॥
मूषागर्भे क्षिपेत्तत्तत्पूर्वनागं धमेत्ततः ।
द्रुतं यावत्समुद्धृत्य लिप्त्वा मूषां पुनर्धमेत् ॥ १,४.४६१ ॥
इत्येवं सप्तधा धाम्यं नागं स्वर्णनिभं भवेत् ।
[अन्यः प्रकारः]
पीताभ्रकस्य सत्वं तु पूर्वनागं च तत्समम् ॥ १,४.४६२ ॥
द्वंद्वितं पूर्वयोगेन ह्यभिषिक्तं च कारयेत् ।
अनेन द्वन्द्वयोगेन वापो देयो द्रुतस्य च ॥ १,४.४६३ ॥
पक्वबीजस्य वारांस्त्रीन् तद्बीजं रञ्जितं शुभम् ।
[तारबीजरञ्जनम्]
अथातस्तारबीजानां रञ्जनं शृणु पार्वति ॥ १,४.४६४ ॥
नानाभूरुहसम्भूतश्वेतपुष्परसे प्रिये ।
चतुर्भागे चैकभागं कङ्गुणीतैलकं क्षिपेत् ॥ १,४.४६५ ॥
तैलावशेषं विपचेत्तारबीजानि तत्र वै ।
भूयो भूयो द्रावयित्वा सेचयेदेकविंशतिम् ॥ १,४.४६६ ॥
बीजानि रञ्जितान्येवं भवेयू रसरञ्जने ।
एवं वङ्गस्य बीजानि रञ्जयेत्परमेश्वरि ॥ १,४.४६७ ॥
[रञ्जनक्रमः]
द्रुतिजीर्णस्य सूतस्य चतुःषष्टितमांशकम् ।
निक्षिपेद्रञ्जकं बीजं तप्तखल्वे दिनावधि ॥ १,४.४६८ ॥
मर्दयेत्तप्तखल्वे तु पचेत्कच्छपयन्त्रके ।
एवं ग्रासक्रमेणैव षड्गुणं जारयेत्प्रिये ॥ १,४.४६९ ॥
[१५. - १७. सारणत्रयम्; सारणार्थे वज्रबीजसाधनम्; प्रथमः प्रकारः]
रञ्जितस्य रसेन्द्रस्य प्रवक्ष्ये सारणात्रयम् ।
सारणा योग्यबीजानि दिव्यानि च सुरार्चिते ॥ १,४.४७० ॥
स्वर्णं द्वादशभागं स्यात्तदर्धं शुद्धपारदम् ।
रसेन्द्रार्धं नागभस्म चतुर्भागं मृतं पविम् ॥ १,४.४७१ ॥
एतच्चतुष्टयं चाम्लैर्मर्दयेत्तप्तखल्वके ।
उद्धृत्य द्वन्द्वमेलापमूषायां रोधयेद्धमेत् ॥ १,४.४७२ ॥
हठात्तच्च मिलत्येव वज्रबीजमिदं प्रिये ।

[द्वितीयः प्रकारः]
भावयेच्छारिबाक्षीरैर्मृतं वज्रं दिनं ततः ॥ १,४.४७३ ॥
मर्दयेद्गोलकं कृत्वा शोषयेच्चैकभागकम् ।
त्रिभागं रसराजं च चतुर्भागं सुवर्णकम् ॥ १,४.४७४ ॥
अम्लेन मर्दयेत्पिष्टिं कृत्वा तद्वज्रगोलकम् ।
तत्पिष्ट्या वेष्टयेत्तच्च भूर्जपत्रेण वेष्टयेत् ॥ १,४.४७५ ॥
पक्षं न्यसेद्धान्यराशौ तदुद्धृत्य पुनः प्रिये ।
धमेद्धठान्मिलत्येव वज्रबीजमिदं भवेत् ॥ १,४.४७६ ॥
वज्रषोडशभागेन स्वर्णपत्रेण वेष्टयेत् ।
तत्क्षिप्त्वा लिप्तमूषायां स्वर्णांशं श्वेतकाचजम् ॥ १,४.४७७ ॥
चूर्णं वा नृकपालं वा चूर्णं कृत्वा विनिक्षिपेत् ।
निरुध्य च धमेत्तीव्रमेवं कुर्यात्पुनः पुनः ॥ १,४.४७८ ॥
क्षिप्त्वा क्षिप्त्वा श्वेतकाचं नृकपालमथापि वा ।
सप्तधैवं मिलत्येव वज्रबीजमिदं भवेत् ॥ १,४.४७९ ॥
[सारणातैलम्]
अतः परं सारणायां प्रवक्ष्ये तैलसाधनम् ।
ज्योतिष्मतीकरञ्जाक्षकटुतुम्बीसमुद्भवम् ॥ १,४.४८० ॥
तैलं कूर्मवराहादिमेषमत्स्यसमुद्भवम् ।
जलूकाभेकजाता च वसा ग्राह्या विधानतः ॥ १,४.४८१ ॥
रक्तवर्गः पीतवर्गः क्वाथ्यः क्षीरैश्चतुर्गुणैः ।
पुष्पाणां रक्तपीतानामनेकानां द्रवं हरेत् ॥ १,४.४८२ ॥
पाटलीकाकतुण्ड्युत्थमहाराष्ट्रीद्रवं तथा ।
एकांशं तैलमेकांशा वसा क्वाथश्चतुर्गुणः ॥ १,४.४८३ ॥
द्व्यंशैः पुष्पद्रवैर्द्व्यंशान् पाटल्यादिद्रवानपि ।
सर्वं ताम्रमये पात्रे मृदुना वह्निना पचेत् ॥ १,४.४८४ ॥
तस्मिन्क्षिपेत्षोडशांशं भूलतामलताप्यकम् ।
विख्यातं सारणातैलं रसराजस्य जारणे ॥ १,४.४८५ ॥
रञ्जितं रसराजं तु सारणातैलसंयुतम् ।
निक्षिपेत्सारणायन्त्रे नालमूषां गतं द्रुतम् ॥ १,४.४८६ ॥
बीजं तु ढालयेत्सूते चतुःषष्टितमांशकम् ।
उद्धृत्य तप्तखल्वे तु पट्वम्लैर्मर्दयेद्दिनम् ॥ १,४.४८७ ॥
ततः कच्छपयन्त्रे तु सविव्ये पाचयेद्दिनम् ।
इत्येवं षड्गुणं सार्यं सारितो जायते रसः ॥ १,४.४८८ ॥
एवं द्वितीयवारे तु कृते सूतोऽनुसारितः ।
तथा तृतीयवारे तु रसः स्यात्प्रतिसारितः ॥ १,४.४८९ ॥
[१८. वेधः]
सारितस्य रसेन्द्रस्य हरितालं समांशकम् ।
मर्दयेद्धूर्ततैलैश्च दिनं दिव्यौषधिद्रवैः ॥ १,४.४९० ॥
तत उद्धृत्य क्षिपेद्वज्रमूषायां विपचेद्दिनम् ।
करीषाग्नाविति पुनर्मर्द्यं पाच्यं त्रिधा प्रिये ॥ १,४.४९१ ॥
अनेन कर्मणा देवि सूतो बद्धमुखो भवेत् ।
बद्धवक्त्रस्य सूतस्य भागमेकं सुरार्चिते ॥ १,४.४९२ ॥
सुतारताम्रतीक्ष्णानां चूर्णानामेकभागकम् ।
सर्वं संमर्दयेद्देवदालीनीरैर्दिनं ततः ॥ १,४.४९३ ॥
मध्वाज्यैश्च दिनं मर्द्यं तेन कुर्यात्सुगोलकम् ।

निक्षिपेद्वज्रमूषायां रुद्ध्वा तीव्राग्निना धमेत् ॥ १,४.४९४ ॥
स रसः खोटबद्धः स्यात्तत्खोटं काचटङ्कणैः ।
तेजःपुञ्जो भवेद्यावत्तावत्कुर्याद्धमन् धमन् ॥ १,४.४९५ ॥
तं रसं योजयेद्देहे लोहे रोगे च पार्वति ।
[देहवेधक्रमः]
देहवेधं प्रवक्ष्यामि सावधानं शृणु प्रिये ॥ १,४.४९६ ॥
पाचनस्नेहनस्वेदवमनारेचनैः क्रमात् ।
शरीरं शोधयेल्लोणक्षाराम्लादिविवर्जितः ॥ १,४.४९७ ॥
ततस्त्वारोटकं सूतं भक्षयेत्परमेश्वरि ।
क्षेत्रं कृत्वा शरीरं तु ततः सिद्धरसं क्षिपेत् ॥ १,४.४९८ ॥
शतवेधिरसं पूर्वं ततः साहस्रवेधकम् ।
दशसाहस्रवेधं च लक्षवेधकरं रसम् ॥ १,४.४९९ ॥
वेधकं दशलक्षस्य कोटिवेधं सुरार्चिते ।
गन्धकेन युतं सूतं क्रमेणानेन सुव्रते ॥ १,४.५०० ॥
स रसः क्रमते देहे सिद्धयः सम्भवन्ति हि ।
रसायने तु याः प्रोक्ता मूलिका देहसिद्धिदाः ॥ १,४.५०१ ॥
ताभिर्युक्तो रसेन्द्रस्तु देहे संक्रमते प्रिये ।
क्रामति तनौ हि सूतो जनयति पुत्रांश्चदेवतागर्भान् ॥ १,४.५०२ ॥
खे गमनेन च नित्यं संचरणं सकलभुवनेषु ।
धाता भुवनत्रितये स्रष्टाद्यो ब्रह्मयोनिरिव ॥ १,४.५०३ ॥
विष्णुरिव पालनार्थे संहर्ता रुद्रदेववत्सत्कलम् ।
[लोहवेधक्रमः]
क्रामणं लोहवेधस्य वक्ष्यामि शृणु भैरवि ॥ १,४.५०४ ॥
दरदं माक्षिकं कान्तं शिलां गन्धं विषं घनम् ।
रसकं भूलतां हिङ्गु कान्तास्यं टङ्कणं प्रिये ॥ १,४.५०५ ॥
गन्धकेन हतं ताम्रं भुजङ्गं शिलया हतम् ।
दरदेन हतं तीक्ष्णं महिषीकर्णसम्भवम् ॥ १,४.५०६ ॥
मलं वायसविष्ठां च प्रथमार्तवरक्ततः ।
अनेन वेष्टयेत्सिद्धसूतं लोहेषु वेधयेत् ॥ १,४.५०७ ॥
तारकृष्ट्यष्टनवतिः स्वर्णमेकं तथा रसः ।
शतवेधी तु विख्यातस्त्वेवं साहस्रवेधकः ॥ १,४.५०८ ॥
वेधयेद्दशसाहस्रं लक्षं कोटिमथार्बुदम् ।
जारणायां बलं यावत्तावल्लोहानि वेधयेत् ॥ १,४.५०९ ॥
[१. क्रामणयोगः]
माक्षिकं भूलतां सूतं कुनटीं टङ्कणं तथा ।
स्त्रीस्तन्यरक्तं सम्पिष्टं क्रामणं क्षेपलेपयोः ॥ १,४.५१० ॥
[२. क्रामणयोगः]
हिङ्गुलं रसकं कान्तमिन्द्रगोपं विषं तथा ।
मर्दयेत्तैलरक्ताभ्यां क्रामणं क्षेपलेपयोः ॥ १,४.५११ ॥
[३. क्रामणयोगः]
गण्डोलविषभेकास्यमहिषीनेत्रजं मलम् ।
रुधिरेण समायुक्तं रससंक्रामणे हितम् ॥ १,४.५१२ ॥
[४. क्रामणयोगः]
रोचनं गुग्गुलुं स्तन्यमिन्द्रगोपं विषं तथा ।
सर्वं संमर्दयेद्देवि रससंक्रामणे हितम् ॥ १,४.५१३ ॥

[५. क्रामणयोगः]
विष्णुक्रान्ता मधूच्छिष्टं माहिषं कर्णजं मलम् ।
भूलता काकविष्ठा च लाङ्गली द्विपदीरजः ॥ १,४.५१४ ॥
नररक्तं ब्रह्मसोमा सुरसा शैलजं प्रिये ।
शृङ्गी च लक्ष्मणा गृध्रकर्णी च क्रामणं परम् ॥ १,४.५१५ ॥
[६. क्रामणयोगः]
श्रीवेष्टनिम्बनिर्यासस्त्रीस्तन्यविषटङ्कणैः ।
गोघृतेन समायुक्तो लोहे संक्रामते रसः ॥ १,४.५१६ ॥
[७. क्रामणयोगः]
परमं क्रामणं वङ्गं मृगनाभं च पार्वति ।
मातृवाहः कुलीरश्च शङ्खाभ्यन्तरजो मलः ॥ १,४.५१७ ॥
तथा कपित्थनिर्यासो रससंक्रामणं परम् ।
क्रामणं रसराजस्य वेधकाले प्रदापयेत् ॥ १,४.५१८ ॥

आक्, १, ५
[विशेषजारणाक्रमः]
श्रीभैरवी ।
सामान्यजारणा प्रोक्ता त्वया पूर्वं सदाशिव ।
विशेषजारणं ब्रूहि यथा जानाम्यहं प्रभो ॥ १,५.१ ॥
श्रीभैरवः ।
शृणु देवि वक्ष्यामि भूचराख्यं तु जारणम् ।
[भूचरी जारणा]
कृष्णं पीतं तथा रक्तं शुल्बे तीक्ष्णे च मेलयेत् ॥ १,५.२ ॥
शुल्बं शुद्धं यदा जीर्णं द्वाविंशतिगुणं मते ।
गन्धनागं ततोऽर्धं तु क्रमेणैव तु मेलयेत् ॥ १,५.३ ॥
हेम्ना तु सह दातव्यं सूतकैकेन षोडश ।
गन्धनागं यदा जीर्णं तदा बद्धो भवेद्रसः ॥ १,५.४ ॥
हेम्नि जीर्णे ततोऽर्धेन मृतलोहेन रञ्जयेत् ।
गन्धकेन हतं शुल्बं माक्षिकं दरदायसम् ॥ १,५.५ ॥
पुटेन मारयेच्छुद्धं हेम दद्यात्तु षड्गुणम् ।
सूतके हेमबीजं च यदा जीर्णं चतुर्गुणम् ॥ १,५.६ ॥
बद्धरागं विजानीयाद्धेमाभो जायते रसः ।
सारणायन्त्रमध्यस्थं तेनैव सह सारयेत् ॥ १,५.७ ॥
त्रिभागं सारितं कृत्वा पुनस्तत्रैव जारयेत् ।
जारितः सारितश्चैव पुनर्जारितसारितः ॥ १,५.८ ॥
सप्तशृङ्खलिकायोगात्कोटिवेधी भवेद्रसः ।
भूचरी जारणा प्रोक्ता खेचरीं जारणां शृणु ॥ १,५.९ ॥
[खेचरी जारणा]
हीनरागानि रत्नानि रसोच्छिष्टानि कारयेत् ।
कटुतुंबस्य बीजानि तस्यार्धेन तु दापयेत् ॥ १,५.१० ॥
महाजारसमायुक्तं कल्कं कुर्याद्विचक्षणः ।
वज्रमूषामुखे चैव तन्मध्ये स्थापयेद्रसम् ॥ १,५.११ ॥
कतकं कनकं चैवमेकीकृत्य विमर्दयेत् ।
पद्मरागप्रलेपं तु रसे ग्रासं तु दापयेत् ॥ १,५.१२ ॥

भक्षितव्यं प्रयत्नेन नत्वा च गुरुदेवयोः ।
सर्वसिद्धान्नमस्कृत्य देवताश्च विशेषतः ॥ १,५.१३ ॥
मूर्च्छाङ्गदाहश्च ततो जायते नात्र संशयः ।
आत्मानमुत्थितं पश्येद्दिव्यदेहो महाबलः ॥ १,५.१४ ॥
शङ्खकाहलनिर्घोषैः सिद्धविद्याधरैः सह ।
इच्छया विचरेल्लोकान् कामरूपी विमानगः ॥ १,५.१५ ॥
देवा वै यत्र लीयन्ते सिद्धस्तत्रैव लीयते ।
[अन्यो जारणाप्रकारः]
पुनरन्यं प्रवक्ष्यामि जारणायोगमुत्तमम् ॥ १,५.१६ ॥
सुघृष्टं पातितं सूतं सर्वदोषोज्झितं ततः ।
शाकपल्लवसारेण विष्णुक्रान्तारसेन च ॥ १,५.१७ ॥
पालाशपुष्पतोयेन भावितं गन्धकं समम् ।
समं कृष्णाभ्रसत्वं च रसकं चाष्टकं गुणम् ॥ १,५.१८ ॥
तीक्ष्णशुल्बोरगं चैव कूर्मयन्त्रेण जारयेत् ।
काञ्चनं जारयेत्पश्चाद्बिडयोगेन पार्वति ॥ १,५.१९ ॥
ततः सिद्धं विजानीयाद्वैधं शुल्वस्य दापयेत् ।
कर्मसंख्याप्रमाणेन नागो भवति काञ्चनम् ॥ १,५.२० ॥
अतः परं प्रवक्ष्यामि जारणाक्रममुत्तमम् ।
बीजचूर्णानि तैलेन भावयित्वा पुनः पुनः ॥ १,५.२१ ॥
षोडशांशेन तं ग्रासमङ्गुल्या मर्दयेच्छनैः ।
आर्द्रकादि ततो योगाद्दातव्यं षोडशांशतः ॥ १,५.२२ ॥
भूर्जे दत्त्वा ततो देयं डोलायन्त्रे विनिक्षिपेत् ।
अहोरात्रेण तद्बीजं सूतको ग्रसति प्रिये ॥ १,५.२३ ॥
समुद्धृत्य रसं देवि खल्वे संमर्दयेत्ततः ।
ततो यन्त्रे विनिक्षिप्य दिवारात्रं दृढाग्निना ॥ १,५.२४ ॥
तप्तं समुद्धृतं यन्त्रात्तप्तखल्वे विमर्दयेत् ।
मर्दयित्वार्द्रके पिण्डे क्षिप्त्वाथ त्रिपुटं दहेत् ॥ १,५.२५ ॥
ततो गर्भे पतत्याशु जरते तत्सुखेन तु ।
डोलायन्त्रे ततो दद्यादार्द्रपिण्डेन संयुतम् ॥ १,५.२६ ॥
तृतीयदिवसे सूतो जरते ग्रसते ततः ।
समजीर्णं ततो यावत्डोलायन्त्रे विचक्षणः ॥ १,५.२७ ॥
पश्चात्कच्छपयन्त्रेण समजीर्णं तु पार्वति ।
ताम्रांशद्वादशांशेन कच्छपेन तु जारयेत् ॥ १,५.२८ ॥
प्राग्वदार्द्रकयोगं च गर्भद्रावणमेव च ।
पश्चात्तं देवि निक्षिप्य पुटं दद्याद्विचक्षणः ॥ १,५.२९ ॥
अष्टांशेन ततो ग्रासं गर्भद्रावं च पूर्ववत् ।
कन्दोदरे सूरणस्य तं विनिक्षिप्य सूतकम् ॥ १,५.३० ॥
पुटयेद्वार्तिकस्तावत्यावत्कन्दो न दह्यते ।
पादांशेन तु मूषायां ग्रासः सूते विधीयते ॥ १,५.३१ ॥
पूर्ववच्च बिडं दद्याद्गर्भद्रावणमेव च ।
एवं चतुर्गुणे जीर्णे सूतको बलवान् भवेत् ॥ १,५.३२ ॥
ततः शलाकया ग्रासमग्निस्थो ग्रसते रसः ।
ततो रत्नानि जार्याणि वक्ष्यमाणक्रमेण तु ॥ १,५.३३ ॥
अभ्रकं भ्रामकं चैव शङ्खनाभिं तथैव च ।
रसानुपरसान्दत्त्वा महाजारसमन्वितम् ॥ १,५.३४ ॥

वज्रकन्दलतां ब्राह्मीमेषशृङ्ग्यमृतायसम् ।
कटुतुम्बस्य बीजानि मृतलोहानि पाचयेत् ॥ १,५.३५ ॥
सर्वाणि समभागानि शिखिशोणितमर्दितम् ।
तावत्तं मर्दयेत्प्राज्ञो यावत्कर्म दृढं भवेत् ॥ १,५.३६ ॥
मूषा मल्लाकृतिश्चैव कर्तव्याच्छादनैः सह ।
तन्मध्ये स्थापयेत्सूतमधोवातेन धामयेत् ॥ १,५.३७ ॥
आदौ तावत्प्रकर्तव्यं वज्रमौषधलेपितम् ।
गृह्यते नात्र सन्देहो यथा तीव्रहुताशने ॥ १,५.३८ ॥
कुलिशादि भवेद्दग्धं करीषा तेन मर्दयेत् ।
यावदेकादशगुणं कुलिशं जारयेद्बुधः ॥ १,५.३९ ॥
संदग्धा शङ्खनाभिश्च मातुलुङ्गरसप्लुता ।
मुक्ताफलं ततो देयं वज्रजीर्णे तु सूतके ॥ १,५.४० ॥
अनेन क्रमयोगेन ह्येकादशगुणं भवेत् ।
केवलं शिखिपित्तं च नीलीनिर्यासमिश्रितम् ॥ १,५.४१ ॥
नीलोत्पलानि लिप्तानि निक्षिप्तानि तु सूतके ।
रसः पिबेन्महारागान् हीनरागान् परित्यजेत् ॥ १,५.४२ ॥
रत्नानि शिखिपित्तं च महारत्नसमन्वितम् ।
सद्रत्नं लेपयेत्तेन प्रक्षिपेद्रसमध्यतः ॥ १,५.४३ ॥
रजनी चैव कङ्कुष्ठं ब्रह्मनिर्यासभावितम् ।
जारणं पुष्परागस्य तेनैव सह दापयेत् ॥ १,५.४४ ॥
बहुरत्नेषु जीर्णेषु भृङ्गराजेषु सुव्रते ।
रसेन्द्रो दृश्यतां देवि नीलपीतारुणच्छविः ॥ १,५.४५ ॥
[धूमवेधीरसः]
शुद्धानि हेमपत्राणि शतांशेनानुलेपयेत् ।
पुटेन मारयेदेतदिन्द्रगोपनिभं भवेत् ॥ १,५.४६ ॥
संस्पर्शाद्वेधयेत्सर्वमिदं हेम मृतं प्रिये ।
त्रिभागं सूतकेन्द्रस्य तेनेव सह कारयेत् ॥ १,५.४७ ॥
मूषामध्ये स्थिते तस्मिन् पुनस्तेनैव जारयेत् ।
धूमवेधी भवेद्देवि पुनः पुनः प्रसारितः ॥ १,५.४८ ॥
अनेन क्रमयोगेन यदि जीर्णा त्रिशृङ्खला ।
वेधयेन्नात्र सन्देहो गिरिपाषाणभूतलम् ॥ १,५.४९ ॥
पार्श्वे ज्योतिः प्रदृश्येत ऊर्ध्वं दृश्येत तेन वै ।
भूचरं तं विजानीयाद्रसेन्द्रं नात्र संशयः ॥ १,५.५० ॥
तेनाश्रान्तगतिर्देवि योजनानां शतं व्रजेत् ।
दिव्यतेजा महाकायो दिव्यदृष्टिर्महाबलः ॥ १,५.५१ ॥
सर्वरोगविनिर्मुक्तो जीवेच्चन्द्रार्कतारकम् ।
तस्य मूत्रपुरीषं तु सर्वलोहानि विध्यति ॥ १,५.५२ ॥
[अन्ये वेधप्रकाराः]
समजीर्णेन वज्रेण हेम्ना च सहितेन च ।
अग्निस्थो जारयेल्लोहान् बन्धमायाति सूतकः ॥ १,५.५३ ॥
सारयेत्तेन बीजेन सहस्रमपि वेधयेत् ।
सारितं जारयेत्पश्चाल्लेप्यं क्षेप्यं सहस्रतः ॥ १,५.५४ ॥
सारयेत्तेन बीजेन लक्षवेधमवाप्नुयात् ।
अनेन क्रमयोगेन कोटिवेधी भवेद्रसः ॥ १,५.५५ ॥
केवलं तु यदा वज्रं समजीर्णं तु कारयेत् ।

बद्धः सूतस्तदा ज्ञेयो निष्कम्पो निरुपद्रवः ॥ १,५.५६ ॥
अग्निस्थो जायते सूतः शलाकां ग्रसते क्षणात् ।
हठाग्निना धाम्यमानो ग्रसते सर्वमादरात् ॥ १,५.५७ ॥
ग्रसते जरते सूतमायुर्द्रव्यप्रदायकः ।
मूषास्थं धमयेत्सूतं हठाग्नौ नैव कम्पयेत् ॥ १,५.५८ ॥
जारयेत्सर्वरत्नानि बद्धः खेचरतां नयेत् ।
अष्टलोहेऽष्टगुणिते जीर्णे स्याद्रसबन्धनम् ॥ १,५.५९ ॥
लोहानि सर्वास्त्रिगुणं त्रिगुणं कनकं तथा ।
धूमावलोके वेधी स्यात्भवेन्निर्वाणदोऽम्बरः ॥ १,५.६० ॥
आदावष्टगुणं जार्यं व्योमसत्त्वं महारसे ।
समं हेमदशांशेन वज्ररत्नानि जारयेत् ॥ १,५.६१ ॥
समं च जारयेद्वज्रं तदासौ खेचरो रसः ।
क्रमे प्रदक्षिणावर्तः कोटिवेधी च जायते ॥ १,५.६२ ॥
[जीर्णद्रव्यमानभेदाद्वेधे विशेषः]
समे तु पन्नगे जीर्णे दशवेधी भवेद्रसः ।
द्विगुणे शतवेधी स्यात्सहस्रं त्रिगुणे भवेत् ॥ १,५.६३ ॥
चतुर्गुणेऽयुतं देवि क्रमेणानेन वर्धयेत् ।
उत्तरोत्तरवृद्ध्या तु जारयेत्तत्र पन्नगम् ॥ १,५.६४ ॥
कुटिलं पन्नगं जार्यं नवसंख्याक्रमेण तु ।
दत्त्वा क्रमेण देवेशि कोटिवेधी भवेद्रसः ॥ १,५.६५ ॥
गन्धकादिमपाषाणे षड्गुणे जीर्णतां गते ।
रोगहर्ता रसः स्यात्तु समुखे तवदा भवेत् ॥ १,५.६६ ॥
तस्मिन् शतगुणे जीर्णे रुग्जरामृत्युहा भवेत् ।
अभ्रकादिमपाषाणसत्त्वान्यात्मसमं ग्रसन् ॥ १,५.६७ ॥
रुग्जरा मरणं जित्वा शतवेधी रसो भवेत् ।
शतायुर्द्विगुणे जीर्णे सूतः साहस्रवेधकः ॥ १,५.६८ ॥
चतुर्गुणे सहस्रायुः पारदोऽयुतवेधकः ।
रसश्चाष्टगुणे जीर्णे लक्षायुर्लक्षवेधकः ॥ १,५.६९ ॥
ब्रह्मायुः षोडशगुणे कोटिवेधी भवेद्रसः ।
द्वात्रिंशद्गुणिते जीर्णे खेचरत्वादिसिद्धिदः ॥ १,५.७० ॥
विष्णोरायुर्बलं दत्ते पारदः स्पर्शवेधकः ।
चतुःषष्टिगुणे जीर्णे शिवायुः शब्दवेधकः ॥ १,५.७१ ॥
[षड्गुणाभ्रकजारणेन सर्वदोषनाशः]
रसस्य सर्वदोषास्तु षड्गुणेनाभ्रकेण तु ।
जीर्णेन नाशमायान्ति नात्र कार्या विचारणा ॥ १,५.७२ ॥
तदा ग्रसति लोहानि त्यजेच्च गतिमात्मनः ।
[पञ्चावस्था]
धूमश्चिटिचिटिश्चैव मण्डूकप्लुतिरेव च ॥ १,५.७३ ॥
सकम्पश्च विकम्पश्च पञ्चावस्था रसस्य तु ।
समजीर्णो भवेद्बालो यौवनस्थश्चतुर्गुणः ॥ १,५.७४ ॥
वृद्धः षड्गुणजीर्णस्तु सर्वकर्मकरः शुभः ।
[जारणे क्रमः]
गन्धकं जारयेदादौ सर्वसत्त्वान्यतः परम् ॥ १,५.७५ ॥
ततः सर्वाणि लोहानि द्वन्द्वानि विविधानि च ।
पक्वबीजानि रत्नानि द्रुतिसत्त्वे च जारयेत् ॥ १,५.७६ ॥

चतुःषष्ट्यंशके पूर्वं द्वात्रिंशांशे तृतीयकः ।
तृतीयः षोडशांशे तु चतुर्थश्चाष्टमेन च ॥ १,५.७७ ॥
पञ्चमोऽथ चतुर्थांशे षष्ठो द्व्यंशे प्रकीर्तितः ।
शतांशे सप्तमो ज्ञेयो ग्रासमानं रसस्य तु ॥ १,५.७८ ॥
[ग्रासमानभेदेन स्वरूपभेदः]
चतुःषष्ट्यंशके ग्रासे दण्डधारी भवेद्रसः ।
जलूकाभो द्वितीये तु ग्रासयोगे सुरेश्वरि ॥ १,५.७९ ॥
ग्रासे रसात्तृतीये च काकविष्ठासमो भवेत् ।
चतुर्थो गोलकाकारः पञ्चमे दहनप्रभः ॥ १,५.८० ॥
षष्ठे सूर्यप्रभः सूतस्तेजःपुञ्जश्च सप्तमे ।
रसराजस्य देवेशि क्रमाज्जीर्णस्य लक्षणम् ॥ १,५.८१ ॥
समांशं द्विगुणं ग्रासं ततः सूते चतुर्गुणम् ।
तथा चाष्टगुणं देवि जारयेच्च कलागुणम् ॥ १,५.८२ ॥
द्वात्रिंशद्गुणितं देवि चतुःषष्टिगुणं क्रमात् ।
[संस्कारैर्जायमाना गुणाः]
तीव्रत्वं जनयेत्स्वेदादमलत्वं च मर्दनात् ॥ १,५.८३ ॥
मूर्छनाद्दोषराहित्यमुत्थानात्पूतिनाशनम् ।
रसायनं पातनेन रोधादाप्यायनं भवेत् ॥ १,५.८४ ॥
अचापल्यं नियमनाद्दीपनात्समुखो ज्वलेत् ।
वासनाद्योगसांगत्यं चारणाद्बलचारिता ॥ १,५.८५ ॥
जारणाद्बन्धनं सम्यगेकत्वं द्रावणद्वयात् ।
रक्तत्वं रञ्जनात्तस्य व्यापित्वं सारणात्रयात् ॥ १,५.८६ ॥
क्रामित्वं क्रामणाद्देहलोहेष्वपि च वेधनात् ॥ १,५.८७ ॥

आक्, १, ६
[देहवेधक्रमः]
प्रणम्य शिरसा शम्भुं पप्रच्छ गिरिजात्मजा ।
श्रीभैरवी ।
देहवेधस्त्वया पूर्वं संक्षेपात्कथितः प्रभो ॥ १,६.१ ॥
तं देहवेधमाचक्ष्व सम्यक्जानाम्यहं यथा ।
श्रीभैरवः ।
देवि प्रवक्ष्यामि देवानामपि दुर्लभम् ॥ १,६.२ ॥
योगिनां भोगयुक्तानां देहवेधं सुरेश्वरि ।
पाचनादि प्रकुर्वीत पञ्चकर्मविधानतः ॥ १,६.३ ॥
[पञ्चकर्माणि; १. पाचनम्]
लवणादिसमुत्क्लिष्टान् दोषान् संशोधयेत्क्रमात् ।
ततो जीर्णरसं चाद्यात्क्रमादेवं सुरेश्वरि ॥ १,६.४ ॥
लघ्वाहारो दिवा भूत्वा क्षुद्राधान्याकनागरम् ।
एतत्त्रयं पलोन्मेयमुदकेष्ववलोडयेत् ॥ १,६.५ ॥
अष्टावशिष्टं संक्वाथ्य प्रतिरात्रं पिबेत्त्र्यहम् ।
अनन्तरं वराक्वाथं पूर्ववत्त्रिदिनं पिबेत् ॥ १,६.६ ॥
इति पाचनमातन्यादथ स्नेहनमाचरेत् ।
[२. स्नेहनम्]
घृतौदनं छागरसं दिवा भुञ्जीत मात्रया ॥ १,६.७ ॥

आज्यान्नं वा मुद्गरसं लघ्वाशी स्याद्दिने सुधीः ।
रात्रौ पिबेद्घृतं गव्यं सैन्धवेन समन्वितम् ॥ १,६.८ ॥
निष्कमेकं सैन्धवं च घृतं निष्कचतुष्टयम् ।
भृङ्गामलकतैलेन सर्वाङ्गमभिषेचयेत् ॥ १,६.९ ॥
एवं सप्तदिनं कुर्यात्स्नेहनं परमं हितम् ।
[३. स्वेदनम्]
मत्स्यमांसं माषतिलयवजामलसक्तवः ॥ १,६.१० ॥
सर्वमेतद्भवेत्प्रस्थमेकाष्ठीलागरूबला ।
रास्ना व्याघ्री घनापत्रं कौशिकातिविषा निशा ॥ १,६.११ ॥
सर्वमेतद्द्वयपलं तक्रक्षीराम्बुकांजिकम् ।
द्व्याढके निक्षिपेत्सर्वं मृत्पात्रे क्वाथयेत्सुधीः ॥ १,६.१२ ॥
कुर्यात्तस्योष्मणा गात्रं स्विन्नं द्विघटिकावधि ।
एवं सप्तदिनं कुर्यात्स्वेदनं परमं हितम् ॥ १,६.१३ ॥
[४ वमनम्]
मदनस्य फलं चैकं पाठा षोडशिकं जलम् ।
पादावशिष्टं संक्वाथ्य तज्जले वस्त्रशोधिते ॥ १,६.१४ ॥
पिप्पलीन्द्रयवा यष्टिलवणं कर्षमात्रकम् ।
निक्षिपेच्च पिबेत्प्रातर्वान्तिः स्यात्सर्वरोगहा ॥ १,६.१५ ॥
[५. विरेचनम्]
सूतटङ्कणगन्धाश्म त्रिकटुं त्रिफलां समम् ।
एतैः समं तु जेपालं श्लक्ष्णं तत्परिमर्दयेत् ॥ १,६.१६ ॥
गुञ्जाद्वितयमात्रं तु गुडेन सह भक्षयेत् ।
विरेचनमिति प्रोक्तं सर्वव्याधिविनाशनम् ॥ १,६.१७ ॥
पञ्चकर्मेति कथितं क्रमात्कुर्याद्विरेचने ।
[दोषशोधकयोगाः]
केतकीस्तनजम्बीरं प्रत्यहं कुडुवं पिबेत् ॥ १,६.१८ ॥
सप्तवासरपर्यन्तं प्रातर्लवणदोषहृत् ।
सलिले षोडशपले त्रिफलैकपलं क्षिपेत् ॥ १,६.१९ ॥
क्वाथयेत्पादशेषं तत्तस्मिन् शीते मधोः पलम् ।
पिबेत्प्रभाते त्रिदिनं क्षारदोषहरं परम् ॥ १,६.२० ॥
विडङ्गं सवचाकुष्ठं केतकीस्तनसंयुतम् ।
क्वथितं त्रिदिनं पीतमम्लदोषहरं पिबेत् ॥ १,६.२१ ॥
अथवा तिन्त्रिणीक्षारसलिलं पलमात्रकम् ।
यवक्षारसिताकर्षं संयोज्य त्रिदिनं पिबेत् ॥ १,६.२२ ॥
अम्लदोषविनाशोऽयं कथितश्च रसायने ।
वचाबिडालपालाशबीजजन्तुघ्नकर्षकम् ॥ १,६.२३ ॥
कर्षं गुडं च तत्सर्वं भक्षयेदुष्णवारि च ।
पिबेत्प्रातस्त्रिदिवसं भवेत्तत्क्रिमिपातनम् ॥ १,६.२४ ॥
श्यामावह्निविडङ्गानि वाशा त्र्यूषं फलत्रयम् ।
सैन्धवं देवदारुं च मुस्ता चैतत्समं समम् ॥ १,६.२५ ॥
घृतैः कर्षं लिहेत्प्रातः सप्ताहात्सर्वरोगजित् ।
एवं कृत्वा देहशुद्धिं शाल्यन्नं क्षीरभोजनम् ॥ १,६.२६ ॥
सम्यग्जातबलो भूत्वा ततः कुर्याद्रसायनम् ।
[रसायनोपयोगः]
क्षीराज्यामलकरसक्षौद्रैः सुरतरूद्भवम् ॥ १,६.२७ ॥

तैलं निर्मथ्य तत्सर्वं द्विपलं प्रत्यहं पिबेत् ।
मासेन कान्तिर्मेधा च भवत्येव न संशयः ॥ १,६.२८ ॥
द्वितीयमासि पूर्वोक्तं तत्पिबेत्तच्चतुःपलम् ।
तेन शाम्यन्ति दोषाश्च विकारा नेत्रसम्भवाः ॥ १,६.२९ ॥
पुनस्तृतीये मासे तु सेव्यं षट्पलमात्रकम् ।
तेनामरवपुर्भूयान्महातेजा भवेद्ध्रुवम् ॥ १,६.३० ॥
[आरोटरससेवाक्रमः]
अथारोटरसः सेव्यः क्रमेण परमेश्वरि ।
अयःशुल्बाभ्रताप्येभ्यः पातितो मारितः क्रमात् ॥ १,६.३१ ॥
अयमारोटकरसो देहसिद्धिकरः परः ।
स्वेदनाद्यैश्च संस्कारैः सप्तभिः संस्कृतो रसः ॥ १,६.३२ ॥
मूर्छितो रञ्जितो देवि सूतस्त्वारोटकः स्मृतः ।
रसायने रोगशान्त्यां श्रेष्ठः सर्वगुणप्रदः ॥ १,६.३३ ॥
कान्ताभ्रसत्वारोटाश्च समं गुञ्जाद्वयोन्मितम् ।
मध्वाज्यत्रिफलाभिश्च मासमेकं भजेदिति ॥ १,६.३४ ॥
एवं क्रमेण संसेव्यं द्वित्रिवेदेषुषट्क्रमात् ।
एवं षोडशमासान्तं गुञ्जाषोडशमात्रकम् ॥ १,६.३५ ॥
आरोटकरसे चेत्थं कुर्यान्मत्प्राणवल्लभे ।
वलीपलितनिर्मुक्तो जीवेच्च शरदः शतम् ॥ १,६.३६ ॥
[आरोटरसः]
कान्तसत्त्वाभ्रसत्त्वं च स्वर्णजीर्णरसस्तथा ।
सर्वमेतत्समीकृत्य भजेदारोटकं तथा ॥ १,६.३७ ॥
क्षेत्रीकरणमेतद्धि सहस्रायुष्यकारकम् ।
अभूमौ योजितः सूतो न प्ररोहति कुत्रचित् ॥ १,६.३८ ॥
तस्मात्क्षेत्रमकृत्वैव योजयेद्यस्तु सूतकम् ।
न प्ररोहेदस्य शुभं बीजमिवोषरे ॥ १,६.३९ ॥
[खोटबद्धरससेवाक्रमः]
पूर्वोक्तखोटबद्धस्य सूतस्य विधिमुत्तमम् ।
क्रामणं च क्रमाद्वक्ष्ये तथा विधिनिषेधनम् ॥ १,६.४० ॥
शृणु पार्वति यत्नेन त्वत्प्रीत्या कथयाम्यहम् ।
कान्ताभ्रस्वर्णवज्राणि रसस्य क्रामणं परम् ॥ १,६.४१ ॥
क्रामणेन विना सूतो न सिध्येद्देहलोहयोः ।
गुञ्जामात्रं खोटबद्धं क्रामणक्षौद्रसंयुतम् ॥ १,६.४२ ॥
मासमेकं भजेदित्थं पुनर्विधिक्रमेण वै ।
मासषोडशपर्यन्तं यथारोटरसस्तथा ॥ १,६.४३ ॥
स शतायुष्यमाप्नोति सर्वरोगविवर्जितः ।
पलमात्रोपयोगेन व्याधिभिर्नाभिभूयते ॥ १,६.४४ ॥
द्वितीये शुक्रवृद्धिः स्यात्तृतीये बलवान् भवेत् ।
चतुर्थे पलितं हन्ति वलिं जयति पञ्चमे ॥ १,६.४५ ॥
षष्ठे श्रुतिधरो वाग्मी सप्तमे नेत्ररोगहृत् ।
अष्टमे तार्क्ष्यदृष्टिः स्याद्ब्रह्मायुर्ब्रह्मविक्रमः ॥ १,६.४६ ॥
उपयुञ्ज्यान्नवपलं सिद्धिमेलापकं भवेत् ।
विनियुञ्ज्याद्दशपलं द्वितीयः शङ्करो भवेत् ॥ १,६.४७ ॥
सहस्रायुष्यकरं सूतं माषमात्रं भजेन्नरः ।
अयुतायुष्करं सूतं यवमात्रं भजेत्प्रिये ॥ १,६.४८ ॥

लक्षायुष्यकरं सूतं व्रीहिमात्रं भजेत्सुधीः ।
कोट्यां भजेत्सूतं खादयन्मुद्गमात्रकम् ॥ १,६.४९ ॥
एतत्सर्वं रसानां तु क्रामणं पूर्ववद्भवेत् ।
सहस्रायुःप्रदः सूतो ब्रह्मत्वं विदधाति सः ॥ १,६.५० ॥
अयुतायुष्करः सूतो विष्णुतां प्रददाति च ।
लक्षायुष्यकरः सूतो रुद्रत्वमुपपादयेत् ॥ १,६.५१ ॥
कोट्यायुष्यप्रदः सूतः शिवत्वं विदधाति च ।
माक्षीकजीर्णसूतस्तु धनदत्वं ददाति वै ॥ १,६.५२ ॥
इन्द्रत्वं विमलाजीर्णस्त्वभ्रजीर्णोऽर्कतां ददेत् ।
ब्रह्मतां शुल्बजीर्णश्च विष्णुतां तारजारितः ॥ १,६.५३ ॥
रुद्रता हेमजीर्णे स्यादीशत्वं वज्रजारिते ।
सदाशिवत्वं च ददेत्पारदो द्रुतिजारितः ॥ १,६.५४ ॥
सच्चिदानन्दरूपत्वं सूतको बीजजारितः ।
सामान्येन तु तीक्ष्णेन रुद्रत्वं प्राप्नुयान्नरः ॥ १,६.५५ ॥
एवं यो लोहजीर्णं तु भक्षयेद्भस्मसूतकम् ।
जलेन जलरूपी स्यात्स्थलेन स्थलतां व्रजेत् ॥ १,६.५६ ॥
तेजस्त्वं तेजसा देवि वायुना वायुरूपभाक् ।
कर्ता हर्ता स्वयं साक्षाच्छापानुग्रहकारकः ॥ १,६.५७ ॥
यत्र मूत्रपुरीषं तु साधकस्तु परित्यजेत् ।
पाषाणं मृण्मयं तत्र स्पृष्टं भवति काञ्चनम् ॥ १,६.५८ ॥
प्रस्वेदात्तस्य गात्रस्य लोहान्यष्टौ च वेधयेत् ।
तत्सर्वं कनकं दिव्यं भक्षिते द्वादशे पले ॥ १,६.५९ ॥
अथवा तारजीर्णं तु भक्षयेद्भस्मसूतकम् ।
शुल्बारं वङ्गघोषं च तत्स्वेदात्तारता भवेत् ॥ १,६.६० ॥
अथवा तीक्ष्णजीर्णं तु भक्षयेद्भस्मसूतकम् ।
मूत्रेण तस्य स्पृष्टं तु वङ्गं व्रजति तारताम् ॥ १,६.६१ ॥
एकैकेन निषेकेन स्तम्भनं नागवङ्गयोः ।
गुञ्जामात्रं रसं देवि हेमजीर्णं तु भक्षयेत् ॥ १,६.६२ ॥
द्विगुञ्जं तारजीर्णस्य रविजीर्णस्य च त्रयम् ।
तीक्ष्णाभ्रकान्तमाषैकं गुंजैका द्वेऽथवा भवेत् ॥ १,६.६३ ॥
वज्रवैक्रान्तजीर्णं तु भक्षयेत्सर्षपोन्मितम् ।
नागवङ्गवसाकीटविषोपविषसंयुतम् ॥ १,६.६४ ॥
मूत्रयुक्तं हठाद्बद्धं त्यजेत्कल्कं रसायने ।
हेमतारप्रवेशेन जातो योऽग्निसहः क्रमात् ॥ १,६.६५ ॥
बद्धश्च रसराजोऽयं देहसिद्धिप्रदो भवेत् ।
वज्रायस्कान्तमाक्षीकवैक्रान्ताभ्रककाञ्चनम् ॥ १,६.६६ ॥
एतैर्जीर्णो यथालाभं रसः शस्तो रसायने ।
षडेवोपरसाश्चैव भक्षणार्थं रसायने ॥ १,६.६७ ॥
भस्मनस्तीक्ष्णजीर्णस्य पलमेकं तु भक्षयेत् ।
दशवर्षसहस्राणि वज्रकायः स जीवति ॥ १,६.६८ ॥
एवं च द्वादशपलं तीक्ष्णजीर्णस्य भक्षयेत् ।
एवं जीवन्महाकल्पं प्रलयान्ते शिवं व्रजेत् ॥ १,६.६९ ॥
भस्मनः शुल्बजीर्णस्य पलेन ब्राह्ममायुषम् ।
द्विपले वैष्णवायुष्यं रुद्रायुस्त्रिपलेन तु ॥ १,६.७० ॥
चतुर्थे तु पले देवि शिवत्वं प्राप्नुयान्नरः ।

हेमजीर्णे भस्मसूते त्रिपले भक्षिते क्रमात् ॥ १,६.७१ ॥
अष्टाशीतिसहस्राणि योगिन्यो मददर्पिताः ।
तस्य तिष्ठन्ति किंकर्यः कामरूपी भवेन्नरः ॥ १,६.७२ ॥
यद्यद्भावयते रूपं तत्तद्रूपधरो भवेत् ।
यत्र यत्र विलीयन्ते सिद्धिस्तत्रैव लीयते ॥ १,६.७३ ॥
मिते पले द्वादशभिर्हेमभस्मनि भक्षिते ।
गुंजैकमात्रं देवेशि ज्ञात्वा चाग्निबलं निजम् ॥ १,६.७४ ॥
घृतेन मधुना चाद्यात्ताम्बूलं कामिनीं भजेत् ।
एको हि दोषः सूक्ष्मोऽपि भक्षिते भस्मसूतके ॥ १,६.७५ ॥
त्रिःसप्ताहाद्वरारोहे कामान्धो जायते नरः ।
कामिनीनां सहस्रं तु क्षोभयेद्दिवसान्तरे ॥ १,६.७६ ॥
नारीसङ्गाद्वरारोहे देहे क्रामति सूतकः ।
नारीसङ्गाद्विना देवि ह्यजीर्णं तस्य जीर्यते ॥ १,६.७७ ॥
मैथुनाच्चलिते शुक्ले त्रिसप्ताहादधः कृतात् ।
जायते प्राणसंदेहस्तावन्मैथुनं त्यजेत् ॥ १,६.७८ ॥
युवत्या जल्पनं कार्यं युवत्या चाङ्गमर्दनम् ।
यस्याः स्पर्शनमात्रेण रसः क्रामति विग्रहे ॥ १,६.७९ ॥
यथा तथा ह्लादयते सुस्त्रीरूपनिरीक्षणम् ।
तथा क्रामति देवेशि सूतकोऽसौ ततः क्षणात् ॥ १,६.८० ॥
अश्वत्थसदृशो यस्या आधारश्च समः शुभः ।
तादृशस्तु भगो देवि भाजने तु रसायने ॥ १,६.८१ ॥
निर्मांसश्चैव दीर्घश्च भगः शुष्कशिरास्तथा ।
दुःखदारिद्र्यकर्तारं वर्जयेत्तं रसायने ॥ १,६.८२ ॥
पक्षे शुक्ले शुभदिने चन्द्रताराबलान्विते ।
सुमुहूर्ते चिन्त्य शिवानलविप्रगुरून्द्विजः ॥ १,६.८३ ॥
संतुष्टः सुमना भूत्वा रसं सेवेत सिद्धिदम् ।
पयसा हेमशुण्ठीभ्यां नस्यं क्रामणमुत्तमम् ॥ १,६.८४ ॥
हेमादि षड्लोहकृतमञ्जनं क्रामणं परम् ।
[रससेवायां पथ्यापथ्यम्]
अतः परं प्रवक्ष्यामि रससेवाहिताहितम् ॥ १,६.८५ ॥
रक्तशाल्यन्नगोधूमं गव्यं क्षीरं घृतं दधि ।
जाङ्गलं पललं मुद्गं शर्करा मधु सैन्धवम् ॥ १,६.८६ ॥
हंसोदकं वास्तुकं च मेघनादः पुनर्नवा ।
पटोलालाबुकदलीधान्यकेक्षुकदाडिमम् ॥ १,६.८७ ॥
नालिकेराम्बु विश्वं च सदा ताम्बूलचर्वणम् ।
गन्धसारं कुङ्कुमं च मृगनाभिं विलेपयेत् ॥ १,६.८८ ॥
सुरभीणि सुपुष्पाणि मृदुशय्येष्टकामिनीः ।
शिवात्मज्ञानकथनं मृदुभाषा सुखासिका ॥ १,६.८९ ॥
दिव्याम्बराणि शुद्धानि छाया चाल्पविपर्यटम् ।
मृत्युञ्जयजपो हर्षो मन्दहासश्च शुद्धता ॥ १,६.९० ॥
नर्तनालोकनं गीतश्रवणं शिवपूजनम् ।
देवाग्निगुरुविप्राणां वन्दनं श्रुतिपालनम् ॥ १,६.९१ ॥
समाधिः प्राणिकरुणा सत्यवाक्यं हितं प्रियम् ।
वाग्देहमनसा चेष्टा यथा दुःखनिरोधिनी ॥ १,६.९२ ॥
एतत्सर्वं रसेन्द्रस्य क्रामणं कथितं प्रिये ।

अहितं रससेवायाः कथयामि शृणु प्रिये ॥ १,६.९३ ॥
अत्यशनं चातिपानमतिनिद्रातिजागरम् ।
अकाले भोजनं स्त्रीणामतिसङ्गोऽप्यसङ्गिता ॥ १,६.९४ ॥
अस्थानमदहासाश्च हर्षः कोपोऽधिकस्पृहा ।
बहुजल्पो जलक्रीडा दुःखमत्यन्तचिन्तनम् ॥ १,६.९५ ॥
कलिङ्गं कारवेल्लं च कूष्माण्डः कर्कटी तथा ।
काकमाची कुलत्थं च कार्कोटी च कुसुम्भिका ॥ १,६.९६ ॥
तिलातसीतैलमाषकपोतकमसूरकाः ।
तक्रभक्तं च सौवीरं तिक्तकट्वम्ललावणम् ॥ १,६.९७ ॥
क्षारं क्षौद्रं पिच्छिलं च पित्तलं च परूषकम् ।
माहिषीः क्षीरविकृतीर्विदरं सहकारकम् ॥ १,६.९८ ॥
नारङ्गबिल्वलिकुचशिग्रुनैवेद्यभोजनम् ।
अग्निस्पर्शनमङ्घ्रिभ्यां ताडनं गोद्विजन्मनोः ॥ १,६.९९ ॥
कुमारीबालतुरगपश्वादीनां च ताडनम् ।
पातकं प्राणिहिंसा च छेदनं भूरुहामपि ॥ १,६.१०० ॥
अक्षादिसप्तव्यसनं छायाश्वत्थकपित्थयोः ।
लिङ्गस्त्रीनरखट्वानां तथा द्वीपिविभीतयोः ॥ १,६.१०१ ॥
चतुष्पथातिनिर्विक्तस्थाने विण्मूत्रमोचनम् ।
शिवद्विजगुरुस्त्रीणां वीरयोनियतात्मनाम् ॥ १,६.१०२ ॥
समयश्रुतिसूतानां नदीतीर्थाम्भसां नृणाम् ।
पलाण्डुहिङ्गुलशुनराजिकाबृहतीद्वयम् ॥ १,६.१०३ ॥
निष्पावलङ्घनोद्वर्तिनिशाशाभरणन्दिता ।
सुप्तिर्मद्यासवौ ताम्रचूडश्च जलजामिषम् ॥ १,६.१०४ ॥
तीक्ष्णोष्णगुरुविष्टम्भिरूक्षशुष्कामिषं मधु ।
कदलीपत्रकांस्येषु भोजनं घर्मसेवनम् ॥ १,६.१०५ ॥
एतानि द्रव्यजालानि निषिद्धानि रसायने ।
[अपथ्यजनिता रोगाः]
सेवेत चेत्प्रमादेन विकृतिर्जायते क्षणात् ॥ १,६.१०६ ॥
रसाजीर्णे भवेत्कान्ते शोषो मूर्च्छा भ्रमो ज्वरः ।
क्लमः कम्पः शकृन्मूत्ररोधनं शूलवेपथुः ॥ १,६.१०७ ॥
अनिद्रालस्यहिक्का च कासश्वासविजृम्भिकाः ।
अरोचकातिसारश्च लिङ्गस्तम्भोऽक्षिकुक्षिषु ॥ १,६.१०८ ॥
वक्षःकर्णोदराङ्घ्रौ च मेढ्रे शिरसि सन्धिषु ।
दाहोऽङ्गभङ्गसर्वेऽन्ये व्याधयः सम्भवन्ति वै ॥ १,६.१०९ ॥
रसाजीर्णप्रशान्त्यर्थं योगोऽयं कथ्यते मया ।
राजकोशातकी पुङ्खा गरुडी कारवल्लिका ॥ १,६.११० ॥
कार्कोटी काकमाची च देवदाली पराजिता ।
सर्वमेतच्चैकपलं गोमूत्रे तु चतुष्पले ॥ १,६.१११ ॥
क्वाथयेत्पादशेषं तु कार्षिकं स्वच्छसैन्धवम् ।
निक्षिपेत्तत्पिबेत्क्वाथं रसाजीर्णे हितंकरम् ॥ १,६.११२ ॥
सुखीभवेत्त्रिदिवसे रसस्य क्रामणं भवेत् ।
रसो व्यथयते तत्तदङ्गं संपरिमर्दयेत् ॥ १,६.११३ ॥
वा स्तनेन च तन्वङ्ग्या निर्व्यथः क्रमते रसः ।
[सप्तधातुवेधः]
त्वग्वेधः प्रथमं देवि रक्तवेधो द्वितीयकः ॥ १,६.११४ ॥

तृतीयो मांसवेधः स्यान्मेदोवेधश्चतुर्थकः ।
अस्थिवेधः पञ्चमः स्यात्षष्ठो मज्जात्मको भवेत् ॥ १,६.११५ ॥
सप्तमः शुक्लवेधः स्यात्नाडीवेधस्तथाष्टमः ।
नवमश्चक्षुषो वेधो दशमः सर्ववेधकः ॥ १,६.११६ ॥
रसवेधेन भुजगः स्वर्णं स्याद्रक्तवेधतः ।
त्रपु स्वर्णं भवेन्मांसवेधात्तीक्ष्णं च काञ्चनम् ॥ १,६.११७ ॥
मेदोवेधेन शुल्बं तु स्वर्णं स्यादस्थिवेधतः ।
रूप्यं स्वर्णं भवेन्मज्जवेधाल्लोहानि कांचनम् ॥ १,६.११८ ॥
शुक्लवेधेन मृत्पात्रं काञ्चनं भवति प्रिये ।
वज्रजीर्णो वीर्यवेधी मज्जामभ्रकजारितः ॥ १,६.११९ ॥
हेमजीर्णस्त्वस्थिवेधी रूप्यजीर्णो रसं प्रिये ।
मेदोवेधी ताप्यजीर्णो मांसवेधी तु पारदः ॥ १,६.१२० ॥
शुल्बजीर्णो रक्तवेधी कान्तजीर्णो रसात्मकः ।
तीक्ष्णबद्धेन नीलाभस्ताम्रेणारुणसप्रभः ॥ १,६.१२१ ॥
रजतेनेन्दुसंकाशो हेम्ना काञ्चनसप्रभः ।
धूमावलोकी वक्त्रस्थो मासात्खेचरतां नयेत् ॥ १,६.१२२ ॥
स्पर्शवेधी तु वक्त्रस्थो द्विमासात्सिद्धिदायकः ।
शतकोटिस्त्रिभिर्मासैश्चतुर्भिर्दशकोटिकृत् ॥ १,६.१२३ ॥
पञ्चभिः कोटिवेधी स्यादष्टभिश्चायुतं पुनः ।
साहस्रं नवभिर्मासैर्दशमासे शतं पुनः ॥ १,६.१२४ ॥
तस्य मूत्रपुरीषैस्तु श्लेष्मणाङ्गमलैस्तथा ।
लेपाद्धेमत्वमायान्ति यानि लोहानि भूतले ॥ १,६.१२५ ॥
चतुःषष्ट्यंशतो वेधी मासमेकादशस्य तु ।
द्वात्रिंशकवेधी तु वर्षाद्देहं तु वेधयेत् ॥ १,६.१२६ ॥
सर्वरोगैर्विनिर्मुक्तो वलीपलितवर्जितः ।
नासौ छिद्येत शस्त्रैश्च पावकेन न दह्यते ॥ १,६.१२७ ॥
वायुवेगी महातेजाः कामदेव इवापरः ।
इच्छया जायते दृश्योऽप्यदृश्यचैव जायते ॥ १,६.१२८ ॥
यस्य संस्पर्शमात्रेण सर्वलोहानि काञ्चनम् ।
तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे ॥ १,६.१२९ ॥
देवा यत्र विलीयन्ते सिद्धस्तत्रैव लीयते ॥ १,६.१३० ॥

आक्, १, ७
[पद्मरागादिरत्नोत्पत्तिः]
पुरा कैलासशिखरे गह्वरेऽद्रिसुतेश्वरौ ।
चिरमास्तां क्रीडमानौ जिगूषू तौ परस्परम् ॥ १,७.१ ॥
तदा रेतः सूतरूपप्रवाहोऽभूत्तयोर्महान् ।
तत्प्रवाहप्रभावेन वेधिता दृषदोऽभवन् ॥ १,७.२ ॥
पद्मरागादिमणयो लोहा हेमादयस्तथा ।
गन्धकाद्याश्च पाषाणा दिव्या ओषधयो लताः ॥ १,७.३ ॥
नानावर्णा बहुविधा नानासिद्धिप्रदायकाः ।
पूर्वोक्तानां समस्तानां वज्रं श्रेष्ठतमं महत् ॥ १,७.४ ॥
तज्जातिलक्षणं देवि संस्कारं भजनं फलम् ।
क्रमाद्वक्ष्यामि ते देवि सावधानं शृणु प्रिये ॥ १,७.५ ॥

[वज्रलक्षणं वज्रभेदांश्च]
द्विजन्मानश्च राजन्या ऊरव्या वृषलाः क्रमात् ।
शुभ्रशोणहरिद्राभाः काला नानाविधास्तथा ॥ १,७.६ ॥
स्त्रीपुंनपुंसकाश्चैव ज्ञातव्यास्ते क्रमात्प्रिये ।
शुक्लाः फलकसम्पूर्णा ज्योतिष्मन्तो महत्तराः ॥ १,७.७ ॥
पुमांसस्ते तु विज्ञेया रेखाबीजविवर्जिताः ।
बलाढ्याः सत्वसहिता लोहक्रमणहेतवः ॥ १,७.८ ॥
रसबन्धकराः क्षिप्रं सर्वेषां सिद्धिदायकाः ।
रसायनकराः स्थूला ह्यष्टसिद्धिप्रदायकाः ॥ १,७.९ ॥
षट्कोणबीजरेखाभिरुज्ज्वलास्ताः स्त्रियः स्मृताः ।
देहज्योतिःप्रजनना भोगकान्तिसुखप्रदाः ॥ १,७.१० ॥
दीर्घास्त्र्यस्राश्च तनवो निबोद्धव्या नपुंसकाः ।
क्षीणसत्वाः स्वल्पवीर्याः क्रामकाः सुरनायिके ॥ १,७.११ ॥
क्लीबा नपुंसके स्त्रीणां स्त्रियः सर्वहिता नराः ।
जात्यानुरूपाश्चोत्साहं यथा सत्वं तथा गुणम् ॥ १,७.१२ ॥
यथा कान्तिस्तथा शीलं कुर्वन्त्येवं द्विजातयः ।
वलीपलितरोगघ्नाः क्षत्रिया मृत्युहारिणः ॥ १,७.१३ ॥
देहस्थैर्यकरा वैश्या लोहानां वेधकारिणः ।
वयःस्तंभकराः शूद्रा नानामयविनाशनाः ॥ १,७.१४ ॥
[वज्रसंस्कारः]
वज्रसंस्कारमधुना कथयामि शृणु प्रिये ।
श्यामा शमी मेघनादा वर्षाभूधूर्तकोद्रवाः ॥ १,७.१५ ॥
मेषशृङ्ग्याखुकर्णी च कुलुत्थं चाम्लवेतसः ।
मदनागस्त्यनिर्गुण्डी चैतेषां स्वरसैर्युते ॥ १,७.१६ ॥
डोलायन्त्रे पाचयेच्च व्याघ्रीकन्दगतं दिनम् ।
उद्धृत्य माहिषशकृल्लिप्तं कारीषवह्निना ॥ १,७.१७ ॥
दहेद्रात्रौ चतुर्यामं रात्र्यन्ते परिषेचयेत् ।
हयमूत्रस्नुहीक्षीरकुलत्थकरसैस्तथा ॥ १,७.१८ ॥
पाचयेद्दाहयेदेवं सेचयेत्सप्तवारकम् ।
एवं द्विजातिजातीयाः शोधिताः स्युश्च सिद्धिदाः ॥ १,७.१९ ॥
[वज्ररसायनम्]
रसायनार्हं वक्ष्यामि वज्रभस्म सुरेश्वरि ।
वैक्रान्तताप्यगन्धाश्मशिलामाक्षिकतालकम् ॥ १,७.२० ॥
कान्तास्यटङ्कणक्षारकुलीरास्थीनि पेषयेत् ।
स्तन्येन गोलके क्षिप्त्वा मूषायां निक्षिपेत्ततः ॥ १,७.२१ ॥
धमेद्दृढतरं पूर्वं पश्चाद्गजपुटे पचेत् ।
तदेव वज्रमादाय तस्मिन्षोडशमात्रके ॥ १,७.२२ ॥
एकांशं पारदं तस्मिन् पक्वबीजेन जारितम् ।
स्तन्येन मर्दयेत्तौ द्वौ पुनर्गजपुटे पचेत् ॥ १,७.२३ ॥
एवं तत्षोडशपुटाद्बीजजीर्णरसान्वितम् ।
दृढं कुर्वीत तद्वज्रं भवेद्भस्म रसायनम् ॥ १,७.२४ ॥
शृणु रुद्राणि वक्ष्यामि दिव्यं वज्ररसायनम् ।
पूर्वोक्तवत्प्रकुर्वीत देहशुद्ध्यादिकं विधिम् ॥ १,७.२५ ॥
शुभर्क्षे सुमुहूर्ते च चन्द्रताराबलान्विते ।
शिवाग्निगुरुगोविप्रभिषजः पूजयेत्पुरा ॥ १,७.२६ ॥

ततः सेवेत तद्भस्म यवमात्रं वरानने ।
कान्ताभ्रसत्त्वं सौवर्णभस्म गुञ्जैकमात्रकम् ॥ १,७.२७ ॥
त्रिफलामधुसर्पिर्भिः प्रातः शुद्धवपुर्लिहेत् ।
एवं षोडशमासान्तमेकद्वित्रिचतुष्टयम् ॥ १,७.२८ ॥
प्रतिमासं वर्धयित्वा यावद्यावकषोडशम् ।
कान्तादिभस्मत्रितयं गुञ्जावृद्धिक्रमे तथा ॥ १,७.२९ ॥
द्विनिष्कं त्रिफलाचूर्णं सर्पिर्मधु यथासुखम् ।
पूर्वोक्तवद्विधिं त्याज्यं प्रकुर्यान्मम वल्लभे ॥ १,७.३० ॥
सेवितं पलमात्रं तु वज्रभस्म दिनं क्रमात् ।
वलीपलितरोगघ्नं शतायुष्यं ददाति च ॥ १,७.३१ ॥
द्विपलं च सहस्रायुरयुतं त्रिपलं तथा ।
चतुष्पलं लक्षमायुर्दशलक्षं च पञ्चमम् ॥ १,७.३२ ॥
कोट्यायुष्यं षट्पलं च सुरेन्द्रायुश्च सप्तमम् ।
ब्रह्मायुष्यं चाष्टपलं विष्णुत्वं नवमं पलम् ॥ १,७.३३ ॥
रुद्रत्वं दशमं देवि ईश्वरत्वं ततः परम् ।
सदाशिवत्वं द्वादश्यां वज्रभस्म ददात्यलम् ॥ १,७.३४ ॥
सर्वज्ञत्वं सर्वगत्वं स्वेच्छाविहरणं तथा ।
[वज्रौदनम्]
वज्रौदनं प्रवक्ष्यामि रसायनहितं परम् ॥ १,७.३५ ॥
पूर्ववच्छोधिते वज्रे मृदुकर्म समारभेत् ।
मातृवाहकमध्यस्थं तित्तिरीमांसवेष्टितम् ॥ १,७.३६ ॥
तीक्ष्णकान्ताननरसैः पुनस्तत्परिवेष्टयेत् ।
कुलत्थत्रिफलानीरकोद्रवेषु पृथक्पृथक् ॥ १,७.३७ ॥
त्रिदिनं पाचयेदेवं तद्वज्रं वेष्टयेद्दलैः ।
त्रिवर्षारूढताम्बुल्यास्तथा कार्पासकस्य वा ॥ १,७.३८ ॥
चेष्टितं जानुमध्यस्थं वज्रं यामद्वयान्मृदु ।
वज्रौदनमिदं प्रोक्तं वज्रद्रुतिरथोच्यते ॥ १,७.३९ ॥
[वज्रद्रुतिः]
त्रिक्षारं चणकाम्लं च रामठं चाम्लवेतसम् ।
ज्वालामुखी चेक्षुरकं स्थलकुम्भीरसेन च ॥ १,७.४० ॥
पिष्ट्वा स्नुह्यर्कयोः क्षीरैस्तद्गोले मृदु हीरकम् ।
निक्षिपेत्तच्च जम्बीरे दोलायन्त्रे त्र्यहं पचेत् ॥ १,७.४१ ॥
एवं कृते हीरकस्य द्रुतिर्भवति सूतवत् ।
[अन्यद्रुत्यतिदेशः]
पद्मरागादिरत्नानां द्रुतिरेवं कृते भवेत् ॥ १,७.४२ ॥
अभ्रकादिमपाषाणा द्रवन्त्येवं कृते ध्रुवम् ।
द्रवन्ति रसरत्नानि मौक्तिकं चाम्लवेतसम् ॥ १,७.४३ ॥
सप्ताहं भावयेद्घर्मे क्षिपेज्जम्बीरके ततः ।
धान्यराशौ त्रिसप्ताहं पुटपाके द्रवत्यलम् ॥ १,७.४४ ॥
[वज्रभस्मगुणाः]
वज्रभस्म यथा तद्वद्द्रुतिमार्दवयोरपि ।
भवेद्भस्म वरारोहे जरादारिद्र्यमृत्युजित् ॥ १,७.४५ ॥
रसायने भवेत्सौख्यं भस्म द्रुतिमृदूद्भवम् ।
रसायने तु स्त्रीपुंसौ क्रामणे तु नपुंसकः ॥ १,७.४६ ॥
षड्रसं हिमवीर्यं च सर्वामयविनाशनम् ।

सर्वदोषप्रशमनं सर्वसौख्यं रसायनम् ॥ १,७.४७ ॥
विद्युत्प्रभां देहदार्ढ्यं स्वच्छं स्निग्धं च लेखनम् ।
सौन्दर्यं बलमायुष्यं ग्रहालक्ष्मीविनाशनम् ॥ १,७.४८ ॥
शुद्धिर्मृदुद्रुतीभस्म वैक्रान्तस्य तु वज्रवत् ।
[स्वर्णं तद्भेदाः]
अथ वक्ष्ये श्रेष्ठतमं शृणु हेमरसायनम् ॥ १,७.४९ ॥
हेमोत्पत्तिः पुरा प्रोक्ता तथापि त्रिविधा भवेत् ।
रसवेधाद्भवेच्चैकमितरत्क्षेत्रसम्भवम् ॥ १,७.५० ॥
लोहसङ्करजं चान्यच्छ्रेष्ठमध्यकनीयसः ।
क्रमेण पीतरक्ते च पीतरक्तं च वर्णतः ॥ १,७.५१ ॥
निकर्षछेददाहेषु कुङ्कुमश्वेतशोणितम् ।
[स्वर्णशुद्धिः]
दिव्यमेवंविधं स्वर्णं पट्टकं कणशः कृतम् ॥ १,७.५२ ॥
हलिनीकञ्चुकीकन्दस्नुह्यर्काग्निकरञ्जकम् ।
धूर्तगुञ्जेङ्गुदीचीरमूलतालाश्वगन्धिकाः ॥ १,७.५३ ॥
पिष्ट्वेन्द्रवारुणी चैषा मूलानि मथितेन वै ।
लेपयेत्स्वर्णपट्टानि तापयेज्जातवेदसि ॥ १,७.५४ ॥
मूत्रे मथिते तैले कुलुत्थाम्भसि काञ्जिके ।
जम्बीरार्कपयोमध्ये प्रत्येकं सप्तधा क्षिपेत् ॥ १,७.५५ ॥
लेपयेत्तापयेत्सिञ्च्याद्भूयो भूयोऽपि सप्तधा ।
वल्मीकमृद्धूमसारमिष्टकापटुगैरिकम् ॥ १,७.५६ ॥
पिष्ट्वा जम्बीरनीरेण लिप्त्वा पत्रं पुटीकृतम् ।
चतुर्वर्णाभ्रकं ताप्यं दरदं तालकं शिलाम् ॥ १,७.५७ ॥
कान्तकङ्कुष्ठरसकविमलासूतभूलताः ।
पिष्ट्वाम्लेन वटीः कुर्यान्निष्कमात्राः सुरेश्वरि ॥ १,७.५८ ॥
पलादूनं न कर्तव्यमधिकं च चतुष्पलात् ।
पुटितं हेम शुल्बं च द्रावयेच्च समीकृतम् ॥ १,७.५९ ॥
तन्मध्ये तद्द्रवीभूते चैकैकां वटिकां क्षिपेत् ।
स्वर्णाद्दशगुणा वाह्या वटिकाः शोषिताः क्रमात् ॥ १,७.६० ॥
यावच्छेषं भवेत्स्वर्णं तावदेवं धमेच्छनैः ।
शुद्धं तज्जायते दिव्यं जरामरणरोगहृत् ॥ १,७.६१ ॥
[स्वर्णभस्म]
चिञ्चापत्रनिभं स्वर्णं पत्रं शुद्धं च पारदम् ।
एकान्तं मर्दयेदम्लैस्तत्पिष्टिमपि लेपयेत् ॥ १,७.६२ ॥
समगन्धकताप्याभ्यां पिष्टिं मूषागतां धमेत् ।
षोडशांशं सूतभस्म हेमचूर्णे विनिक्षिपेत् ॥ १,७.६३ ॥
अम्लेन मर्दयेद्गाढं पचेत्तद्भूधरे पुटे ।
एवं षोडशपर्यन्तं रसं प्रतिपुटं क्षिपेत् ॥ १,७.६४ ॥
निरुत्थं हेमभस्मेदं जायते सर्वसिद्धिदम् ।
[हेमरसायनम्]
विरेकवमनाद्यैश्च शुद्धदेहः शुभे दिने ॥ १,७.६५ ॥
अर्चयेदीशविप्राग्निगुरुवैद्यपुरःसरान् ।
सेवेत शुद्धहृदयो दिव्यं हेमरसायनम् ॥ १,७.६६ ॥
कान्ताभ्रयोः सत्त्वभस्म चैकगुञ्जाप्रमाणकम् ।
माषोन्मितं हेमभस्म वरामध्वाज्ययुग्लिहेत् ॥ १,७.६७ ॥

पूर्वोक्तवद्वज्रमासषोडशिकावधि ।
पूर्वोक्तवद्विधिं त्याज्यं प्रकुर्वीत रसायनी ॥ १,७.६८ ॥
शृणु चित्रां गिरिसुते सेवां हेमरसायने ।
पलमात्रोपयोगेन सर्वरोगविवर्जितः ॥ १,७.६९ ॥
ततो द्विपलयोगेन वलीपलितवर्जितः ।
वाक्सिद्धिर्दिव्यदृष्टिश्च त्रिपलेन भवेत्प्रिये ॥ १,७.७० ॥
चतुःपलोपयोगेन विषव्याघ्राहिभीर्न हि ।
तथा पञ्चपलेनैव दिव्यात्मज्ञानिता भवेत् ॥ १,७.७१ ॥
देवि षट्पलयोगेन सिद्धसाध्यपदं भवेत् ।
तथा सप्तपलेनापि विद्याधरपदं भवेत् ॥ १,७.७२ ॥
तथाष्टपलयोगेन स्वेच्छाविहरणे पटुः ।
पलेन नवमेनापि चाष्टैश्वर्यगुणान्वितः ॥ १,७.७३ ॥
तथा दशपलेनापि महेन्द्रत्वमवाप्नुयात् ।
एकादशपलैर्देवि ब्रह्मत्वं नात्र संशयः ॥ १,७.७४ ॥
द्वादशभिः पलैः कान्ते विष्णुत्वं समुपैति च ।
त्रयोदशपलेनापि रौद्रं पदमवाप्नुयात् ॥ १,७.७५ ॥
तथा चतुर्दशपलैरैश्वरं लभते पदम् ।
पलैः पञ्चदशैरेति सदाशिवपदं परम् ॥ १,७.७६ ॥
तथा स्यात्षोडशपलैः सच्चिदानन्दविग्रहः ।
सर्वज्ञः सर्वकर्ता च हर्ता गोप्ता स सर्वगः ॥ १,७.७७ ॥
[हेमद्रुतिः]
हेमद्रुतिं प्रवक्ष्यामि शृणु संप्रति पार्वति ।
फलपांशुर्देवदाल्याः शक्रगोपोऽश्वलालिका ॥ १,७.७८ ॥
टङ्कणं जालिनीनीरैर्भावयेद्बहुधा प्रिये ।
द्रावयेत्काञ्चनं तत्र वपेत्सूतसमा द्रुतिः ॥ १,७.७९ ॥
इमां द्रुतिं काञ्चनवद्भस्म सेवां च कल्पयेत् ।
स्वादु तिक्तं कषायं च शीतमुष्णं रसायनम् ॥ १,७.८० ॥
हृद्यं कान्तिप्रदं शुद्धं चक्षुष्यं गुरु लेखनम् ।
धृतिस्मृत्यायुरारोग्यनयवाक्सिद्धिदायकम् ॥ १,७.८१ ॥
क्षयोन्मादादिरोगाणां नाशनं दोषशान्तिकृत् ।
स्निग्धं रुच्यं दीप्तिं वीर्यकृद्बलवर्धनम् ॥ १,७.८२ ॥
[कान्तं तद्भेदा लक्षणञ्च]
अथ कान्ते प्रवक्ष्यामि कान्तं कान्तरसायनम् ।
दिव्या औषधयः सन्तु सर्वसिद्धिप्रदायिकाः ॥ १,७.८३ ॥
तेभ्यः कान्तं श्रेष्ठतमं वलीरुक्पलितापहम् ।
कल्पान्ते ताण्डवं शंभुः शर्वाणीसहितः स्वयम् ॥ १,७.८४ ॥
उच्चण्डं व्यतनोत्तत्र संजाताः स्वेदबिन्दवः ।
तत्र तत्र गतास्तेऽपि ह्ययस्कान्तत्वमाययुः ॥ १,७.८५ ॥
जाङ्गले बहवो जाता देशे साधारणे क्वचित् ।
जलप्रायेऽस्ति वा नास्ति जात्या पञ्चविधाः स्मृताः ॥ १,७.८६ ॥
भ्रामकं चुम्बकं देवि कर्षकं द्रावकं तथा ।
रोमकं च तथैकद्वित्रिचतुः सर्वतोमुखाः ॥ १,७.८७ ॥
तेषां पञ्चविधानां तु पीतं कृष्णं च शोणितम् ।
मिश्रं पृथक्पृथक्तेषां क्रमात्स्युरधिदेवताः ॥ १,७.८८ ॥
ब्रह्मविष्णवीशभूतात्ममातृकाः परिकीर्तिताः ।

पीतवर्णं स्पर्शवेधि कृष्णं श्रेष्ठं रसायने ॥ १,७.८९ ॥
रसबन्धकरं रक्तं मिश्रं सर्वरुजापहम् ।
रोमकं ग्रहभीतिघ्नं द्रावकं चोत्तमोत्तमम् ॥ १,७.९० ॥
उत्तमं मध्यमं नीचं कर्षकं चुम्बकं क्रमात् ।
भ्रामकं लक्षणं वच्मि लोहं तु भ्रामयेत्ततः ॥ १,७.९१ ॥
तस्माद्भ्रामकमित्युक्तं चुम्बकं लोहचुम्बकम् ।
कर्षकं कर्षयेल्लोहं द्रावकं द्रावयेद्यतः ॥ १,७.९२ ॥
स्फुटनाद्रोमजननं तद्रोमकमुदाहृतम् ।
अत्युत्तमं बहुमुखं चतुःपञ्चास्यमुत्तमम् ॥ १,७.९३ ॥
मध्यमं स्याद्द्वित्रिमुखं नीचमेकमुखं भवेत् ।
भ्रामकं चुम्बकं सर्वरोगाणां नाशने हितम् ॥ १,७.९४ ॥
कर्षकं द्रावकं श्रेष्ठं रसयोगे रसायने ।
रसद्विपाङ्कुशमिदं कान्तं पञ्चविधं प्रिये ॥ १,७.९५ ॥
समीरणातपस्पृष्टं न ग्राह्यं तत्कदाचन ।
हस्तद्वयं समुत्खाय कान्तं ग्राह्यं वरानने ॥ १,७.९६ ॥
[कान्तसत्त्वपातनम्]
आदौ सम्पूज्य दुर्गां च गणेशं भैरवं प्रिये ।
तीव्राग्निना दहेत्कान्तं सेचयेत्त्रिफलाम्बुना ॥ १,७.९७ ॥
तत्कान्तं चूर्णयेत्सूक्ष्मं काचसामुद्रटङ्कणैः ।
लाक्षागुग्गुलुगुञ्जाभिरूर्णाज्यमधुसिक्थकैः ॥ १,७.९८ ॥
शशास्थिक्षुद्रमीनैश्च भल्लाततिलकल्ककैः ।
सर्जक्षारयवक्षाररालैश्चिरगुलैस्तथा ॥ १,७.९९ ॥
न्यङ्कुसैरिभदन्तीनां विषाणैश्च समांशकैः ।
एतत्समांशं तत्कान्तमजाक्षीरेण मर्दयेत् ॥ १,७.१०० ॥
मेलयेत्पञ्चमाहिष्यैर्दध्याद्यैर्गोमयान्तकैः ।
श्लक्ष्णं पिष्ट्वा वटीः कुर्यात्कर्षमात्राः सुरेश्वरि ॥ १,७.१०१ ॥
कोष्ठीयन्त्रे वङ्कनाले खदिराङ्गारकैर्दृढम् ।
पञ्च पञ्च वटीस्तत्र निक्षिपेच्च शनैः शनैः ॥ १,७.१०२ ॥
त्रियाममथनादेव कान्तात्सत्वं पतेच्छुचि ।
तत्सर्वं कणशः कृत्वा काचाद्यैरौषधैः समैः ॥ १,७.१०३ ॥
मूषागतं धमेत्तीव्रमेवं धाम्यं त्रिधा प्रिये ।
एवं कृतं तु तत्कान्तसत्वं सत्त्वतमं भवेत् ॥ १,७.१०४ ॥
[कान्तस्वरूपम्]
कान्तलोहस्य पात्रस्थजले तैलस्य बिन्दवः ।
न सर्पन्ति चणास्त्वेताः कृष्णाः स्युर्नात्र संशयः ॥ १,७.१०५ ॥
घृष्टहिङ्गोर्न गन्धः स्यात्क्षीरोर्मिः शिखराकृतिः ।
न कदाचिद्भुवि पतेच्छिवा मुञ्चति तिक्तताम् ॥ १,७.१०६ ॥
तल्लोहक्षिप्तमुष्णाम्बु शीतलं भवति क्षणात् ।
[लोहशुद्धिः]
ऊनं पञ्चपलान्नैव नोर्ध्वं पञ्चदशात्पलात् ॥ १,७.१०७ ॥
त्रिफला षोडशपला तच्चतुर्गुणमम्बु च ।
क्वाथयेत्पादशेषं तु तस्मिन्पत्राणि ढालयेत् ॥ १,७.१०८ ॥
शशरक्तप्रलिप्तानि शोषयेदातपे पुनः ।
तापितानि पुनस्तक्रतैलसौवीरसर्पींषि ॥ १,७.१०९ ॥
क्षौद्रार्कक्षीरजम्बीरकुलत्थकरसेष्वपि ।

लेपनं शोषणं दाहं सेचनं च क्रमात्प्रिये ॥ १,७.११० ॥
प्रत्येकं सप्तधा कुर्याद्गिरिदोषं त्यजेदयः ।
[लोहसंस्कारमन्त्राः]
आदौ मन्त्रस्ततः कर्म कर्तव्यो मन्त्र उच्यते ॥ १,७.१११ ॥
उद्भवोद्भवशब्दः स्याच्चतुर्थ्यन्तोऽमृतात्परः ।
स्वाहान्तः प्रणवश्चादौ मन्त्रोऽयं मर्दने स्थितः ॥ १,७.११२ ॥
ओममृतोद्भवोद्भवाय स्वाहा ।
रक्षायै लोहनरयोरयमेकोद्भवो मनुः ।
विना स्वाहापदं स्थाने फडन्तं यः समुच्चरेत् ॥ १,७.११३ ॥
ओममृतोद्भवाय फट्प्रणवोर्ध्वं नमश्चण्डवज्रपाणय इत्यपि ।
ततः परं महायक्षसेनाधिपतये नमः ॥ १,७.११४ ॥
द्विरुक्तं सुरुशब्दस्य महाविद्याबलाय च ।
ततः स्वाहेति मन्त्रोऽयं बलिकर्मणि कीर्तितः ॥ १,७.११५ ॥
ओं नमश्चण्डवज्रपाणये महायक्षसेनाधिपतये नमः सुरु सुरु महाविद्याबलाय स्वाहा ।
[लोहभस्म]
एतानि लोहपत्राणि सूक्ष्मं संचूर्णयेत्ततः ।
अयःपात्रे कान्तचूर्णं निक्षिप्य त्रिफलारसैः ॥ १,७.११६ ॥
सेचयेत्तदयोदर्व्या चालयन्पाचयेदिति ।
पिण्डीभूतं तदादाय मृत्तिकापटले शुभे ॥ १,७.११७ ॥
संपुटे निक्षिपेत्सम्यक्षोडशाङ्गुलगर्तके ।
निधायारण्यकारीषमध्यगं कारिषं दहेत् ॥ १,७.११८ ॥
अहोरात्रं प्रकुर्वीत वातातपविवर्जितम् ।
पुनः प्रातः समादाय वराक्वाथेन मर्दयेत् ॥ १,७.११९ ॥
स्थालीसंपुटयोरेवं कुर्यात्पाकपुटैः क्रमात् ।
एवं विदध्यात्सप्ताहं तस्मिन्क्षेप्यं च हिङ्गुलम् ॥ १,७.१२० ॥
लोहस्य षोडशांशं च नारीस्तन्येन मर्दयेत् ।
स्थाल्यां पाकं संपुटे च पुटं कुर्वीत षोडश ॥ १,७.१२१ ॥
निरुत्थं तद्भवेद्भस्म देवि योज्यं रसायने ।
[ल्होहभस्मनोऽमृतीकरणम्]
यावत्स्यात्त्रिफला तस्माद्भवेद्वारि चतुर्गुणम् ॥ १,७.१२२ ॥
अष्टावशेषं क्वाथयेत्क्वाथस्य सदृशं घृतम् ।
घृततुल्यं कान्तभस्म ताम्रपात्रे पचेत्प्रिये ॥ १,७.१२३ ॥
लोहदर्व्या प्रचलयन् यावच्छुष्यति तद्रसः ।
तावन्मृद्वग्निना पाच्यं लोहतुल्यां सितां क्षिपेत् ॥ १,७.१२४ ॥
अमृतीकरणमित्युक्तं सर्वयोगवहं परम् ।
[लोहपाकभेदाः]
लोहपाकं प्रवक्ष्यामि तद्भवेत्त्रिविधं प्रिये ॥ १,७.१२५ ॥
मृदुमध्यखराः प्रोक्ता जम्बीरसदृशो मृदुः ।
मध्यमः पिण्डसदृशो वालुकासदृशः खरः ॥ १,७.१२६ ॥
[कान्तलोहरसायनसेवाक्रमः]
अथ सेवां प्रवक्ष्यामि कान्तलोहस्य भस्मनः ।
सुमुहूर्ते शुभदिने पूजितेशादिदेवतः ॥ १,७.१२७ ॥
सेवेत सिद्धिदं दिव्यं कान्तभस्म रसायनम् ।
शुद्धदेहो विरेकाद्यैरभ्रभस्म पुरा प्रिये ॥ १,७.१२८ ॥
मासमेकं तु सेवेत तस्माच्छुद्धवपुर्भवेत् ।

माषमात्रं कान्तभस्म गुञ्जामात्राभ्रभस्म च ॥ १,७.१२९ ॥
द्विनिष्कं त्रिफलाचूर्णं मधुसर्पिःसमन्वितम् ।
लिहेत्प्रातर्विशुद्धात्मा स्नानदानादिकर्मभिः ॥ १,७.१३० ॥
अनुपेयं ततो लोहाद्गव्यं षष्टिगुणं पयः ।
धारोष्णं तदभावे तु कृत्वा क्षीरं समाम्बुकम् ॥ १,७.१३१ ॥
यावत्क्षीणजलं क्वाथ्यं क्षीरं चानुपिबेत्प्रिये ।
तदसात्म्ये वराक्वाथं गुडूच्या वा कषायकम् ॥ १,७.१३२ ॥
इत्येकमासं सेवेत क्रमाद्द्वित्रिचतुष्टयम् ।
प्रतिमासं माषगुञ्जावृद्धिः कान्ताभ्रभस्मनोः ॥ १,७.१३३ ॥
एवं षोडशमासान्तं वृद्धिः षोडशमात्रकाः ।
पूर्वोक्तवद्विधिं त्याज्यं कुर्यात्सिद्धिमवाप्नुयात् ॥ १,७.१३४ ॥
अस्य वत्सरयोगेन क्षुद्रामयविनाशनम् ।
एतद्द्विवर्षयोगेन महारोगप्रणाशनम् ॥ १,७.१३५ ॥
त्रिवर्षात्पलितं हन्ति चतुर्वर्षाद्वलिं हरेत् ।
पञ्चमादपमृत्युघ्नं षष्ठे स्यादायुषः शतम् ॥ १,७.१३६ ॥
सप्ताब्दे सूर्यवद्दीप्तिं दशमे सिद्धिमेलनम् ।
वैद्याधरं समाप्नोति वर्षे चैकादशे प्रिये ॥ १,७.१३७ ॥
त्रयोदशाब्दे देवत्वमिन्द्रत्वं च चतुर्दशे ।
तथा पञ्चदशाब्दे च सर्वलोकप्रियो भवेत् ॥ १,७.१३८ ॥
षोडशाब्देऽष्टसिद्धिः स्यात्सत्यं सत्यं महेश्वरि ।
[कान्तद्रुतिक्रमः]
सुवर्णद्रुतिवत्कान्तद्रुतिः स्यात्पूर्ववत्प्रिये ॥ १,७.१३९ ॥
कान्तद्रुतिर्भवेद्भस्म कान्तलोहस्य भस्मवत् ।
[लोहभेदास्तद्गुणाश्च]
किट्टं मुण्डं तथा तीक्ष्णं कान्तं पूर्वोत्तरोत्तरम् ॥ १,७.१४० ॥
गुणाढ्याः स्युर्दशशतसहस्रं लक्षकं क्रमात् ।
शताधिको भवेत्कान्तस्त्वौषधानां रसायनम् ॥ १,७.१४१ ॥
त्रिदोषशमनं दिव्यं सर्वरोगापहारकम् ।
कान्तिं रुच्यं च चक्षुष्यं हृद्यमायुष्यदं शुचि ॥ १,७.१४२ ॥
स्थैर्यं दार्ढ्यं च धातूनां बलवच्च रसायनम् ।
[अभ्रकोत्पत्तिः तद्भेदा लक्षणञ्च]
अथाभ्रकं प्रवक्ष्यामि तदुत्पत्त्यादिकं क्रमात् ॥ १,७.१४३ ॥
पुरादिशक्तिर्भवती श्वेतद्वीपे मनोरमे ।
इन्द्राणीकमलावाणीगायत्रीप्रमुखैः सह ॥ १,७.१४४ ॥
अरुन्धतीमुखैर्दिव्यमुनिदारैश्च संयुता ।
संचिक्रीडे महामाया चित्सदानन्दरूपिणी ॥ १,७.१४५ ॥
आनन्दाश्रुकणाः क्षौमे न्यपतन्बहवो दृशोः ।
तदा ऋतुमती जाता ततः स्वादु सरित्पतेः ॥ १,७.१४६ ॥
तीरे त्यक्त्वा च तद्वस्त्रं स्नात्वा कैलासमाययौ ।
वात्यावशेन तद्वस्त्रं क्षीराब्धौ न्यपतत्तदा ॥ १,७.१४७ ॥
देवासुरैर्मथ्यमानात्तस्मात्क्षीराम्बुधेस्तदा ।
समभूत्तद्रजोवस्त्रं चतुर्धाभ्रकसंज्ञकम् ॥ १,७.१४८ ॥
कृष्णाभ्रकं साञ्जनाभं पीतं देव्यङ्गलेपनात् ।
रक्तं तस्य रजोरूपं क्षौमं श्वेतमभूदिति ॥ १,७.१४९ ॥
चतुर्विधं तदालोक्य रसबन्धनकारणम् ।

रसायनं रोगहरं सर्वसिद्धिप्रदायकम् ॥ १,७.१५० ॥
इत्यूचिरे सुराः सर्वे साक्षादमृतसंमितम् ।
श्वेतं रजतकार्येषु त्रयमन्यत्सुवर्णके ॥ १,७.१५१ ॥
सर्वं रसायने योज्यं रक्तपीतसितासितम् ।
श्वेताच्छतगुणं रक्तं रक्तात्पीतं सहस्रकम् ॥ १,७.१५२ ॥
पीताल्लक्षगुणं कृष्णं ज्ञेयं लोहे रसायने ।
प्रत्येकं तानि जायन्ते चतुर्धा जातितः क्रमात् ॥ १,७.१५३ ॥
पिनाकं दर्दुरं नागं वज्रं चेति चतुर्विधम् ।
वज्रं समाहरेन्मुख्यं त्रीण्यन्यानि विवर्जयेत् ॥ १,७.१५४ ॥
पिनाकमग्निनिक्षिप्तं मुञ्चते दलसंचयम् ।
तत्सेवितं मलं बद्ध्वा मारयेद्रोगकारणम् ॥ १,७.१५५ ॥
दर्दुरं वह्निनिक्षिप्तं कुरुते भेकनिःस्वनम् ।
तदुत्पादयते रोगमश्मर्याख्यमसाध्यकम् ॥ १,७.१५६ ॥
नागमग्नौ विनिक्षिप्तं फूत्कारं वितनोति यत् ।
तत्सेवया महाकुष्ठं मण्डलाख्यं भवेद्ध्रुवम् ॥ १,७.१५७ ॥
[ग्राह्यलक्षणम्]
एतत्त्रितयसेवाभिर्जायते रोगसंचयः ।
वह्निस्थितं तु वज्राभ्रं विकारान्नाचरेत्क्वचित् ॥ १,७.१५८ ॥
तस्माद्वज्राभ्रकं सेव्यं वलीपलितमृत्युजित् ।
राजहस्तात्परं ग्राह्यं खनित्रेन तदाकरात् ॥ १,७.१५९ ॥
[वज्राभ्र:: परीक्षा:: बदृउअलित्य्]
भारयुक्तं पृथुदलं स्निग्धं मोच्यदलं सुखम् ।
काचचन्द्रककिट्टाभं न योज्यं तत्कदाचन ॥ १,७.१६० ॥
[धान्याभ्रकम्]
पूर्वोक्तलक्षणयुतं वज्राभ्रं धमयेद्दृढम् ।
अर्कक्षीरारनाले च गोमूत्रे त्रिफलारसे ॥ १,७.१६१ ॥
मेघनादरसे चेत्थं निक्षिपेत्तेषु तत्त्रिधा ।
सम्यग्दलं मोचयित्वा मेघनादाम्लयोर्द्रवैः ॥ १,७.१६२ ॥
भावयेदातपे तीव्रे श्लक्ष्णं पिष्ट्वाथ वस्त्रके ।
निक्षिप्य धान्यसहितं बद्ध्वा तत्काञ्जिके पुनः ॥ १,७.१६३ ॥
कराभ्यां घट्टयेद्गाढं सूक्ष्मं तत्काञ्जिके स्रवेत् ।
तत्कुर्यादातपे शुष्कमेतद्धान्याभ्रकं स्मृतम् ॥ १,७.१६४ ॥
[अभ्रकसत्वपातनम्]
कान्तवत्सत्वपतनमभ्रकस्य भवेत्प्रिये ।
हेम रूप्यं माक्षिकं च वैक्रान्तं मधु टङ्कणम् ॥ १,७.१६५ ॥
गुञ्जा गुडं घृतं भल्लमेकैकं दशनिष्ककम् ।
पिष्ट्वार्कपयसा कार्या वटिकाः कर्षमात्रकाः ॥ १,७.१६६ ॥
शतनिष्केऽभ्रसत्वेऽस्मिन् विद्रुते वटिकाः क्षिपेत् ।
एकैकघटिकामात्रं वट्यः क्षेप्याः शनैः शनैः ॥ १,७.१६७ ॥
यावत्तत्सत्त्वशेषं स्यात्तावद्धाम्यमतन्द्रितैः ।
इदमभ्रकसत्त्वं तु देवयोग्यं रसायनम् ॥ १,७.१६८ ॥
[अभ्रकसत्वभस्म]
चूर्णीकृत्याभ्रसत्त्वं तन्मेघनादः पुनर्नवा ।
सूरणोऽर्कदलं मुस्ता जम्बीरस्तालमूलिका ॥ १,७.१६९ ॥
त्रिफला वज्रवल्ली च शाङ्गेरी मरिचं तथा ।

अम्लवर्गो वटजटा कार्पासमुनिशिग्रुकम् ॥ १,७.१७० ॥
एकवीरा कोकिलाक्षी सर्पाक्षी तुलसी वचा ।
पेटारी वाकुची कन्या चैकैकस्य रसैः पृथक् ॥ १,७.१७१ ॥
मर्दनं घर्मपाकं च स्थालीपाकं पुटं क्रमात् ।
एकैकाहं प्रकुर्वीत ततो दरदमाक्षिके ॥ १,७.१७२ ॥
सत्वषोडशभागेन योज्यं पेष्यं वरारसैः ।
पुटषोडशपर्यन्तं कुर्यादेवं हि भैरवि ॥ १,७.१७३ ॥
पूर्वोक्तवत्स्यादमृतीकरणं कान्तसत्ववत् ।
निरुत्थं भस्म भवति चायुरारोग्यदायकम् ॥ १,७.१७४ ॥
[अभ्रकसत्वसेवाक्रमः]
अथ सेवां प्रवक्ष्यामि घनसत्वरसायने ।
वमनादिविशुद्धात्मा पूजितस्वेष्टदेवतः ॥ १,७.१७५ ॥
गुञ्जामात्राभ्रसत्वं च द्विनिष्कं त्रिफलारजः ।
मध्वाज्याभ्यां लिहेत्प्रातरेकमासं भजेदिति ॥ १,७.१७६ ॥
एवं षोडशमासान्तं मासवृद्धिक्रमेण वै ।
गुञ्जावृद्धिर्भवेद्देवि सेवेतेत्थं रसायनम् ॥ १,७.१७७ ॥
पूर्वोक्तवद्विधिं त्याज्यं प्रकुर्वीत सुरेश्वरि ।
वर्षेण देहशुद्धिः स्याद्द्विवर्षादामयाच्च्युतः ॥ १,७.१७८ ॥
त्रिवत्सरान्महारोगनाशनं भवति ध्रुवम् ।
चतुर्वर्षान्महाकान्तिबलवीर्यप्रवर्धनम् ॥ १,७.१७९ ॥
पञ्चवर्षाद्देहदार्ढ्यं षष्ठे वाक्सिद्धिमेति हि ।
सप्तमे दिव्यदृष्टिः स्यादष्टमे विषनाशनम् ॥ १,७.१८० ॥
नवाब्दे सिद्धतामेति ततो विद्याधरो भवेत् ।
एकादशाब्दे त्विन्द्रत्वं द्वादशे ब्रह्मता भवेत् ॥ १,७.१८१ ॥
त्रयोदशाब्दे विष्णुत्वं रुद्रत्वं च चतुर्दशे ।
ईशत्वं पञ्चदशके षोडशाब्दे सदाशिवः ॥ १,७.१८२ ॥
अणिमादियुतः स्वैरी सर्वज्ञः सर्वकृद्भवेत् ।
[अभ्रकद्रुतिः]
अथाभ्रकद्रुतिं वक्ष्ये कञ्चुकीकन्द एव च ॥ १,७.१८३ ॥
कपितिन्दौ केशतैले प्रत्येकं तु त्रिधा वपेत् ।
मूषायां द्रावयित्वा तदभ्रसत्वद्रुतिर्भवेत् ॥ १,७.१८४ ॥
भस्मीकुर्यात्प्रयत्नेन द्रुतिमभ्रकसत्ववत् ।
[अभ्रकगुणाः]
षड्रसः सर्वरोगघ्नस्त्रिदोषशमनः परः ॥ १,७.१८५ ॥
वीर्यायुष्यबलप्रज्ञाकान्तिरूपविवर्धनः ।
वपुर्दार्ढ्यस्थैर्ययुक्तो वलीपलितमृत्युहा ॥ १,७.१८६ ॥
रुच्यो वृष्यो लघुः शीतो मेध्यः स्निग्धो रसायनम् ।
अभ्रकं दीपनं ग्राहि श्रेष्ठं पारदबन्धनम् ॥ १,७.१८७ ॥
पक्षजित्सूतराजस्य भस्मीभूताभ्रसत्वकः ।
अभ्रस्य पत्रं रोगघ्नं तच्च सत्वं दृढंकरम् ॥ १,७.१८८ ॥
चेतसत्वं मृदु हरेद्द्रुतिस्तांश्च दरिद्रताम् ॥ १,७.१८९ ॥

आक्, १, ८
[रसायनसेवा]

सूतो वज्रं सुवर्णं च कान्तलोहं तथाभ्रकम् ।
पञ्चैतान्यमृतानि स्युः कल्पितानि नृणां मया ॥ १,८.१ ॥
मत्तकाशिनि यो वेत्ति सोऽपि साक्षान्महेश्वरः ।
अहं रसो रसश्चाहमावयोरन्तरं न हि ॥ १,८.२ ॥
तेन युक्तास्तु वज्राद्याः सिद्धिदाः स्युर्न संशयः ।
पुरुषं रससेवार्हं वदामि शृणु पार्वति ॥ १,८.३ ॥
स्त्रीक्लीबबालकानां च न हि योज्यं रसायनम् ।
बालाः पञ्चदशाब्दा ये कुमारांस्त्रिंशदब्दकाः ॥ १,८.४ ॥
पञ्चाशद्वर्षदेशीया युवानः परिकीर्तिताः ।
अतः परं च स्थविराः भवेयुस्ते रसायने ॥ १,८.५ ॥
यथोक्तकाले सिद्धिः स्यात्कुमारस्य रसायनात् ।
तस्माद्द्विगुणकालेन यूनः सिद्धिर्भवेद्ध्रुवम् ॥ १,८.६ ॥
तस्मात्त्रिगुणकालेन वृद्धः सिद्धिमवाप्नुयात् ।
ज्ञातव्याः क्रमशो देवि ह्युत्तमो मध्यमोऽधमः ॥ १,८.७ ॥
[रसायनसेवाक्रमः]
पूर्वमभ्रकमश्नीयात्ततः कान्तरसायनम् ।
अथ कान्ताभ्रकं देवि पश्चाद्धेमरसायनम् ॥ १,८.८ ॥
अथाभ्रकं स्वर्णयोगं कान्तहेमरसायनम् ।
घनकान्तस्वर्णयोगं ततो वज्ररसायनम् ॥ १,८.९ ॥
अथाभ्रवज्रसेवां च कान्तवज्रमतः परम् ।
घनायस्कान्तहीरं च हेमवज्रं ततो भवेत् ॥ १,८.१० ॥
पश्चादभ्रस्वर्णवज्रं कान्ताष्टापदवज्रकम् ।
घनकान्तं हेमवज्रमतः पारदभक्षणम् ॥ १,८.११ ॥
तथाभ्ररसयोगं स्यात्ततः कान्तरसं भवेत् ।
घनकान्तरसं देवि पश्चाद्धेमरसं भवेत् ॥ १,८.१२ ॥
घनहेमरसं पश्चात्कान्तहेमरसं ततः ।
घनकान्तं हेमसूतमतो वज्ररसं भवेत् ॥ १,८.१३ ॥
घनवज्ररसं देवि कान्तवज्ररसं ततः ।
घनकान्तं वज्रसूतं हेमवज्ररसं ततः ॥ १,८.१४ ॥
घनहेमपवीसूतं कान्तहेमपवीरसम् ।
घनकान्तस्वर्णवज्ररसमस्मात्परं न हि ॥ १,८.१५ ॥
उत्तरोत्तरतः सर्वे चैते सर्वगुणोत्तराः ।
रसायनानि पञ्च स्युरेकैकानि वरानने ॥ १,८.१६ ॥
रसा द्विद्व्यौषधभवास्त्रित्र्यौषधभवा दश ।
चतुश्चतुर्भवाः पञ्च त्वेकः पञ्चौषधोद्भवः ॥ १,८.१७ ॥
एकत्रिंशद्वरारोहे रसायनमिति प्रिये ।
घनं कान्तं हेम वज्रं पारदश्चेतरम् ॥ १,८.१८ ॥
पूर्वोत्तरोत्तरगुणा भवन्ति प्राणवल्लभे ।
रसस्य क्रामणं वज्रं हेमकान्तघनं भवेत् ॥ १,८.१९ ॥
वज्रसंक्रामणं हेम कान्तं व्योम भवेत्प्रिये ।
हेम्नः कान्तभवं योज्यं कान्तस्य क्रामणं घनम् ॥ १,८.२० ॥
अभ्रस्य क्रामणं चाभ्रसत्त्वं सिद्धिप्रदं यतः ।
एकैकौषधसेवायां यथोक्तं क्रामणं भवेत् ॥ १,८.२१ ॥
युक्तो द्वित्रिचतुःपञ्चभैषज्यैः क्रामणं न हि ।
त्रिफलामधुसर्पींषि सामान्यक्रामणं भवेत् ॥ १,८.२२ ॥

आक्, १, ९
[रसायनार्हरससंस्कारः; प्रथमः प्रकारः]
श्रीभैरवी ।
रसायनार्हं सूतस्य संस्कृतिं वद मे विभो ।
श्रीभैरवः ।
शृणु पार्वति यत्नेन संस्कारं शोधनादिकम् ॥ १,९.१ ॥
पुनर्नवारसैः पेष्यं धान्याभ्रं पारदं समम् ।
तप्तखल्वे दिनं देवि वज्रमूषागतं रसम् ॥ १,९.२ ॥
पचेद्भूधरयन्त्रे च पुनः संमर्दयेच्च तम् ।
पूर्वद्रवैर्यथापूर्वं मर्दनं पाचनं पुनः ॥ १,९.३ ॥
कृत्वैवं दशवारं तं पात्यं पातनयन्त्रके ।
शुद्धः स्यात्पारदो देवि योज्यो योगे रसायने ॥ १,९.४ ॥
[द्वितीयः प्रकारः]
दशमांशं रसाद्गन्धं तप्तखल्वे विनिक्षिपेत् ।
वराजम्बीरकन्याग्निद्रवैर्यामं विमर्दयेत् ॥ १,९.५ ॥
पातयेत्पातनायन्त्रे कुर्यादेवं तु सप्तधा ।
सगन्धकं मर्दनं च पातनं भवति प्रिये ॥ १,९.६ ॥
शुद्धः स्यात्पारदो देवि योग्यो योगे रसायने ।
[तृतीयः प्रकारः]
तिलतैलैर्माहिषिकैर्मूत्रैर्मर्द्याम्लकेन च ॥ १,९.७ ॥
गोमांसैर्हिङ्गुलं पाच्यं लोहपात्रे क्रमाग्निना ।
सप्ताहं लोहदण्डेन चालयन्सद्रवं मुहुः ॥ १,९.८ ॥
सार्द्रमायूरपित्तेन भावयेदातपे दिनम् ।
पाचयेत्पातनायन्त्रे दरदं खरवह्निना ॥ १,९.९ ॥
शुद्धो भवेच्चतुर्यामात्पारदः स्याद्रसायने ।
[रसभस्मक्रमः; प्रथमः प्रकारः]
ऊर्ध्वाधस्तात्खजीर्णस्य सूतस्य समगन्धकम् ॥ १,९.१० ॥
निक्षिपेत्पक्वमूषायां गर्ते द्वाभ्यां चतुर्गुणम् ।
काकमाचीद्रवं दत्त्वा निरुध्यैनां क्रमाग्निना ॥ १,९.११ ॥
पचेद्गुण्डकयन्त्रस्थां मूषां यामचतुष्टयम् ।
भस्मसाज्जायते सूतो योजयेत्तु रसायने ॥ १,९.१२ ॥
[द्वितीयः प्रकारः]
जीर्णसूतं स्नुक्क्षीरैः समं गन्धं विमर्दयेत् ।
दिनं ततो गर्भयन्त्रे पुटे भस्मति पूर्ववत् ॥ १,९.१३ ॥
[तृतीयः प्रकारः]
खजीर्णसूतं तुल्यांशं लाक्षोर्णामधुटङ्कणम् ।
गुञ्जां भृङ्गरसैः सर्वं दिनमेकं विमर्दयेत् ॥ १,९.१४ ॥
अन्धितं वज्रमूषायां धमेद्भस्मति पारदः ।
[चतुर्थः प्रकारः]
घनजीर्णं रसं गन्धं त्र्यहं तुल्यं विमर्दयेत् ॥ १,९.१५ ॥
अहिमार्या रसैर्वाथ हयजामार्या रसेन वा ।
रसेन कीटमारिण्याः श्वेताङ्कोलरसेन वा ॥ १,९.१६ ॥
दिवारात्रं करीषाग्नौ मृण्मये संपुटे दहेत् ।

तुषाग्निना वा त्रिदिनाद्भस्मीभवति पारदः ॥ १,९.१७ ॥
तप्तखल्वे वज्रभस्म जीर्णे सूते समं त्र्यहम् ।
हंसपादीरसैर्मर्द्यं बीजैर्दिव्यौषधोद्भवैः ॥ १,९.१८ ॥
लेपयेद्वज्रमूषायां तत्र पूर्वं रसं क्षिपेत् ।
त्र्यहं तुषाग्निना पाच्यं हंसपादीद्रवैः पुनः ॥ १,९.१९ ॥
मर्दयेत्त्रिदिनं गाढं तद्गोलं पूर्ववत्पचेत् ।
भस्मीभवति सूतेन्द्रः शङ्खकुन्देन्दुसन्निभः ॥ १,९.२० ॥
[जारितरसमारणम्; प्रथमः प्रकारः]
अथ वक्ष्यामि देवेशि जारितं रसमारणम् ।
प्रथमं जारणं कुर्यात्सबीजं सुरनायिके ॥ १,९.२१ ॥
अजारितं रसं मूढः प्रमादान्मारयेद्यदि ।
मम द्रोही स पापिष्ठो महापातकवान् भवेत् ॥ १,९.२२ ॥
भ्रूणहा गुरुघाती च गोघ्नः स्त्रीबालघातकः ।
तस्मात्सर्वप्रयत्नेन कुर्याज्जारणपूर्वकम् ॥ १,९.२३ ॥
मारणं रसराजस्य मम बीजस्य पार्वति ।
धरायां गोमयं देवि स्थापयित्वा तत उपरि ॥ १,९.२४ ॥
पक्वमूषायां विनिक्षिप्य तन्मध्ये कटुतुम्बिजम् ।
तैलं निधाय सूतं च निक्षिपेच्च तत उपरि ॥ १,९.२५ ॥
काकमाचीरसो देयस्तैलतुल्यो वरानने ।
शुद्धं गन्धं व्रीहिमात्रं दत्त्वा मूषां निरोधयेत् ॥ १,९.२६ ॥
तदूर्ध्वं खादिराङ्गारपूरितं श्रावकं न्यसेत् ।
ज्ञात्वा तत्स्वाङ्गशीतत्वं पुनर्गन्धं च तैलकम् ॥ १,९.२७ ॥
काकमाचीद्रवं दत्त्वा वह्निमेवं पुनः पुनः ।
अधस्ताद्गोमयं सान्द्रमुपरिष्टाच्च पावकम् ॥ १,९.२८ ॥
काकमाचीद्रवः सूतस्तैलं चैतत्त्रयं समम् ।
जारयेत्षड्गुणं गन्धं रसस्येत्थं मुखीकृतिः ॥ १,९.२९ ॥
दिनं जम्बीरनीरेण मर्दयेत्तं रसं पुनः ।
चतुः षष्ट्यंशकं हेम्नः पत्रं कण्टकभेदनम् ॥ १,९.३० ॥
मयूरपित्तं तैलं च लिपेत्सर्षपसंभवम् ।
अभावे तैलपित्तस्य चूलिकालवणं बलिम् ॥ १,९.३१ ॥
जम्बीरस्य रसैर्मर्द्यं तं रसं हेमपत्रकम् ।
पाचयेत्पूर्ववद्वह्नौ जम्बीरस्य रसैः पुनः ॥ १,९.३२ ॥
सम्पूर्णां रोधयेन्मूषां पूर्ववज्जारयेत्पुनः ।
द्वात्रिंशदंशकं हेम षोडशांशं तत उपरि ॥ १,९.३३ ॥
मर्दयेज्जारयेदेवं ततः सूतस्य मारणम् ।
समूलां कुम्भिमादाय गवां मूत्रेण पेषयेत् ॥ १,९.३४ ॥
दिनमेकं तद्रसेन मर्दयेत्पारदं सुधीः ।
संपुटे कान्तजे क्षिप्त्वा चोर्ध्वाधश्च नियामकान् ॥ १,९.३५ ॥
चुल्ल्यां मृद्वग्निना पाच्यं दिनं भस्म भवेद्रसः ।
अक्षीणो मृत्युनाशी स्याज्जरादारिद्र्यनाशनः ॥ १,९.३६ ॥
[द्वितीयः प्रकारः]
वासितं पारदं कर्षमष्टगुञ्जाः सुवर्णकम् ।
मृतं वज्रं चतुर्गुञ्जं मर्द्यं हंसपदीरसैः ॥ १,९.३७ ॥
तप्तखल्वे वज्रमूषागतं कृत्वा निरोधयेत् ।
पचेद्भूधरयन्त्रे च पुनरादाय तं रसम् ॥ १,९.३८ ॥

हंसपादीद्रवैर्मर्द्यं तप्तखल्वे दिनत्रयम् ।
पूर्ववद्भूधरे यन्त्रे पचेत्सूतं पुनः पुनः ॥ १,९.३९ ॥
एवं शतपुटं कृत्वा भस्म स्याद्रक्तवर्णकम् ।
एतानि रसभस्मानि शस्तानि च रसायने ॥ १,९.४० ॥
[रसायनयोगाः; अभ्रकरसायनम्]
एकद्वित्रिचतुःपञ्चयोगयुक्तं रसायनम् ।
क्रमाद्वक्ष्यामि देवेशि तत्राप्यभ्रकसेवनम् ॥ १,९.४१ ॥
वमनादिविशुद्धात्मा त्यक्तक्षाराम्लकादिकः ।
पूर्ववद्भस्मयेद्व्योमसत्वं भृङ्गवरारसैः ॥ १,९.४२ ॥
त्रिः सप्तधा भावनीयं प्रातर्गुञ्जाद्वयं भजेत् ।
ससितं तदनु क्षौद्रं घृतैः सत्रिफलं लिहेत् ॥ १,९.४३ ॥
द्वात्रिंशद्गुञ्जका वृद्धिः क्रामणं कर्षमात्रकम् ।
एष षोडशमासान्ते सर्वरोगाद्विमुच्यते ॥ १,९.४४ ॥
स भवेत्कान्तसेवार्हस्त्वेवमभ्रकसेवया ।
[कान्तरसायनम्]
पूर्ववद्भस्मयेत्कान्तं वरानिर्गुण्डिभृङ्गजैः ॥ १,९.४५ ॥
रसैस्त्रिसप्तवाराणि मर्दयेद्भावयेत्क्रमात् ।
क्षौद्राज्याभ्यां लिहेत्प्रातर्नित्यं गुञ्जाद्वयोन्मितम् ॥ १,९.४६ ॥
अनु भक्ष्यं सिन्दुवारवराभृङ्गभवं रजः ।
मध्वाज्याभ्यां कर्षमात्रं शुद्धाङ्गो वमनादिभिः ॥ १,९.४७ ॥
द्वात्रिंशद्गुञ्जिका वृद्धिः परमावधिरीश्वरि ।
भवेत्षोडशमासान्ताज्जराव्याधिभिरुज्झितः ॥ १,९.४८ ॥
कान्तस्य सेवया पश्चाद्भवेत्कान्ताभ्रकार्हकः ।
[कान्ताभ्ररसायनम्]
मृतं कान्तं घनं तुल्यं धात्रीभृङ्गपुनर्नवाः ॥ १,९.४९ ॥
द्रवैरेषां पृथङ्मर्द्यं कल्ये गुञ्जाद्वयं लिहेत् ।
शर्करामधुसर्पिर्भिः शुद्धात्मा वमनादिभिः ॥ १,९.५० ॥
भृङ्गामलकवर्षाभूचूर्णं क्रामणमुत्तमम् ।
मध्वाज्यैरनु लेह्यं तद्द्वात्रिंशद्गुञ्जकावधि ॥ १,९.५१ ॥
मासषोडशयोगेन वलीपलितजिद्बली ।
कान्ताभ्रसत्वभजनाद्धेमसेवार्हको भवेत् ॥ १,९.५२ ॥
[स्वर्णरसायनम्]
पूर्ववद्भस्मयेत्स्वर्णं दशमूलकषायतः ।
एकविंशतिवारं तं मर्दयेद्भावयेत्प्रिये ॥ १,९.५३ ॥
मध्वाज्याभ्यां मुद्गमानं लिहेत्प्रातर्विशुद्धधीः ।
गुडूचीत्रिफलाक्वाथं पलं चानुपिबेत्सुधीः ॥ १,९.५४ ॥
अष्टगुञ्जावधिर्वृद्धिर्भवेत्षोडशमासतः ।
तेजस्वी बलवान्धीमांश्चक्षुष्मान् रोगवर्जितः ॥ १,९.५५ ॥
वलीपलितनिर्मुक्तस्त्रिकालविषजिद्भवेत् ।
[स्वर्णाभ्रकरसायनम्]
पूर्ववन्मारयेत्स्वर्णं तस्माद्द्विगुणमभ्रकम् ॥ १,९.५६ ॥
दशमूलवराभृङ्गीक्वाथैर्भाव्यं त्रिसप्तधा ।
प्रातर्माषत्रयं लेह्यं मध्वाज्यैः क्रामणं लिहेत् ॥ १,९.५७ ॥
पलं गुडूचीत्रिफलाक्वाथं तदनु पार्वति ।
चतुर्विंशतिगुञ्जास्य वृद्धिः स्यात्परमावधिः ॥ १,९.५८ ॥

मासषोडशयोगेन दिव्यतेजा महाबलः ।
घनकाञ्चनयोगेन स्वर्णकान्तार्हको भवेत् ॥ १,९.५९ ॥
[स्वर्णकान्तरसायनम्]
पूर्ववन्मारयेत्स्वर्णं कान्तं स्वर्णद्विभागकम् ।
धात्रीफलैर्द्विसप्तैव भावयेन्मर्दयेत्क्रमात् ॥ १,९.६० ॥
सशर्करं भजेत्प्रातस्त्रिमाषं च पिबेदनु ।
धात्रीसत्वं घृतं क्षौद्रं कर्षमात्रं सुरेश्वरि ॥ १,९.६१ ॥
चतुर्विंशतिका गुञ्जा वृद्धिः स्यात्परमावधिः ।
मासषोडशयोगेन वलीपलितवर्जितः ॥ १,९.६२ ॥
तप्तकाञ्चनसच्छायः पञ्चबाण इवापरः ।
हेमकान्तास्वादनेन कान्ताभ्रकनकार्हकः ॥ १,९.६३ ॥
[स्वर्णाभ्रकान्तरसायनम्]
पूर्ववन्मारयेत्स्वर्णं कान्तसत्त्वाभ्रसत्वकम् ।
समानि त्रीणि चैतानि भावयेच्च त्रिसप्तकम् ॥ १,९.६४ ॥
मुण्डिनिर्गुण्डिकाभृङ्गवरानीरेण पार्वति ।
माषत्रयोन्मितं प्रातर्लिहेत्क्षौद्रघृताप्लुतम् ॥ १,९.६५ ॥
मुण्डीचूर्णं कर्षमात्रं मध्वाज्याभ्यां लिहेदनु ।
गोक्षीरं पलमात्रं च पिबेत्तदनु पार्वति ॥ १,९.६६ ॥
वल्लद्वादशसंख्याता परा वृद्धिर्भवेत्प्रिये ।
मासषोडशयोगे दिव्यकायो भवेन्नरः ॥ १,९.६७ ॥
हेमाभ्रकान्तभजनाद्योग्यः स्याद्वज्रभक्षणे ।
[वज्ररसायनम्]
पूर्ववद्भस्मयेद्वज्रं धात्रीनीरेण मर्दयेत् ॥ १,९.६८ ॥
भावयेत्सप्तधा धीमान्व्रीहिमात्रं लिहेत्प्रिये ।
घृतक्षौद्रयुतं चानुपिबेद्धात्रीरसं पलम् ॥ १,९.६९ ॥
वल्लावधिर्भवेद्वृद्धिर्मासषोडशयोगतः ।
चिरजीवी वज्रकायो दिव्यदृष्टिर्महाबलः ॥ १,९.७० ॥
वज्रस्य सेवया योग्यो भवेद्वज्राभ्रभक्षणे ।
[वज्राभ्ररसायनम्]
पूर्ववन्मारयेद्व्योम वज्रं वज्राच्चतुर्गुणम् ॥ १,९.७१ ॥
घनं धात्र्याः शतावर्या रसैर्भाव्यं त्रिसप्तधा ।
यवमात्रं लिहेत्प्रातर्मध्वाज्याभ्यां लिहेदनु ॥ १,९.७२ ॥
धात्रीशतावरीनीरं क्रामणं पलमात्रकम् ।
चतुर्गुञ्जा परा वृद्धिर्भवेत्षोडशमासतः ॥ १,९.७३ ॥
वाक्सिद्धिर्दिव्यदृष्टिः स्याद्देवतासदृशप्रभः ।
सेवया घनवज्रस्य कान्तवज्रार्हको भवेत् ॥ १,९.७४ ॥
[कान्तवज्ररसायनम्]
पूर्ववद्भस्मयेद्वज्रं कान्तं वज्राच्चतुर्गुणम् ।
कान्तं त्रिसप्तधा भाव्यमश्वगन्धावरारसैः ॥ १,९.७५ ॥
यवमात्रं क्षौद्रघृतैर्युक्तं लेह्यं दिनोदये ।
अश्वगन्धावराचूर्णं कर्षं गोपयसा पिबेत् ॥ १,९.७६ ॥
चतुर्गुञ्जावधिर्ज्ञेया वृद्धिः स्यात्परमावधिः ।
मासषोडशयोगेन बालसूर्यसमद्युतिः ॥ १,९.७७ ॥
महाबलो महातेजा वाक्सिद्धः सिद्धतां व्रजेत् ।
सेवया वज्रकान्तस्य वज्रकान्ताभ्रकार्हकः ॥ १,९.७८ ॥

[वज्राभ्रकरसायनम्]
पूर्ववन्मारयेद्वज्रं कान्ताभ्राणि च हीरकात् ।
चतुर्गुणे च कान्ताभ्रे वराभृङ्गकुरण्डजैः ॥ १,९.७९ ॥
रसैस्त्रिसप्तधा भाव्यं यवमात्रं लिहेत्प्रिये ।
समध्वाज्यं भृङ्गवराकुरण्डकरजोयुतम् ॥ १,९.८० ॥
पलं पिबेच्च गोक्षीरं चतुर्गुञ्जापरावधिः ।
मासषोडशयोगेन गृध्रदृष्टिर्महाबलः ॥ १,९.८१ ॥
अव्याहतगतिर्धीरः सिद्धसंघेन वर्तते ।
कान्ताभ्रवज्रभजनाद्योग्यः स्याद्धेमवज्रयोः ॥ १,९.८२ ॥
[स्वर्णवज्ररसायनम्]
पूर्ववन्मारयेद्वज्रं स्वर्णं वज्राद्द्विभागकम् ।
सुवर्णवज्रं वर्षाभूरसैर्भाव्यं त्रिसप्तधा ॥ १,९.८३ ॥
व्रीहिमेयं लिहेत्क्षौद्रघृताभ्यां च पुनर्नवाम् ।
कर्षं पलं च गोक्षीरमनुपेयं सुरेश्वरि ॥ १,९.८४ ॥
द्विगुञ्जावधि वृद्धिः स्यान्मासषोडशयोगतः ।
चिरकालं भवेज्जीवी वलीपलितवर्जितः ॥ १,९.८५ ॥
वज्रहेमोपयोगेन स्वर्णाभ्रकुलिशार्हकः ।
[स्वर्णाभ्रवज्ररसायनम्]
पूर्ववद्भस्मयेद्धेमघनवज्राणि पार्वति ॥ १,९.८६ ॥
हीरकाद्द्विगुणं स्वर्णं स्वर्णादभ्रं द्विभागकम् ।
मुसलीकन्दसारेण भावनीयं त्रिसप्तधा ॥ १,९.८७ ॥
यवमात्रं लिहेत्प्रातर्मध्वाज्याभ्यां पिबेदनु ।
कर्षं स्यान्मुसलीचूर्णं गोक्षीरं पलमात्रकम् ॥ १,९.८८ ॥
चतुर्गुञ्जावधिर्वृद्धिर्मासषोडशयोगतः ।
मृत्युं जयेज्जराहीनो वज्रकायो महाबलः ॥ १,९.८९ ॥
एतस्य सेवया वज्रहेमकान्तार्हको भवेत् ।
[स्वर्णवज्रकान्तरसायनम्]
वज्रकान्तसुवर्णानि पूर्ववन्मारितानि च ॥ १,९.९० ॥
वज्रात्सुवर्णं द्विगुणं स्वर्णात्कान्तं द्विभागकम् ।
धात्रीभृङ्गरसैर्मर्द्यमेकविंशतिवारकम् ॥ १,९.९१ ॥
यवमात्रं लिहेत्प्रातर्मध्वाज्याभ्यां पिबेदनु ।
धात्रीभृङ्गभवं चूर्णं कर्षं गोदुग्धकं पलम् ॥ १,९.९२ ॥
गुञ्जाचतुष्टयी वृद्धिर्मासषोडशयोगतः ।
वलीपलितनिर्मुक्तो दिव्यतेजा महाबलः ॥ १,९.९३ ॥
एतस्य सेवया कान्तस्वर्णवज्राभ्रकार्हकः ।
[स्वर्णकान्तवज्राभ्रकरसायनम्]
भस्मयेत्स्वर्णकान्ताभ्रवज्राणि च यथोक्तवत् ॥ १,९.९४ ॥
ज्योतिष्मतीरसैर्भाव्यमेकविंशतिवारकम् ।
यवमात्रं लिहेत्प्रातर्मध्वाज्याभ्यां पिबेदनु ॥ १,९.९५ ॥
अश्वगन्धाकन्दचूर्णं कर्षं गोदुग्धकं पलम् ।
गुञ्जाचतुष्टयी वृद्धिः परमावधिरीश्वरि ॥ १,९.९६ ॥
मासषोडशयोगेन साक्षादिन्द्रसमो भवेत् ।
एतस्य सेवया देवि रसं सेवितुमर्हति ॥ १,९.९७ ॥
[रसभस्म]
धान्याभ्रं पारदं मर्द्यं तप्तखल्वे दिनत्रयम् ।

त्रिफलारग्वधनिशाकुमारीकृष्णधूर्तजैः ॥ १,९.९८ ॥
पुनर्नवाग्निजंबीरभवैर्नीरैर्विमर्दयेत् ।
पातयेत्पातनायन्त्रे त्वेवं मर्दनपातनम् ॥ १,९.९९ ॥
कुर्यात्त्रिवारं शुद्धः स्यात्पारदो दोषवर्जितः ।
नियामकैर्मर्दयेत्तं मूषालेपं नियामकैः ॥ १,९.१०० ॥
कृत्वा तं मर्दितं सूतं मूषायां निक्षिपेत्सुधीः ।
अन्ध्रयित्वा भूधराख्ये यन्त्रे पाच्यं सुरेश्वरि ॥ १,९.१०१ ॥
एवं च सप्तधा कुर्यान्मर्दनं पुटपाचनम् ।
रसभस्म भवेच्छुभ्रं योज्यं योगे रसायने ॥ १,९.१०२ ॥
[आरोटकरसाः; अभ्रकजीर्णरसभस्म]
अथ चारोटकरसं देहसिद्ध्येककारणम् ।
माषमात्रं लिहेत्प्रातर्मध्वाज्यत्रिफलैः सह ॥ १,९.१०३ ॥
धारोष्णं गोपयः पेयं मात्रमनु प्रिये ।
अष्टगुञ्जावधिं वृद्धिं कृत्वा षोडशमासकम् ॥ १,९.१०४ ॥
वलीपलितनिर्मुक्तो जीवेदाचन्द्रतारकम् ।
एतस्य सेवया देवि ह्यभ्रसूतार्हको भवेत् ॥ १,९.१०५ ॥
मुखीकृते रसे देवि चतुःषष्टिकनिष्कके ।
अभ्रसत्वं निष्कमात्रं क्षिप्त्वा जम्बीरजैर्द्रवैः ॥ १,९.१०६ ॥
तप्तखल्वे मर्दयेच्च दिनं कच्छपयन्त्रके ।
सबिडं च पचेत्पश्चात्तमादाय विमर्दयेत् ॥ १,९.१०७ ॥
अभ्रसत्वं द्विनिष्कं च जम्बीराम्लेन पार्वति ।
तप्तखल्वे कच्छपाख्ये यन्त्रे पचनकर्म च ॥ १,९.१०८ ॥
तृतीये च चतुर्निष्कं चतुर्थे पञ्चमे क्रमात् ।
अष्टनिष्काभ्रसत्वं च दद्यात्पञ्चमपातने ॥ १,९.१०९ ॥
घनषोडशनिष्कं च षष्ठे द्वात्रिंशदंशकम् ।
सत्त्वं सप्तमे स्यात्सममेव हि पार्वति ॥ १,९.११० ॥
पारदेऽभ्रकसत्वस्य जारणा भवति प्रिये ।
एवं जारितसूतेन्द्रं भस्मीकुर्याच्च पूर्ववत् ॥ १,९.१११ ॥
पलं चैतत्सूतभस्म व्योमसत्वं चतुष्पलम् ।
भृङ्गराजद्रवैर्मर्द्यं मूषायामन्धयेद्दृढम् ॥ १,९.११२ ॥
कुक्कुटाख्ये पुटे पच्यात्स्वाङ्गशीतं समाहरेत् ।
त्रिफलाभृङ्गजैर्नीरैर्भावयेत्तत्त्रिसप्तधा ॥ १,९.११३ ॥
मध्वाज्याभ्यां गुञ्जमात्रं लिहेत्प्रातर्विशुद्धधीः ।
पिबेदनु वराक्वाथं पलं नियतमानसः ॥ १,९.११४ ॥
गुञ्जाषोडशिका वृद्धिः सेव्यं षोडशमासतः ।
आचन्द्रतारकं जीवेद्वलीपलितवर्जितः ॥ १,९.११५ ॥
एतस्य सेवया कान्तसूतसेवार्हको भवेत् ।
[कान्तजीर्णरसभस्म]
मुखीकृते सूतराजे यथाभूदभ्रजारणा ॥ १,९.११६ ॥
तथैव कान्तसत्वस्य जारणा भवति प्रिये ।
मारयेत्पूर्ववत्सूतं कान्तसत्वेन जारितम् ॥ १,९.११७ ॥
एवंविधं सभस्म भागमेकं भवेत्पुनः ।
चतुर्भागं कान्तभस्म मर्दयेत्त्रिफलाम्बुना ॥ १,९.११८ ॥
मूषायामन्ध्रयेत्पश्चात्पचेत्कौक्कुटिके पुटे ।
तमादाय वरानीरैर्भावयेच्च त्रिसप्तधा ॥ १,९.११९ ॥

मध्वाज्याभ्यां लिहेद्गुञ्जामात्रं प्रातरतन्द्रितः ।
अनुपेयं च गोक्षीरं पलमात्रं सुरेश्वरि ॥ १,९.१२० ॥
गुञ्जाषोडशिका वृद्धिर्मासषोडशयोगतः ।
दिव्यदृष्टिं खेचरत्वं प्राप्नुयादैन्द्रकं पदम् ॥ १,९.१२१ ॥
एतस्य सेवया सूतघनकान्तार्हको भवेत् ।
मुखीकृतरसे कुर्यात्पूर्ववद्व्योमजारणम् ॥ १,९.१२२ ॥
[कान्ताभ्रकजीर्णरसभस्म]
समं सूतस्य देवेशि पश्चात्कार्यं विचक्षणैः ।
पूर्ववत्कान्तसत्वस्य जारणा सूतराट्समा ॥ १,९.१२३ ॥
कान्तसत्वाभ्रसत्वाभ्यां जारितः पारदो यदि ।
स रसः पक्षहीनः स्याच्चाञ्चल्यरहितः शिवः ॥ १,९.१२४ ॥
तं रसं पूर्ववद्दिव्यैरौषधैर्मारितं रसम् ।
पलं तद्द्विगुणं व्योमसत्वभस्म च तत्समम् ॥ १,९.१२५ ॥
भस्म वैक्रान्तसत्वस्य मर्दयमेवं त्रयं त्रिधा ।
भृङ्गधात्रीफलरसे ततो लघुपुटे पचेत् ॥ १,९.१२६ ॥
भृङ्गधात्रीफलरसैश्छायायां भावयेद्रसम् ।
त्रिफलामधुसर्पिर्भिर्गुञ्जामात्रं लिहेदनु ॥ १,९.१२७ ॥
पिबेत्पलं च गोक्षीरं वृद्धिः षोडशगुञ्जिका ।
मासषोडशयोगेन जीवेदाचन्द्रतारकम् ॥ १,९.१२८ ॥
एतस्य सेवया सूतस्वर्णसेवार्हको भवेत् ।
[स्वर्णजीर्णरसभस्म]
हेमजीर्णं सूतराजं भस्मीकुर्याच्च पूर्ववत् ॥ १,९.१२९ ॥
एवंविधं सूतभस्म पलं स्वर्णपलद्वयम् ।
भृङ्गधात्रीफलरसैश्छायायां भावयेत्त्रिधा ॥ १,९.१३० ॥
रुद्ध्वा तं संपुटे पच्यात्कुक्कुटाख्ये पुटे पचेत् ।
पुनस्त्रिसप्तधा भृङ्गधात्रीनीरैश्च भावयेत् ॥ १,९.१३१ ॥
माषमात्रं लिहेत्प्रातर्मध्वाज्याभ्यां युतं रसम् ।
अनुपेयं च गोक्षीरं वृद्धिः षोडशमाषकम् ॥ १,९.१३२ ॥
मासषोडशयोगेन देवतुल्यश्चिरायुषः ।
सेवया स्वर्णसूतस्य घनहेमरसार्हकः ॥ १,९.१३३ ॥
[स्वर्णाभ्रकजीर्णरसभस्म]
मुखीकृतरसे चाभ्रसत्वं जार्यं समं पुरा ।
ततः स्वर्णं समं जार्यं तं सूतं भस्मयेत्ततः ॥ १,९.१३४ ॥
पूर्वोक्तवत्सूतभस्म पलं स्वर्णपलद्वयम् ।
चतुष्पलं व्योमसत्वभस्म चैकत्र योजयेत् ॥ १,९.१३५ ॥
नीलीपत्ररसे मर्द्यं वराक्वाथे दिनं प्रिये ।
रुद्ध्वा तं संपुटे पच्यादन्यैर्विंशतिगोमयैः ॥ १,९.१३६ ॥
नीलीरसवराक्वाथैर्भावयेत्तं त्रिसप्तधा ।
गुञ्जोन्मेयं लिहेत्कल्ये मध्वाज्याभ्यां पिबेदनु ॥ १,९.१३७ ॥
पलमात्रं वराक्वाथं वृद्धिः षोडशगुञ्जिका ।
मासषोडशयोगेन जीवेदाचन्द्रतारकम् ॥ १,९.१३८ ॥
एतस्य सेवया कान्तहेमसूतार्हको भवेत् ।
[स्वर्णकान्तजीर्णरसभस्म]
समुखे पारदे कान्तसत्वं जार्यं यथोक्तवत् ॥ १,९.१३९ ॥
जारयेच्च तथा स्वर्णं द्वाभ्यां जीर्णं समं समम् ।

विधिना भस्मयेत्सूतं कान्तहाटकजारितम् ॥ १,९.१४० ॥
तं रसं पलमेकं च हेमभस्म पलद्वयम् ।
चलं कान्तसत्वभस्म युञ्ज्याद्यथाविधि ॥ १,९.१४१ ॥
शतावरीवरानीरे दिनं संमर्द्य संपुटे ।
रुद्ध्वा तं कुक्कुटपुटे पचेदादाय तं रसम् ॥ १,९.१४२ ॥
त्रिः सप्तधा शतावर्या रसैर्भाव्यं वरारसैः ।
गुञ्जामात्रं घृतक्षौद्रयुक्तं लेह्यं पिबेदनु ॥ १,९.१४३ ॥
शतावरीरसः पेयः पलमात्रं सुरेश्वरि ।
गुञ्जाषोडशिका वृद्धिर्मासषोडशयोगतः ॥ १,९.१४४ ॥
वलीपलितनिर्मुक्तः प्रलयान्तं च जीवति ।
एतस्य सेवया स्वर्णकान्ताभ्ररसभुग्भवेत् ॥ १,९.१४५ ॥
[स्वर्णकान्ताभ्रजीर्णरसभस्म]
घनकान्तसुवर्णानि चैकैकानि समानि वै ।
मुखीकृतस्य सूतस्य जारयेत्क्रमशः प्रिये ॥ १,९.१४६ ॥
घनादिजारितं सूतं मारयेत्पूर्ववत्सुधीः ।
तस्माद्भस्मीकृतात्सूताद्द्विगुणं हेमभस्म च ॥ १,९.१४७ ॥
हेमतुल्यं मृतं कान्तं कान्ततुल्यं मृतं घनम् ।
एतत्सर्वं वराक्वाथमुण्डीभृङ्गरसैर्दिनम् ॥ १,९.१४८ ॥
मर्दयेत्संपुटे रुद्ध्वा पचेत्कौक्कुटिके पुटे ।
तदादाय वराभृङ्गमुण्डिनीरैश्च भावयेत् ॥ १,९.१४९ ॥
त्रिः सप्तवारं छायायां प्रातर्गुञ्जोन्मितं लिहेत् ।
शर्करामधुसर्पिर्भिरनुपेयं च गोपयः ॥ १,९.१५० ॥
गुञ्जाषोडशिका वृद्धिर्मासषोडशयोगतः ।
वलीपलितनिर्मुक्तो जीवेदाचन्द्रतारकम् ॥ १,९.१५१ ॥
एतस्य सेवया सूतवज्रसेवार्हको भवेत् ।
[वज्रजीर्णरसभस्म]
समुखे पारदे कुर्यात्पूर्ववद्वज्रजारणाम् ॥ १,९.१५२ ॥
वज्रजीर्णं रसं देवि भस्मीकुर्याच्च पूर्ववत् ।
भस्मीभूतरसाद्वज्रभस्म च द्विगुणं प्रिये ॥ १,९.१५३ ॥
कन्याभृङ्गवरानीरैर्दिनं मर्द्यं च संपुटे ।
कुक्कुटाख्ये पुटे पच्यात्तमादायाथ भावयेत् ॥ १,९.१५४ ॥
कन्याभृङ्गवरानीरैर्भावयेच्च त्रिसप्तधा ।
यवमात्रं लिहेत्प्रातर्मध्वाज्याभ्यां पिबेदनु ॥ १,९.१५५ ॥
गोक्षीरं पलमात्रं तु वृद्धिर्गुञ्जाचतुष्टयम् ।
मासषोडशयोगेन जीवेदाचन्द्रतारकम् ॥ १,९.१५६ ॥
एतस्य सेवया वज्रसूतव्योमार्हको भवेत् ।
[वज्राभ्रकजीर्णरसभस्म]
घनजीर्णं वज्रजीर्णं भस्मीकुर्याद्रसं सुधीः ॥ १,९.१५७ ॥
भस्मीभूताद्रसाद्वज्रं द्विगुणं व्योमभस्म च ।
चतुर्गुणं च तत्सर्वमेकीकृत्य विमर्दयेत् ॥ १,९.१५८ ॥
वराक्वाथे रसैर्दिनं संपुटके पचेत् ।
कृते लघुपुटे पश्चाद्भाव्यं भृङ्गवरारसैः ॥ १,९.१५९ ॥
त्रिसप्तधा समध्वाज्यं माषमात्रं पिबेदनु ।
गव्यं क्षीरपलं पेयं वृद्धिर्गुञ्जाष्टकावधिः ॥ १,९.१६० ॥
एवं षोडशमासेन जीवेदाचन्द्रतारकम् ।

एतस्य सेवया कान्तवज्रसूतार्हको भवेत् ॥ १,९.१६१ ॥
[कान्तवज्रजीर्णरसभस्म]
कान्तं वज्रं समं जार्यं समुखे पारदे प्रिये ।
कान्तहीरकजीर्णं तं पारदं मारयेत्सुधीः ॥ १,९.१६२ ॥
पूर्वोक्तविधिना कान्ते एतत्पारदभस्म च ।
पारदाद्द्विगुणं वज्रं वज्रात्कान्तं चतुर्गुणम् ॥ १,९.१६३ ॥
पलाशपुष्पस्वरसैर्दिनं मर्द्यं च संपुटे ।
रुद्ध्वा कुक्कुटके पश्चात्तमादायाथ भावयेत् ॥ १,९.१६४ ॥
पलाशपुष्पनीरेण भावयेत्तं त्रिसप्तधा ।
समध्वाज्यं माषमात्रं लिहेदनु पिबेत्पयः ॥ १,९.१६५ ॥
अष्टगुञ्जावधिर्वृद्धिर्भवेत्षोडशमासतः ।
वलीपलितनिर्मुक्तो जीवेदाचन्द्रतारकम् ॥ १,९.१६६ ॥
एतस्य सेवया वज्ररसकान्ताभ्रकार्हकः ।
[कान्तवज्राभ्रकजीर्णरसभस्म]
समुखे पारदे व्योमकान्तवज्राणि च क्रमात् ॥ १,९.१६७ ॥
समानि जारयेत्पश्चाज्जीर्णं तं मारयेद्रसम् ।
पूर्ववत्पारदाद्वज्रं समं वज्रचतुर्गुणम् ॥ १,९.१६८ ॥
कान्तं कान्तसमं व्योमसत्वं चैतानि मर्दयेत् ।
त्रिफलाभृङ्गजरसै रुद्ध्वा संपुटके पचेत् ॥ १,९.१६९ ॥
लघुनाग्निपुटेनैव तमादायाथ भावयेत् ।
वराभृङ्गरसैरेकविंशतिं वारमातपे ॥ १,९.१७० ॥
माषमात्रं समध्वाज्यं लिहेत्प्रातर्विशुद्धधीः ।
अनुपेयं च गोक्षीरं वृद्धिर्गुञ्जाष्टकं भवेत् ॥ १,९.१७१ ॥
मासषोडशयोगेन जीवेदाचन्द्रतारकम् ।
एतस्य सेवया हेमवज्रसूतार्हको भवेत् ॥ १,९.१७२ ॥
[स्वर्णवज्रजीर्णरसभस्म]
समुखे पारदे तुल्ये हेम वज्रं च जारयेत् ।
तं रसं भस्मयेद्देवि रसं वज्रं समं समम् ॥ १,९.१७३ ॥
तयोः समं मृतं हेम वराक्वाथेन मर्दयेत् ।
तत्सर्वं संपुटे क्षिप्त्वा भूधराख्ये पुटे पचेत् ॥ १,९.१७४ ॥
तमादाय वराक्वाथैर्भावयेच्च त्रिसप्तधा ।
माषमात्रं लिहेत्प्रातस्तिलाज्यमधुसंयुतम् ॥ १,९.१७५ ॥
गोक्षीरमनुपेयं स्यादष्टगुञ्जावधि क्रमात् ।
मासषोडशपर्यन्तं जीयादाचन्द्रतारकम् ॥ १,९.१७६ ॥
एतस्य सेवया व्योमहेमवज्ररसार्हकः ।
[स्वर्णवज्राभ्रकजीर्णरसभस्म]
समुखे पारदे व्योमहेमवज्राणि जारयेत् ॥ १,९.१७७ ॥
पारदस्य समांशानि ततः सूतं विमारयेत् ।
रसतुल्यं मृतं वज्रं तयोस्तुल्यं च हाटकम् ॥ १,९.१७८ ॥
सर्वतुल्यं रसं व्योम तत्सर्वं ब्रह्मबीजकैः ।
तैलैस्त्र्यहं पेषयित्वा संपुटेद्भूधरे पुटे ॥ १,९.१७९ ॥
तं पलाशकषायेण भावनाश्चैकविंशतिः ।
तं रसं माषमात्रं च तैलं ब्रह्मद्रुबीजकम् ॥ १,९.१८० ॥
कर्षमात्रं पिबेच्चानु यावद्गुञ्जाष्टकावधि ।
मासषोडशयोगेन सिद्धो भवति शाश्वतः ॥ १,९.१८१ ॥

एतस्य सेवया कान्तहेमवज्ररसार्हकः ।
[स्वर्णकान्तवज्रजीर्णरसभस्म]
मुखीकृते सूतराजे कान्तं स्वर्णं समं समम् ॥ १,९.१८२ ॥
जारयेद्भस्मयेत्तं च तत्समं वज्रभस्म च ।
तयोस्तुल्यं मृतं हेम कान्तं सर्वसमं प्रिये ॥ १,९.१८३ ॥
वराभृङ्गरसे पिष्ट्वा भूधरे संपुटे पचेत् ।
ततो भृङ्गवरानीरैरेकविंशतिभावनाः ॥ १,९.१८४ ॥
वराक्षौद्रैर्लिहेत्प्रातर्माषमात्रं रसं सुधीः ।
गव्यं पयः पलं पेयं वृद्धिः षोडशमाषिका ॥ १,९.१८५ ॥
मासषोडशयोगेन भवेत्सिद्धसमः प्रभुः ।
एतस्य सेवया व्योमकान्तहेमपवीरसम् ॥ १,९.१८६ ॥
सेवितुं जायतेऽर्होऽसौ संयतात्मा महेश्वरः ।
[स्वर्णकान्तवज्राभ्रकजीर्णरसभस्म]
घनकान्तस्वर्णवज्रं जारयेत्समुखे रसे ॥ १,९.१८७ ॥
प्रत्येकं पारदसममेव कार्यं सुरेश्वरि ।
ततस्तं मारयेद्युक्त्या रसतुल्यं मृतं पविम् ॥ १,९.१८८ ॥
तयोस्तुल्यं मृतं हेम सर्वतुल्यं मृतं घनम् ।
घनतुल्यमयस्कान्तं सर्वतुल्यं सुरद्रुजैः ॥ १,९.१८९ ॥
तैलैस्ततः संपुटे च क्षिप्त्वा भूधरके पचेत् ।
गुञ्जामात्रं रसं चैतं लिहेत्प्रातः शुचिः सुधीः ॥ १,९.१९० ॥
देवदारुजतैलेन कर्षमात्रं तु पार्वति ।
धारोष्णं गोपयः पेयं पलमात्रमनु प्रिये ॥ १,९.१९१ ॥
गुञ्जाषोडशपर्यन्तं मासषोडशयोगतः ।
य इमं पारदं दिव्यं सेवते पथ्यभुक्सदा ॥ १,९.१९२ ॥
व्याधिजन्मजरामृत्युवर्जितः सर्वसिद्धिभाक् ।
सर्वज्ञः सर्वगः सिद्धः सृजतीव पितामहः ॥ १,९.१९३ ॥
विष्णुवत्त्रायते विश्वं हरतीव हरः स्वयम् ।
वाञ्छितार्थान् स्वयं दत्ते कल्पद्रुम इवापरः ॥ १,९.१९४ ॥
कन्दर्प इव कामाक्षीः सहस्रं रमयेत्क्षणात् ।
सच्चिदानन्दरूपोऽयं रससेवी भवेद्ध्रुवम् ॥ १,९.१९५ ॥
घनादिपञ्चयोगोत्थमेकत्रिंशद्रसायनम् ।
भवत्स्नेहेन कथितं रहस्यं देवदुर्लभम् ॥ १,९.१९६ ॥

आक्, १, १०
[घुटिकासिद्धिः]
प्रणम्य परया भक्त्या भैरवं भैरवी शिवम् ।
उवाच विनयेनेदं लोकानां हितकांक्षिणी ॥ १,१०.१ ॥
श्रीभैरवी ।
देवदेव कृपामूर्ते सर्वानुग्राहक प्रभो ।
त्वत्प्रसादान्मया ज्ञातं रहस्यमतिदुर्लभम् ॥ १,१०.२ ॥
कान्ताभ्रहेमकुलिशरसभस्म रसायनम् ।
अतः परं महादेव श्रोतुमिच्छामि भैरव ॥ १,१०.३ ॥
एतैर्घनाद्यै रचितघुटिकानां रसायनम् ।
श्रुत्वा सविनयं वाक्यं भैरव्यास्त्वादिभैरवः ॥ १,१०.४ ॥

स्थित्वेत्युवाच वचनं तद्वक्ष्यामि रसायनम् ।
श्रीभैरवः ।
[१. सञ्जीवनी घुटिका]
शृणु पार्वति यत्नेन सावधानेन साम्प्रतम् ॥ १,१०.५ ॥
प्रथमं जारणं कार्यं पश्चात्पारदबन्धनम् ।
तस्माज्जारणबीजानि घनादीनां वदामि ते ॥ १,१०.६ ॥
गन्धतालशिलातुत्थखर्परीहिङ्गुलामलाः ।
भूनागताप्यकासीसनृपावर्ताभ्रगैरिकम् ॥ १,१०.७ ॥
कान्तत्रिक्षारवैक्रान्तास्त्वेते चूर्णसमांशकः ।
सिद्धचूर्णमिदं ख्यातं श्रेष्ठं स्याद्बीजकर्मणि ॥ १,१०.८ ॥
द्वन्द्वमेलोपलिप्तायां मूषायां निक्षिपेत्प्रिये ।
कृष्णसत्वाभ्रसत्वं च द्रावयेत्समशुल्बकम् ॥ १,१०.९ ॥
समित्रपञ्चकं तस्मिन्सिद्धचूर्णं मुहुर्मुहुः ।
घनाद्दशगुणं क्षेप्यं धमेद्गाढं वरानने ॥ १,१०.१० ॥
घनसत्वावशिष्टं स्याद्धमनीयं च तावता ।
कालेनेदं व्योमसत्वबीजं जार्यं रसायने ॥ १,१०.११ ॥
समुखे पारदे बीजं चतुःषष्ट्यंशके क्षिपेत् ।
तप्तखल्वेऽम्लवर्गेण मर्दयेद्दिवसत्रयम् ॥ १,१०.१२ ॥
तं सूतं कच्छपे यन्त्रे सबिडे जारयेत्प्रिये ।
ततो द्वात्रिंशदंशं च षोडशांशं रसस्य तु ॥ १,१०.१३ ॥
अष्टमांशं चतुर्थांशं द्व्यंशं चैव समांशकम् ।
पारदे जारयेदेवं क्रमाद्बीजं सुरेश्वरि ॥ १,१०.१४ ॥
सूतमेवंविधं व्योमसत्वं बीजसमं प्रिये ।
तप्तखल्वेऽम्लवर्गेण मर्दयेदेकवासरम् ॥ १,१०.१५ ॥
पिष्टिं पारदराजं तं जम्बीरान्तर्विनिक्षिपेत् ।
दोलायन्त्रेऽम्लयुक्ते तं विपचेत्सप्तवासरम् ॥ १,१०.१६ ॥
तमादाय बलिं क्षिप्त्वा सिद्धचूर्णेन पार्वति ।
ततस्तं भूधरे यन्त्रे पचेल्लघुपुटेन च ॥ १,१०.१७ ॥
यावत्कठिनतां याति तावत्कार्यं मुहुर्मुहुः ।
दोलापाकं सिद्धचूर्णलेपं भूधरके पुटम् ॥ १,१०.१८ ॥
मृतसञ्जीवनी नाम्ना घुटिका सर्वसिद्धिदा ।
वक्त्रान्तरे गले मूर्ध्नि बाहौ कर्णेऽथवा वहेत् ॥ १,१०.१९ ॥
हेम्ना सुवेष्टिता सम्यग्वलीपलितनाशिनी ।
वक्त्रस्था मृत्युहा वर्षाद्विषविग्रहनाशिनी ॥ १,१०.२० ॥
शुद्धं गन्धं कर्षमात्रं गव्यं क्षीरं पलं पिबेत् ।
अनेन क्रमणेनैव सूतः संक्रमते तनुम् ॥ १,१०.२१ ॥
[२. दिव्या घुटिका]
कान्तम्लेच्छमुखं रूप्यं लिप्तमूषान्तरे समम् ।
द्रावयित्वा सिद्धचूर्णं कान्ताद्दशगुणं शनैः ॥ १,१०.२२ ॥
वहेन्मुहुर्मुहुर्द्राव्यं यावत्कान्तोऽवशिष्यते ।
कान्तबीजमिदं प्रोक्तं श्रेष्ठं जार्यं रसायने ॥ १,१०.२३ ॥
समुखे पारदे चेदं बीजं चार्यं च पूर्ववत् ।
चतुःषष्ट्यंशकं पूर्वं समांशं तं क्रमेण वै ॥ १,१०.२४ ॥
एवंविधं सूतराजं कान्तबीजं द्वयं समम् ।
मर्दयेत्तप्तखल्वे च साम्लवर्गे दिनत्रयम् ॥ १,१०.२५ ॥

पिष्टीभूतं च जम्बीरे क्षिप्त्वाम्लगणपूरिते ।
दोलायन्त्रे पचेत्सम्यगेवमा सप्तवारकम् ॥ १,१०.२६ ॥
तमादाय लिहेद्बाह्ये सिद्धचूर्णेन भैरवि ।
ततो दिव्यौषधैर्लिप्ते संपुटे भूधरे पचेत् ॥ १,१०.२७ ॥
यावत्कठिनतां याति तावत्कुर्यात्क्रमेण च ।
दोलापाकं सिद्धचूर्णलेपं भूधरपाचनम् ॥ १,१०.२८ ॥
पुटे तौ जारयेद्दिव्यनाम्नाथ परमेश्वरि ।
वक्त्रान्तरे गले मूर्ध्नि बाहौ कर्णेऽथवा वहेत् ॥ १,१०.२९ ॥
हेम्ना सुवेष्टितं धार्यं वलीपलितनाशनम् ।
पूर्ववत्फलदा पुण्या धार्या यत्नेन मानवैः ॥ १,१०.३० ॥
पूर्ववत्क्रामणं कार्यं देहे संक्रमते रसः ।
[३. कामेश्वरी घुटिका]
समुखे पारदे व्योमकान्तबीजं च मारयेत् ॥ १,१०.३१ ॥
प्रत्येकं पारदसमं पूर्ववच्च शनैः शनैः ।
चतुःषष्ट्यंशकं चादौ समांशं तं क्रमाद्रसे ॥ १,१०.३२ ॥
अस्य सूतस्य तुल्यांशं कान्तबीजाभ्रबीजकम् ।
तप्तखल्वेऽम्लवर्गेण मर्दयेद्वासरत्रयम् ॥ १,१०.३३ ॥
पिष्टीकृतं च जम्बीरे क्षिप्त्वा दोलागतं पचेत् ।
पुनरादाय तां पिष्टिं सिद्धचूर्णेन लेपयेत् ॥ १,१०.३४ ॥
दिव्यौषधिगणैर्लिप्ते संपुटे भूधरे पचेत् ।
यदा कठिनतां याति द्विधा कुर्यात्क्रमेण तु ॥ १,१०.३५ ॥
दोलास्वेदं चूर्णलेपं कृत्वा भूधरपाचनम् ।
कामेश्वरीयं घुटिका वक्त्रस्था सर्वसिद्धिदा ॥ १,१०.३६ ॥
पूर्ववत्क्रामणं कार्यं रसेन्द्रः क्रामते तनुम् ।
[४. हेमसुन्दरी घुटिका]
स्वर्णं रूप्यं म्लेच्छमुखं कान्तसत्वाभ्रसत्वकम् ॥ १,१०.३७ ॥
द्वन्द्वमेलोपलिप्तायां मूषायां तद्विनिक्षिपेत् ।
तस्मिन्द्रुते सिद्धचूर्णं स्वर्णाद्दशगुणं क्षिपेत् ॥ १,१०.३८ ॥
यावत्स्वर्णावशेषं स्यात्तावद्द्राव्यं शनैः शनैः ।
हेमबीजमिदं ख्यातं श्रेष्ठं रसरसायने ॥ १,१०.३९ ॥
समुखे पारदे देवि बीजं रससमं क्रमात् ।
जारयेत्पूर्ववद्देवि चतुःषष्ट्यंशकादिकम् ॥ १,१०.४० ॥
एतद्रसं हेमबीजं समं खल्वे च तापिते ।
मर्दयेदम्लवर्गेण त्र्यहात्पिष्टिर्भवेद्रसः ॥ १,१०.४१ ॥
पिष्टिं जम्बीरजां कृत्वा दोलायन्त्रेऽम्लपूरिते ।
षडहं पाचयेद्देवि सिद्धचूर्णप्रलेपनम् ॥ १,१०.४२ ॥
तथा संपुटलेपं च तथा भूधरपाचनम् ।
यावत्कठिनतां याति तावत्कुर्याच्च पूर्ववत् ॥ १,१०.४३ ॥
इयं तु घुटिका दिव्या विख्याता हेमसुन्दरी ।
वक्त्रस्था सिद्धिदा नॄणां जरामृत्युविषापहा ॥ १,१०.४४ ॥
पूर्ववत्क्रामणं कार्यं सूतः संक्रमते पुनः ।
[५. मदनसुन्दरी घुटिका]
मुखीकृते रसे व्योमबीजं हाटकबीजकम् ॥ १,१०.४५ ॥
समं समं क्रमाज्जार्यं चतुःषष्ट्यंशकादिकम् ।
इत्येवं जारितं सूतं बीजं गगनरुक्मयोः ॥ १,१०.४६ ॥

मर्दयेत्पारदसमं तप्तखल्वेऽम्लवर्गतः ।
त्रिदिनाज्जायते पिष्टिः पुनर्जम्बीरगां कुरु ॥ १,१०.४७ ॥
दोलायन्त्रेऽम्लभरिते पचेत्तां सप्तवासरम् ।
लेपनं सिद्धचूर्णस्य तथा संपुटलेपनम् ॥ १,१०.४८ ॥
तथा भूधरपाकश्च यावत्कठिनतां व्रजेत् ।
सिद्धिदा घुटिका ह्येषा नाम्ना मदनसुन्दरी ॥ १,१०.४९ ॥
आस्यान्तरस्थिता कुर्यात्सर्वसिद्धीश्चिरायुषः ।
व्यालव्याघ्रगजादीनां राज्ञां वश्यं स्त्रियामपि ॥ १,१०.५० ॥
पूर्ववत्क्रामणं कार्यं कायमाक्रामते रसः ।
[६. खेचरी घुटिका]
मुखीकृते रसे कान्तहेमबीजं समं समम् ॥ १,१०.५१ ॥
रसोन्मिते पृथक्जार्यं चतुःषष्ट्यंशकादिकम् ।
इत्थं जीर्णे रसं बीजं कान्तहेम्नो रसोन्मितम् ॥ १,१०.५२ ॥
पूर्ववत्पिष्टिकां कृत्वा दोलायन्त्रे च पाचनम् ।
यावत्कठिनतां याति तावत्कार्यं मुहुर्मुहुः ॥ १,१०.५३ ॥
घुटिका जायते नाम्ना खेचरी सर्वसिद्धिदा ।
पूर्ववत्क्रामणं कार्यं सुगन्धं गोपयः पिबेत् ॥ १,१०.५४ ॥
तेन संक्रमते देहं घुटिकान्तर्गतो रसः ।
[७. वज्रेश्वरी घुटिका]
समुखे पारदे व्योमकान्तहेम्नां समं समम् ॥ १,१०.५५ ॥
बीजं पृथक्पृथक्जार्यं चतुःषष्ट्यंशकादिकम् ।
इत्थंभूतस्य सूतस्य समं व्योमादिबीजकम् ॥ १,१०.५६ ॥
त्रयं तापितखल्वेन त्र्यहमम्लेन मर्दयेत् ।
स सूतः पिष्टिमाप्नोति तां पिष्टिं पूर्ववत्प्रिये ॥ १,१०.५७ ॥
दोलापाकं सिद्धचूर्णलेपं भूधरपाचनम् ।
यावत्कठिनतां याति तावत्कार्यमतन्द्रितैः ॥ १,१०.५८ ॥
वज्रेश्वरीति घुटिका वक्त्रस्था सर्वसिद्धिदा ।
पूर्ववत्क्रामणं कार्यं गात्रं व्याप्नोति पारदः ॥ १,१०.५९ ॥
[८. महावज्रेश्वरी घुटिका]
शुद्धं स्वर्णं वज्रभस्म लोहचूर्णाभ्रसत्वकम् ।
एतच्चतुःसमं नागं मूषायां चान्धितं धमेत् ॥ १,१०.६० ॥
द्वन्द्वमेलोपलिप्तायां पुनरादाय तं प्रिये ।
एकीभूतं च मूषायां प्रकटं च धमेत्पुनः ॥ १,१०.६१ ॥
धौतसत्त्वं माक्षिकं च स्वल्पं स्वल्पं मुहुः क्षिपेत् ।
वज्रहेमावशेषं तु यावत्स्यात्तत उद्धरेत् ॥ १,१०.६२ ॥
एतस्मिन् व्योमसत्वायश्चूर्णनागांश्च पूर्ववत् ।
द्वन्द्वमेलोपलिप्तायामन्धयित्वा दृढं धमेत् ॥ १,१०.६३ ॥
एकीभूतं समादाय मूषायां प्रकटं धमेत् ।
हेमवज्रावशेषं स्याद्यावत्तत्पुनराहरेत् ॥ १,१०.६४ ॥
व्योमसत्वमयश्चूर्णं नागं वाह्यं पुनः पुनः ।
पूर्ववत्क्रमयोगेन माक्षिकं धौतसत्त्वकम् ॥ १,१०.६५ ॥
मुहुः क्षिप्य धमेत्तं तु बाह्यमेवं तु षड्गुणम् ।
वज्रबीजमिदं श्रेष्ठं जार्यं रसरसायने ॥ १,१०.६६ ॥
समुखे पारदे जार्यं वज्रबीजं रसोन्मितम् ।
चतुःषष्ट्यंशकाद्यं च क्रमात्संक्रामयेत्प्रिये ॥ १,१०.६७ ॥

इत्थं जारितसूतस्य समं कुलिशबीजकम् ।
तप्तखल्वेऽम्लवर्गेण मर्दयेद्दिवसत्रयम् ॥ १,१०.६८ ॥
स पिष्टिर्जायते सूतस्तां पिष्टीं च समाहरेत् ।
दोलापाकः सिद्धचूर्णलेपः सम्पुटभूधरम् ॥ १,१०.६९ ॥
कुर्वीत पूर्ववत्सर्वं यावत्कठिनतां व्रजेत् ।
महावज्रेश्वरी नाम्ना घुटिका सिद्धिदायिनी ॥ १,१०.७० ॥
वक्त्रस्था क्रामणं कार्यं पूर्ववत्क्रामते रसः ।
[९. वज्रखेचरी घुटिका]
मुखीकृते रसे व्योमवज्रबीजं रसोन्मितम् ॥ १,१०.७१ ॥
पृथक्पृथक्जारणीयं चतुःषष्ट्यंशकादिकम् ।
अमुष्य जीर्णसूतस्य समं वज्राभ्रबीजकम् ॥ १,१०.७२ ॥
तप्तखल्वेऽम्लवर्गेण त्रिदिनं मर्दयेद्दृढम् ।
स रसो जायते पिष्टिस्तां पुनः पूर्ववत्प्रिये ॥ १,१०.७३ ॥
दोलास्वेदं सिद्धचूर्णलेपं भूधरपाचनम् ।
यावत्कठिनतां यति तावदेवं मुहुर्मुहुः ॥ १,१०.७४ ॥
घुटिका जायते दिव्या नाम्नेयं वज्रखेचरी ।
वक्त्रस्था सिद्धिदा नृणां पूर्ववत्क्रामणं प्रिये ॥ १,१०.७५ ॥
[१०. कालविध्वंसिनी घुटिका]
मुखीकृते रसे कान्तवज्रबीजं रसोन्मितम् ।
पृथक्पृथग्जारणीयं चतुःषष्ट्यंशकादिकम् ॥ १,१०.७६ ॥
अस्य जीर्णस्य सूतस्य समं कुलिशकान्तयोः ।
बीजं संतप्तखल्वेऽम्लवर्गे मर्द्यं दिनत्रयम् ॥ १,१०.७७ ॥
पिष्टिर्भवत्येष सूतः पिष्टिं तां पुनराहरेत् ।
दोलास्वेदः सिद्धचूर्णलेपः संपुटभूधरम् ॥ १,१०.७८ ॥
यावत्कठिनतां याति तावदेवं मुहुर्मुहुः ।
कालविध्वंसिनी नाम्ना घुटिका जायते शुभा ॥ १,१०.७९ ॥
मुखस्था सिद्धिदा दिव्या पूर्ववत्क्रामणं पिबेत् ।
[११. गगनेश्वरी घुटिका]
मुखीकृते सूतराजे वज्रकान्ताभ्रबीजकम् ॥ १,१०.८० ॥
पृथक्पृथक्सूतराजे चतुःषष्ट्यंशकादिकम् ।
रसस्य तस्य सदृशं वज्रबीजाभ्रबीजकम् ॥ १,१०.८१ ॥
तप्तखल्वेऽम्लवर्गेण त्र्यहात्पिष्टिः सुमर्दनात् ।
दोलापाकः सिद्धचूर्णलेपः संपुटभूधरम् ॥ १,१०.८२ ॥
यावत्कठिनतां याति तावत्कुर्यान्मुहुर्मुहुः ।
गगनेश्वरीयं घुटिका वक्त्रस्था सर्वसिद्धिदा ॥ १,१०.८३ ॥
पूर्ववत्क्रामणं कार्यं देहे क्रामति सूतकः ।
[१२. वज्रघण्टेश्वरी घुटिका]
मुखीकृते सूतराजे बीजं वज्रसुवर्णयोः ॥ १,१०.८४ ॥
पृथक्पृथक्समं जार्यं चतुःषष्ट्यंशकादिकम् ।
अस्य सूतस्य सदृशं हेम्नो वज्रस्य बीजकम् ॥ १,१०.८५ ॥
तप्तखल्वेऽम्लवर्गेण त्र्यहात्पिष्टिर्भवेद्रसः ।
तां पिष्टिं पुनरादाय पूर्ववत्परिकल्पयेत् ॥ १,१०.८६ ॥
दोलापाकं सिद्धचूर्णलेपं भूधरपाचनम् ।
यावत्कठिनतां याति तावत्कुर्यान्मुहुर्मुहुः ॥ १,१०.८७ ॥
वज्रघण्टेश्वरी ह्येषा घुटिका सिद्धिदायिनी ।

मुखस्था सिद्धिदा दिव्या पूर्वोक्तं क्रामणं पिबेत् ॥ १,१०.८८ ॥
[१३. वज्रभैरवी घुटिका]
मुखीकृते सूतराजे हेमवज्राभ्रबीजकम् ।
पृथक्पृथक्समं जार्यं चतुःषष्ट्यंशकादिकम् ॥ १,१०.८९ ॥
अस्य सूतस्य सदृशं हेमवज्राभ्रबीजकम् ।
मर्दयेदम्लवर्गेण तप्तखल्वे दिनत्रयम् ॥ १,१०.९० ॥
पिष्टिर्भवेत्पुनस्तां च समादाय ततः प्रिये ।
दोलापाकं सिद्धचूर्णलेपं भूधरपाचनम् ॥ १,१०.९१ ॥
यावत्कठिनतामेति तावत्कार्यं मुहुर्मुहुः ।
घुटिका जायते दिव्या नाम्नेयं वज्रभैरवी ॥ १,१०.९२ ॥
मुखस्थिता सिद्धकरी क्रामणं पूर्ववत्प्रिये ।
[१४. त्रिपुरभैरवी घुटिका]
मुखीकृते रसे कान्तवज्रहाटकबीजकम् ॥ १,१०.९३ ॥
जार्यं पृथक्सूतसमं चतुःषष्ट्यंशकादिकम् ।
जीर्णसूतसमं कान्तवज्रकाञ्चनबीजकम् ॥ १,१०.९४ ॥
तप्तखल्वेऽम्लवर्गेण मर्दयेद्दिवसत्रयम् ।
जायते पारदः पिष्टिः पूर्ववत्तां समाहरेत् ॥ १,१०.९५ ॥
दोलापाकं सिद्धचूर्णलेपं भूधरपाचनम् ।
यावत्कठिनतामेति तावत्कार्यं मुहुर्मुहुः ॥ १,१०.९६ ॥
घुटिका जायते दिव्या नाम्ना त्रिपुरभैरवी ।
मुखस्था सिद्धिदा ह्येषा पूर्ववत्क्रामणं प्रिये ॥ १,१०.९७ ॥
[१५. महाभैरवी घुटिका]
मुखीकृते रसे कान्तवज्राभ्रस्वर्णबीजकम् ।
पृथक्सूतसमं जार्यं चतुःषष्ट्यंशकादिकम् ॥ १,१०.९८ ॥
अस्य सूतस्य जीर्णस्य समं व्योमादिबीजकम् ।
मर्दयेदम्लवर्गेण तप्तखल्वे दिनत्रयम् ॥ १,१०.९९ ॥
पिष्टिर्भवति सूतेन्द्रस्तां पिष्टिं पुनराहरेत् ।
दोलापाकं सिद्धचूर्णलेपं संपुटभूधरे ॥ १,१०.१०० ॥
यावत्कठिनतामेति तावत्कार्यं मुहुर्मुहुः ।
नाम्ना महाभैरवीयं घुटिका सर्वसिद्धिदा ॥ १,१०.१०१ ॥
धारयेन्मुखमध्ये तत्पूर्ववत्क्रामणं पिबेत् ।
[क्रामणानि]
त्रिफला मुसली मुण्डी भृङ्गराजश्च वाकुची ॥ १,१०.१०२ ॥
नीली कन्या काकमाची हयगन्धा शतावरी ।
उत्तरा वारुणी देवदाली चित्रा पुनर्नवा ॥ १,१०.१०३ ॥
निर्गुण्डी सहदेवी च रुदन्ती गजकर्णिका ।
भूतावरातभल्लातकाकतुण्डामृतालताः ॥ १,१०.१०४ ॥
पलाशः कुक्कुरूटश्च धात्रीफलरसः पयः ।
पलाशबीजकं तैलं घृतं मधु शिवाम्बु च ॥ १,१०.१०५ ॥
बिल्वमज्जा च तैलं च तैलं ज्योतिष्मतीभवम् ।
एतानि क्रामणार्हाणि चौषधानि भवन्ति हि ॥ १,१०.१०६ ॥
एते चाष्टार्धगदिताः क्रामणार्थे प्रयोगतः ।
रसभस्मप्रयोगे च घुटिकानां रसायने ॥ १,१०.१०७ ॥
[पञ्चदशघुटिकाफलम्]
प्रिये पञ्चदशानां च घुटिकानां फलं शृणु ।

अभ्रबीजेन रचितघुटिका रससंयुता ॥ १,१०.१०८ ॥
मुखस्थिता द्वादशाब्दं सर्वरोगविनाशनी ।
स जीवेद्वत्सरशतं पुमांश्च परमेश्वरि ॥ १,१०.१०९ ॥
कान्तबीजेन रचिता घुटिका रससंयुता ।
आस्यस्था सर्वरोगघ्नी द्वादशाब्दं वरानने ॥ १,१०.११० ॥
धातुदार्ढ्यप्रजननी सहस्रायुष्यदायिनी ।
कान्ताभ्रबीजरचिता रसयुग्घुटिका शुभा ॥ १,१०.१११ ॥
द्वादशाब्दं मुखान्तस्था जरामयविनाशिनी ।
अयुतायुष्यदा दिव्या महाबलविवर्धिनी ॥ १,१०.११२ ॥
हेमबीजयुता सूतघुटिका मुखमध्यगा ।
आ द्वादशाब्दं देहस्य वलीपलितरोगहा ॥ १,१०.११३ ॥
आयुष्यप्रदा पुण्या नागायुतबलप्रदा ।
हेमाभ्रबीजघटिता घुटिका युक्तपारदा ॥ १,१०.११४ ॥
वक्त्रास्थितार्कसंख्याब्दं दशलक्षाब्दजीवदा ।
दिव्यबुद्धिप्रजननी दिव्यसत्वप्रदायिनी ॥ १,१०.११५ ॥
कान्तकाञ्चनबीजाभ्यां ससूता घुटिका कृता ।
द्वादशाब्दं मुखान्ता कोट्यायुष्यविवर्धिनी ॥ १,१०.११६ ॥
महातेजःप्रजननी बिलनिध्यादिदर्शिनी ।
कान्ताभ्रहेमघटिता घुटिका रससंयुता ॥ १,१०.११७ ॥
मुखस्था द्वादशाब्दान्ताद्दशकोट्यब्दजीवदा ।
हालाहलादिसंवर्तखेचरत्वप्रदायिनी ॥ १,१०.११८ ॥
निर्मुक्तवज्रबीजेन रसयुग्घुटिका शुभा ।
मुखस्था द्वादशाब्दान्तं सर्वलोकगतिप्रदा ॥ १,१०.११९ ॥
यावद्भूमिः स्थिरतरा तावदायुःप्रवर्धिनी ।
तरुणः सर्वदा कामः कान्तानां सुरतक्षमः ॥ १,१०.१२० ॥
वज्राभ्रबीजरचिता घुटिका रसगर्भिता ।
घुटिका रससंख्याब्दं मुखस्था सर्वसिद्धिदा ॥ १,१०.१२१ ॥
ब्रह्मायुष्यप्रदा पुंसां जगत्सृष्टुं क्रमात्प्रभुः ।
पूज्यते ब्रह्मवद्देवैर्वेदवेदाङ्गपारगः ॥ १,१०.१२२ ॥
सरस्वत्या च सावित्र्या सेव्यते सर्वलोकगः ।
अष्टाभिः सिद्धिभिर्युक्तो ह्यणिमादिभिरीश्वरि ॥ १,१०.१२३ ॥
वज्रकाञ्चनबीजेन ससूता घुटिका कृता ।
मुखस्था द्वादशाब्दान्तं विष्णवायुष्यप्रदा नृणाम् ॥ १,१०.१२४ ॥
स च विष्णुत्वमाप्नोति विष्णुवत्पालितुं क्षमः ।
सेव्यते सनकाद्यैश्च श्रिया युक्तो महाबलः ॥ १,१०.१२५ ॥
स्वेच्छागतिर्महेन्द्राद्यैर्निर्जरैः सेव्यते सदा ।
हेमाभ्रवज्रबीजेन रचिता घुटिका प्रिये ॥ १,१०.१२६ ॥
सपारदा मुखान्तःस्था द्वादशाब्दं वरानने ।
रुद्रायुष्प्रदा न्ःणां रुद्रत्वं सा ददाति हि ॥ १,१०.१२७ ॥
संहर्ता रुद्रवल्लोकं विष्ण्विन्द्राद्यैश्च सेव्यते ।
अणिमाद्यैश्च सहितः सर्वज्ञः सर्वलोकगः ॥ १,१०.१२८ ॥
सेव्यते प्रमथश्रेष्ठैर्दिव्यशक्त्या समन्वितः ।
योगीन्द्रैर्ध्यायते धीरो महातेजा महाबलः ॥ १,१०.१२९ ॥
कान्तकाञ्चनवज्राणां बीजैः सूतयुता कृता ।
घुटिका भानुसंख्याब्दं मुखस्था सिद्धिदा नृणाम् ॥ १,१०.१३० ॥

ईश्वरायुष्यमाप्नोति खेचरत्वं च मानवः ।
तिरोधत्ते स्वयं लोकाद्ब्रह्मेन्द्राद्यभिवन्दितः ॥ १,१०.१३१ ॥
कोटिसूर्यप्रतीकाशो महामारुतसत्त्ववान् ।
महाकल्पान्तकालेऽपि विनाशं न व्रजेद्ध्रुवम् ॥ १,१०.१३२ ॥
योगक्रीडानुषक्तात्मा ध्यायते योगवित्तमैः ।
कान्ताभ्रहेमवज्राणां कृता बीजै रसात्मिका ॥ १,१०.१३३ ॥
घुटिका रविसंख्याब्दवक्त्रस्था यस्य भैरवि ।
सदाशिवायुः स भवेत्सर्वानुग्राहकः प्रभुः ॥ १,१०.१३४ ॥
सदाशिवत्वमाप्नोति देवानामधिपस्तथा ।
वह्नौ वह्निर्जले वारि मारुते मारुतात्मकः ॥ १,१०.१३५ ॥
पृथिव्यां पृथिवीरूपः शून्ये शून्यात्मको भवेत् ।
तस्याक्षिणीन्दुवह्न्यर्कौ ब्रह्मेन्द्राद्याश्च सेवकाः ॥ १,१०.१३६ ॥
गायका नारदाद्याश्च नर्तक्यश्चाप्सरोऽङ्गनाः ।
तदाज्ञयैव ब्रह्मेन्द्राः सृष्टिस्थितिविनाशकाः ॥ १,१०.१३७ ॥
सच्चिदानन्दकः शक्तः सर्वगः सर्वविच्छिवः ।
पराशक्तियुतः पुण्यो निर्मायो निष्कलः परम् ॥ १,१०.१३८ ॥
एवं गुणाः प्रकथिता घुटिकानां मया प्रिये ।
शस्त्रस्तम्भकरश्चासां सर्वासामपि विद्यते ॥ १,१०.१३९ ॥
रसायनस्य सर्वस्य सिद्धिदोऽयं महेश्वरि ।
[घुटिकासिद्धौ मन्त्रप्रयोगः]
वक्ष्यते मन्त्रराजोऽयं सर्वसिद्धिप्रदायकः ॥ १,१०.१४० ॥
ऐं ह्रीं श्रीं क्लीं सौः अमृतेश्वरभैरव अमृतं कुरु अमृतेश्वरभैरवाय हुम् ।
सौः क्लीं श्रीं ह्रीमैं हुं फट्स्वाहा ।
सौः क्लीं श्रीं ह्रीमैम् ।
पुमाननेन मन्त्रेण शीघ्रं सिद्धिमवाप्नुयात् ॥ १,१०.१४१ ॥

आक्, १, ११
[जीवत एव दिव्यदेहसिद्धिः; भूतकालान्तकरसः]
श्रीभैरवी ।
देवदेव महादेव कथितानि त्वयाधुना ।
रसायनानि दिव्यानि सिद्धिदानि महेश्वर ॥ १,११.१ ॥
चिरकालेन देहानां कल्पानां सिद्धिदानि हि ।
सद्यः सिद्धिर्यथा देव जायते परमेश्वर ॥ १,११.२ ॥
तद्ब्रूहि न्यूनाभ्यधिकहीनक्षीणाङ्गिनामपि ।
अथ गद्गदमूकानां कुब्जानामथ कुष्ठिनाम् ॥ १,११.३ ॥
अन्धपङ्ग्वबलानां च जराजर्जरितात्मनाम् ।
सदा रोगार्तषण्डानां कृशानां भ्रान्तचेतसाम् ॥ १,११.४ ॥
भूतप्रेतपिशाचापस्मारोन्मत्तयुजामपि ।
प्रमादाज्जीवशेषाणां देहसिद्धिप्रदं नृणाम् ॥ १,११.५ ॥
श्रीभैरवः ।
श्रुत्वा तद्भैरवीवाक्यं साधु पृष्टं त्वया प्रिये ।
तथाविधां प्रवक्ष्यामि देहसिद्धिं वरानने ॥ १,११.६ ॥
पञ्चभूतात्मिकाः पञ्च कर्तव्या घुटिकाः प्रिये ।
जीवात्मिका भवेत्षष्ठी घुटिका पिण्डकोष्टयुक् ॥ १,११.७ ॥

काले तु या कन्या कुर्यात्संभोगमायतम् ।
तद्वराङ्गस्थितं रक्तं शुक्लं स्याद्व्योमसत्वकम् ॥ १,११.८ ॥
तस्याः सद्यः प्रसूतस्य विष्ठा पुत्रस्य मारुतम् ।
तत्त्वं स्यात्केवलं तस्या रजस्तेजात्मसत्त्वकम् ॥ १,११.९ ॥
तदपत्यस्य रुधिरं जलतत्त्वं प्रकीर्तितम् ।
तत्सूतस्य वपुः सर्वं पार्थिवं तत्त्वमुच्यते ॥ १,११.१० ॥
सूतसेवकशुक्लं च जीवतत्त्वं भवेत्प्रिये ।
कोटिवेधकरं सूतं कर्षं कर्षं नियोजयेत् ॥ १,११.११ ॥
एकैकतत्त्वमध्ये तु प्रसेकं तानि मर्दयेत् ।
तेषां च गोलकान्कृत्वा षड्रसं स्थापयेत्पृथक् ॥ १,११.१२ ॥
नृमानमुन्नतं कायमायामं तु तदर्धकम् ।
कटाहं ताम्रघटितं पिण्डस्थौल्यं षडङ्गुलम् ॥ १,११.१३ ॥
चतुर्मुखमयं कोष्ठं तस्योपरि कटाहकम् ।
धारयेन्निश्चलं सम्यक्तदन्तः पूरयेत्प्रिये ॥ १,११.१४ ॥
गोघृतं च महातैलं समभागमिदं द्वयम् ।
अर्चयेद्दशदिक्पालान् योगिनीश्च कुमारिकाम् ॥ १,११.१५ ॥
श्रीगुरुं सिद्धचक्रं च भैरवं भैरवीं तथा ।
गणाधिपं क्षेत्रपालं निजेष्टदैवतं तथा ॥ १,११.१६ ॥
नवग्रहाग्निविप्रांश्च दैवज्ञान् भिषगुत्तमान् ।
तथान्तरायकर्तॄंश्च भूतप्रेतपिशाचकान् ॥ १,११.१७ ॥
यक्षराक्षसगन्धर्वान्मन्त्रज्ञान्स्वजनानपि ।
तर्पयेन्मद्यमांसैश्च वस्त्रभूषणकाञ्चनैः ॥ १,११.१८ ॥
तत्तत्प्रियकरैर्दिव्यैर्बलिं दिक्षु विनिक्षिपेत् ।
चतुर्भिर्वङ्कनालैश्च धमयेत्खदिराग्निना ॥ १,११.१९ ॥
फेनहीनमधूमं च संतप्तं च यदा भवेत् ।
श्रीगुरुं निजदेवं च चन्द्रसूर्याग्नितारकाः ॥ १,११.२० ॥
भुवनानि नमस्कृत्य कटाहे निक्षिपेत्तनुम् ।
ज्ञात्वा सम्यग्द्रुतं देहं पार्थिवाख्यं रसं क्षिपेत् ॥ १,११.२१ ॥
धमेद्गाढं प्रयत्नेन तत्कल्कं च यदा भवेत् ।
ततोऽप्तत्त्वाख्यरसकं निक्षिपेद्रक्ततां नयेत् ॥ १,११.२२ ॥
तेजस्तत्त्वरसं पश्चात्क्षिपेत्तन्मांसतां व्रजेत् ।
निक्षिपेद्वायुतत्त्वाख्यं रसं तत्र विनिक्षिपेत् ॥ १,११.२३ ॥
शुभ्रवर्णत्वमाप्नोति ततश्चाकाशतत्त्वकम् ।
निक्षिपेज्जीवतत्त्वाख्यं रसतत्त्वं च पार्वति ॥ १,११.२४ ॥
रसं क्षिपेत्त्वन्धितस्य स्वर्णस्य तत्समं भवेत् ।
सजीवो जायते सिद्धो हुंकारत्रयमुच्चरेत् ॥ १,११.२५ ॥
यथोदितो भानुबिम्बो महाबुद्धिपराक्रमः ।
महावपुर्महातेजा नागायुतमहाबलः ॥ १,११.२६ ॥
मन्मथोपमरूपाढ्यो वाचा वागीश्वरीसमः ।
बुद्ध्या जीवसमः श्रीमान्विष्णुवद्धनदोपमः ॥ १,११.२७ ॥
त्यागे रोषे च कालाग्निर्गाम्भीर्येण महोदधिः ।
स्रष्टा हर्ता च गोप्ता च सर्वानुग्राहकः प्रभुः ॥ १,११.२८ ॥
दिव्यदृष्टिर्वज्रदेहः स साक्षाद्भैरवस्त्वयम् ।
अर्धयोजनविस्तीर्णहेमकिङ्किणिमण्डितम् ॥ १,११.२९ ॥
चलद्भ्रमरसशोभं नानामाणिक्यमण्डितम् ।

हेममालापरिष्वक्तं घण्टानादमनोहरम् ॥ १,११.३० ॥
दिव्यदीप्तमहानादिशङ्खकाहलसंकुलम् ।
वीणावेणुमृदङ्गाद्यैर्वादित्रैर्मुरजैः समम् ॥ १,११.३१ ॥
तालैर्बहुविधैश्चान्यैर्दिव्यघोषैः समाकुलम् ।
गायत्किन्नरगन्धर्वैस्तथा किंपुरुषैर्युतम् ॥ १,११.३२ ॥
लसन्माणिक्यकेयूरहारकङ्कणमुद्रकाः ।
काचनूपुरसंयुक्ता दिव्याभरणभूषिताः ॥ १,११.३३ ॥
दिव्यमालापरिष्कारा दिव्यगन्धानुलेपनाः ।
दिव्याम्बराश्चारुरूपा मत्तमन्मथविह्वलाः ॥ १,११.३४ ॥
दिव्याङ्गनास्तदा चैनं समाश्रित्य ब्रुवन्ति च ।
किं कर्म सिद्धसंखेदास्त्वादेशो देव दीयताम् ॥ १,११.३५ ॥
उपासते सिद्धकन्याः परः शतसहस्रकम् ।
यत्र यास्यति तत्रैव चानुयामो वयं वृताः ॥ १,११.३६ ॥
दिव्यालयांश्च विविधान्हेममाणिक्यमण्डितान् ।
दिव्यानि स्नानपानानि स्वीकुर्वाणो मुहुर्मुहुः ॥ १,११.३७ ॥
वज्र्यादिसर्वलोकेषु स्वेच्छया विहरत्यसौ ।
पूज्यते देवसिद्धौघैः यथायं भैरवस्तथा ॥ १,११.३८ ॥
भुञ्जानः सर्वभोगांश्च क्षुत्पिपासाविवर्जितः ।
योगिनीशतसाहस्रं भोक्ता संचिन्तयन् सुखम् ॥ १,११.३९ ॥
महाकल्पान्तकालेऽपि प्रक्षीणेऽस्मिन्वरानने ।
लीयते परमे व्योम्नि लीयन्ते यत्र देवताः ॥ १,११.४० ॥
भूतकालान्तको नाम रसस्यास्य प्रभावतः ।
अभेद्योऽयमखण्ड्यश्च त्वदाह्यो भवति प्रिये ॥ १,११.४१ ॥
रसायनस्य सर्वस्य सिद्धिदोऽयं महेश्वरि ।
वक्ष्यते मन्त्रराजोऽयं रससिद्धिप्रदायकः ॥ १,११.४२ ॥
ऐं ह्रीं श्रीं क्लीं सौः श्रीभैरव ॥ १,११.४३ ॥

आक्, १, १२
[श्रीशैले सिद्धिलाभः]
श्रीभैरवी ।
श्रीशैले विविधा सिद्धिः सद्यः प्रत्ययकारिणी ।
सुलभा श्रूयते देव तां ब्रूहि विविधां प्रभो ॥ १,१२.१ ॥
श्रीभैरवः ।
वक्ष्यामि शृणु तत्सर्वं सद्यः सिद्धिकरं प्रिये ।
कैलासान्मन्दरान्मेरोर्विन्ध्याद्रेश्च हिमालयात् ॥ १,१२.२ ॥
महेन्द्रान्मलयाद्रेश्च सह्याद्दृश्यगिरेरपि ।
श्रेष्ठः श्रीपर्वतो दिव्यः सिद्धियोगीन्द्रसेवितः ॥ १,१२.३ ॥
तत्र तीर्थानि सर्वाणि सरांसि सरितः प्रिये ।
सिद्धिप्रदानि लिङ्गानि लतापाषाणपादपाः ॥ १,१२.४ ॥
मृत्तिकाकन्दतोयानि पत्रपुष्पफलानि च ।
एवमादीनि विद्यन्ते सर्वसिद्धिकराणि च ॥ १,१२.५ ॥
श्रीपर्वतोऽहमीशानि त्वहं साक्षात्स पर्वतः ।
स्थावरं मामकं रूपं विद्धि तं सुरसेवितम् ॥ १,१२.६ ॥
अस्मिन्यदस्ति नान्यत्र यदन्यत्र स्थितं च तत् ।

दिव्यलिङ्गस्पर्शनीयं ज्योतिर्लिङ्गमनामयम् ॥ १,१२.७ ॥
श्रीमल्लिकार्जुनमिति प्रख्यातं परमेश्वरि ।
वामपार्श्वेऽस्य लिङ्गस्य घण्टासिद्धेश्वरः स्थितः ॥ १,१२.८ ॥
घण्टा विलम्बते द्वारे तीर्थकुण्डं च विद्यते ।
उपोषितैस्त्रिभिः कार्यं जागरूकैरतन्द्रितैः ॥ १,१२.९ ॥
निशि कृष्णचतुर्दश्यामजस्रं स्नापयेच्छिवम् ।
एकः समानयेत्तोयं कुण्डस्थमपरः प्रिये ॥ १,१२.१० ॥
घण्टां निनादयेदन्यश्चतुर्यामावधि प्रिये ।
घण्टासिद्धेश्वरस्तुष्टो दद्यात्तेभ्योऽपि खे गतिम् ॥ १,१२.११ ॥
घण्टासिद्धेश्वरस्यास्य दक्षिणे निखनेत्प्रिये ।
जानुदघ्नं तु तत्रैव दृश्यते रोचनप्रभा ॥ १,१२.१२ ॥
मृत्तिका तां समाहृत्य कर्षमात्रं पिबेत्प्रिये ।
क्षीरयुक्तां च सप्ताहं स साक्षादमरो भवेत् ॥ १,१२.१३ ॥
श्रीगिरीशस्य पुरतो गजाकारा महाशिला ।
स्रवत्येव दिवारात्रं दिव्यगन्धं सुगुग्गुलुम् ॥ १,१२.१४ ॥
तं गृह्णीयात्पलाशस्य दर्व्यालाबुकपात्रके ।
प्रक्षिपेद्गन्धकयुतं भक्षयेत्कर्षमात्रकम् ॥ १,१२.१५ ॥
प्रत्यहं मासपर्यन्तं ततः सिद्धिमवाप्नुयात् ।
सदानन्दो युवा धीरो जीवेदाचन्द्रतारकम् ॥ १,१२.१६ ॥
विद्रुते म्लेच्छवदने गुग्गुलुं तं विनिक्षिपेत् ।
कोटिमंशं ततस्ताम्रं दिव्यं भवति काञ्चनम् ॥ १,१२.१७ ॥
[चन्द्रोदक बेइ ्ल्लिकार्जुन]
मल्लिकार्जुनदेवस्य चन्द्रवाप्यस्ति पश्चिमे ।
वैशाखपूर्णिमायां तु साधयेत्साधकोत्तमः ॥ १,१२.१८ ॥
निर्भयो निर्विकल्पश्च वसंस्तोयसमीपतः ।
जपेन्मृत्युञ्जयं मन्त्रं रात्रौ वासोविवर्जितः ॥ १,१२.१९ ॥
निशीथे चन्द्रसलिलं चन्द्रस्पृष्टं भवेद्यदा ।
तत्तीर्थच्छिद्रदेशे च स्वाञ्जलिं प्रक्षिपेदतः ॥ १,१२.२० ॥
स्पृष्ट्वा चन्द्रो यदा गच्छेत्तदा तत्तोयमाहरेत् ।
पिबेच्च सहसा धीरो जीवेदाचन्द्रतारकम् ॥ १,१२.२१ ॥
वज्रकायः सौम्यरूपः शान्तात्मा स भवेन्नरः ।
[ट्रिपुरान्तक]
पूर्वद्वारे श्रीगिरेस्तु विद्यते त्रिपुरान्तकः ॥ १,१२.२२ ॥
देवस्य निकटे देशे चोत्तरे तिन्त्रिणीतरुः ।
दृश्यते तत्र मूले तु स्वयं श्रीभैरवः प्रभुः ॥ १,१२.२३ ॥
नृमात्रां निखनेद्भूमिं तदग्रे दृश्यते तदा ।
तप्तकुण्डं नीलजलं दिव्यसिद्धिप्रदायकम् ॥ १,१२.२४ ॥
तत्तिन्त्रिणीकपत्राणि वस्त्रे बद्ध्वा विनिक्षिपेत् ।
कुण्डे तस्मिंस्तदा तानि स्थूलमीना भवन्ति च ॥ १,१२.२५ ॥
गृहीत्वा तिन्त्रिणीकाष्ठैः पचेदेवं क्रमात्सुधीः ।
तेषां शिरःकण्टकानि खानि च विवर्जयेत् ॥ १,१२.२६ ॥
भक्षयेच्छेषमखिलं साधकः सिद्धिकाङ्क्षया ।
क्षणमात्रं भवेन्मूर्च्छा तेन पश्चाद्विबुध्यते ॥ १,१२.२७ ॥
वसुधायां बिलं पश्येज्जीवेद्दिव्यायुताब्दकम् ।
[मणिपल्लि]

पश्चिमे त्रिपुरान्तस्य गव्यूतिद्वयमात्रके ॥ १,१२.२८ ॥
मणिपल्लिरिति ग्रामस्तस्य पश्चिमभागतः ।
विद्यते कश्चन गिरिस्तत्पश्चादेकवाटकम् ॥ १,१२.२९ ॥
दृश्यते प्रविशेत्तत्र पूर्वास्यश्च ततो व्रजेत् ।
दक्षिणाभिमुखः पश्चाद्दशचापान्तमात्रकम् ॥ १,१२.३० ॥
तत्र चाम्रफलाकारान् पाषाणाञ्ज्वलनप्रभान् ।
गृहीत्वा बन्धयेद्वस्त्रे तद्वस्त्रं रक्ततां व्रजेत् ॥ १,१२.३१ ॥
पाषाणयुक्तं तद्वस्त्रं क्षीरमध्ये विनिक्षिपेत् ।
ततः क्षीरं रक्तवर्णं स्यात्पिबेत्साधकोत्तमः ॥ १,१२.३२ ॥
सप्ताहाज्जायते सिद्धिर्वज्रकायो महाबलः ।
जीवेदाचन्द्रतारं च आ कल्पमविल्पकम् ॥ १,१२.३३ ॥
[कोकिलाबिल]
त्रिपुरान्तस्योदग्भागे कोकिलाबिलमुत्तमम् ।
जगत्प्रकाशं तत्रास्ते कृत्वा देहविशोधनम् ॥ १,१२.३४ ॥
साधको वमनाद्यैश्च तद्बिलं प्रविशेत्सुधीः ।
दशचापावधिस्तत्र पाषाणाः कोकिलोपमाः ॥ १,१२.३५ ॥
सन्ति गृहीत्वा तत्पृष्ठे तिलाः क्षिप्ताः स्फुटन्ति च ।
इत्येतत्प्रत्ययं दृष्ट्वा तांश्च घृष्य परस्परम् ॥ १,१२.३६ ॥
दुग्धान्तः प्रक्षिपेत्तांश्च तत्क्षीरं कृष्णतां व्रजेत् ।
तत्क्षीरं मासमात्रं च पिबेद्दिव्यतनुर्भवेत् ॥ १,१२.३७ ॥
ब्रह्मणस्त्रिदिनं जीवेद्वलीपलितवर्जितः ।
वेगे समीरसदृशश्छिद्रं पश्यति भूतले ॥ १,१२.३८ ॥
त्रिपुरान्तस्य पूर्वस्यां दिशि योजनमात्रके ।
अस्ति स्वर्गपुरीनाथो देवस्तस्याग्रतः खनेत् ॥ १,१२.३९ ॥
जानुमात्रं च वसुधां तत्र सर्पफणोपमाः ।
स्पर्शसंज्ञास्तु पाषाणा निर्गच्छन्ति वरानने ॥ १,१२.४० ॥
त्रिपुरान्तकदेवस्य पश्चिमेऽर्धार्धयोजने ।
अस्ति दिव्यबिलद्वारं तत्र चापत्रयान्तरम् ॥ १,१२.४१ ॥
व्रजेत्खर्जूरवृक्षोऽस्ति कृष्णवर्णः फलान्वितः ।
तत्फलानां रसं पीत्वा तेन मूर्च्छा भवेत्क्षणम् ॥ १,१२.४२ ॥
प्रबुद्धोऽसौ भवेत्सिद्धो जीवेदा चन्द्रभास्करम् ।
श्रीगिरेर्दक्षिणद्वारे वज्रेश्वरसुरेश्वरौ ॥ १,१२.४३ ॥
तिष्ठतो निखनेद्भूमिं तत्र श्रीफलसन्निभाः ।
पाषाणाः स्पर्शभेदाः स्युः संग्राह्यास्ते सुरेश्वरि ॥ १,१२.४४ ॥
तत्र रामेश्वराख्योऽस्ति निखनेत्तस्य सन्निधौ ।
रुद्राक्षाकारपाषाणाः स्पर्शभेदा भवन्ति ते ॥ १,१२.४५ ॥
[आवर्तक]
ज्योतिःसिद्धवटस्थाने दक्षिणे चैकपादपः ।
तिष्ठत्यावर्तको नाम तदासन्ने तु पश्चिमे ॥ १,१२.४६ ॥
पर्वतो विद्यते तत्र खनेत्तालफलोपमाः ।
पाषाणास्तान्धमेद्गाढं तत्सर्वं काञ्चनं भवेत् ॥ १,१२.४७ ॥
तस्यैव दक्षिणे द्वारे विद्यते कुण्डलेश्वरः ।
तन्निकृष्टे जानुमात्रं खनेद्भूमिं समुद्धरेत् ॥ १,१२.४८ ॥
रक्ताभाः श्रीफलाकाराः पाषाणाः स्पर्शवेधकाः ।
पुरुषेश्वरदेवस्य समीपे कुण्डमस्ति हि ॥ १,१२.४९ ॥

गुञ्जारिड्ढौ च विद्येते वृक्षौ तत्पत्त्रमश्नीयात् ।
सप्ताहाज्जायते सिद्धो जरामरणवर्जितः ॥ १,१२.५० ॥
[हस्तिशिला]
तत्र हस्तिशिला दक्षे खनेद्धस्तप्रमाणतः ।
तत्र जम्बूफलाकारा ग्राह्यास्ते स्पर्शसंज्ञकाः ॥ १,१२.५१ ॥
ख्याता हस्तिशिरोनाम्ना ख्याता हस्तिशिलेति सा ।
[छायाछत्त्र]
एकयोजनमात्रे तु तस्या दक्षिणभागतः ॥ १,१२.५२ ॥
शिवरूपं शिवप्रोक्तं छायाछत्त्रं तु विद्यते ।
वर्तुलं शतहस्तं तु छिद्रं तस्याप्यधो व्रजेत् ॥ १,१२.५३ ॥
न कैश्चिद्दृश्यते सोऽपि सिद्धो भवति तत्क्षणात् ।
यदृच्छया रुद्रतुल्यः क्रीडत्येव जगत्त्रये ॥ १,१२.५४ ॥
सिद्ध्यष्टकं साधयेद्वा सर्वसिद्धिप्रदायकः ।
कान्ताभ्रसत्वकनकसूताः क्रमगुणोत्तराः ॥ १,१२.५५ ॥
अम्लेन मर्दयेद्गाढं गोलं कृत्वा तु वेष्टयेत् ।
तद्गोलं दीर्घवंशाग्रे बद्ध्वा श्रीकालिकामनुम् ॥ १,१२.५६ ॥
जपेन्निवेशयेत्तत्र छायाछत्त्रेण तेन च ।
वंशाग्रबद्धगोलान्तर्जायते घुटिका शुभा ॥ १,१२.५७ ॥
वक्त्रान्तर्धारयेत्तां तु तत्क्षणात्खेचरो भवेत् ।
शिलां तालं वस्त्रबद्धं कृत्वा वंशाग्रवेष्टितम् ॥ १,१२.५८ ॥
छायाछत्त्रे निवस्यैतत्ताभ्यां नेत्रे समञ्जयेत् ।
निधिं पश्यति भूमिस्थं नात्र कार्या विचारणा ॥ १,१२.५९ ॥
वंशाग्रबद्धखड्गं च छायाछत्त्रे विनिक्षिपेत् ।
मन्त्रयेत्कालिकामन्त्रं तं खड्गं धारयेत्करे ॥ १,१२.६० ॥
त्रैलोक्यविजयी धीरो भवेद्वीरो जगत्त्रये ।
वंशाग्रे रोचनं बद्ध्वा छायाछत्त्रे निवेशयेत् ॥ १,१२.६१ ॥
ललाटे तिलकं तेन कृत्वा लोकं वशं नयेत् ।
स्रोतोञ्जनाञ्जने तद्वच्छायाच्छत्रे निवेशयेत् ॥ १,१२.६२ ॥
तेनाञ्जनेनाञ्जितोऽसौ देवैरपि न दृश्यते ।
पादुके पूर्ववद्बद्ध्वा छायाच्छत्रे निधापयेत् ॥ १,१२.६३ ॥
पादाभ्यां पादुके धृत्वा यत्र यत्राभिवाञ्छति ।
प्रयातुं तत्र तत्रैव नयतस्तं च पादुके ॥ १,१२.६४ ॥
पूर्ववद्रक्तवस्त्रं च छायाच्छत्रे निवेशयेत् ।
आवेष्टयेत्तं च पटमदृश्यो भवति क्षणात् ॥ १,१२.६५ ॥
समुज्झिते पटे पश्चाद्दृश्यतेऽसौ न संशयः ।
कान्तं व्योम हेम सूतमेकीकृत्य विमर्दयेत् ॥ १,१२.६६ ॥
गोलीभूतं तु वस्त्रेण वंशाग्रे बन्धयेत्सुधीः ।
छायाच्छत्रे स्थापयेत्तत्कालीमन्त्रेण मन्त्रयेत् ॥ १,१२.६७ ॥
स्पर्शवेधी भवेदेतत्सत्यं सत्यं वरानने ।
श्रीशैलपश्चिमद्वारे देवो ब्रह्मेश्वरः स्थितः ॥ १,१२.६८ ॥
दुर्गा देवी च तत्रस्था सोपानं नवमं च यत् ।
तुङ्गभद्रायां च नद्यां ततो ब्रह्मेश्वरस्य च ॥ १,१२.६९ ॥
द्वारदेशे मुद्गवर्णा चत्वारः स्पर्शका अमी ।
चिञ्चावनं च नैरृत्ये स्थितं ब्रह्मेश्वरस्य हि ॥ १,१२.७० ॥
कुण्डं च विद्यते तत्र चिञ्चाधश्चण्डिका स्थिता ।

एकपादेन सततं तच्चिञ्चाफलमाहरेत् ॥ १,१२.७१ ॥
वस्त्रेण बन्धयेत्कुण्डे क्षिप्त्वा स्नानं समाचरेत् ।
स्नानान्ते तानि गृह्णीयात्तावन्मत्स्या भवन्ति हि ॥ १,१२.७२ ॥
तदिन्धनैः पचेत्ताश्च ह्यस्थिपुच्छशिरस्त्यजेत् ।
दद्याद्देवायैकमंशमतिथीनां द्वितीयकम् ॥ १,१२.७३ ॥
तृतीयांशं स्वयं भक्षेन्मूर्छितो भवति क्षणात् ।
दिव्यो भवति सिद्धोऽयं बिलं पश्यति भूतले ॥ १,१२.७४ ॥
जरामरणनिर्मुक्तो ह्यबध्यो निर्जरैरपि ।
अलम्पुरोत्तरे ग्रामो विद्यते भीमपादुकः ॥ १,१२.७५ ॥
पार्श्वे तु तस्य ग्रामस्य हस्तमात्रं धरां खनेत् ।
पाषाणा हि फणाकाराः स्पर्शसंज्ञा भवन्ति ते ॥ १,१२.७६ ॥
योगीश्वरीति देव्यस्ति तत्रालंपुरदेवता ।
तस्याग्रतो रम्यगुहा तस्या मध्ये खनेद्ध्रुवम् ॥ १,१२.७७ ॥
पाषाणा भेदसंकाशा ग्राह्या मार्जालविष्ठया ।
संमिश्र्य निक्षिपेद्वङ्गे द्रुते तत्तारतां व्रजेत् ॥ १,१२.७८ ॥
मध्वाज्याभ्यां पिबेत्तांश्च पाषाणान्साधकोत्तमः ।
दिव्यो भवति सिद्धोऽयं वलीपलितमृत्युजित् ॥ १,१२.७९ ॥
श्रीपर्वतोत्तरद्वारे देवो नाम्ना महेश्वरः ।
तिष्ठति भ्रमराम्रश्च तत्र तत्फलमाहरेत् ॥ १,१२.८० ॥
स्फोटयेच्च तदन्तस्था निर्यान्ति भ्रमरास्तथा ।
सजीवा अथ तान्सर्वान्भ्रमरांस्तान्विवर्जयेत् ॥ १,१२.८१ ॥
तत्फलानि पचेत्क्षारे यावच्छक्यं पयः पिबेत् ।
क्षणं मूर्च्छा भवेत्तेन मूर्च्छान्ते च पयः पिबेत् ॥ १,१२.८२ ॥
एवं कुर्यात्प्रयत्नेन चैकविंशतिवासरम् ।
तेन वज्रशरीरः स्याद्वलीपलितवर्जितः ॥ १,१२.८३ ॥
वेदवेदाङ्गतत्त्वज्ञो जीवेदादित्यतारकम् ।
तरसा वायुना तुल्यस्तत्क्षणाद्भवति प्रिये ॥ १,१२.८४ ॥
तदाम्रस्य फलेनैव त्यक्तभ्रमरकेन च ।
वङ्गस्य पलसाहस्रं द्रावितं रजतं भवेत् ॥ १,१२.८५ ॥
रन्ध्रमापादयेदाम्रफले भृङ्गं विवर्जयेत् ।
तन्मध्ये निक्षिपेत्सूतं कर्षं कृष्णाभ्रसत्वकम् ॥ १,१२.८६ ॥
निरुध्य वक्त्रं समृदा गोमयेन च लेपयेत् ।
छायायां शोषयेत्काष्ठैस्तदीयैः प्रहरं पचेत् ॥ १,१२.८७ ॥
स्वभावशीतलं कृत्वा वक्त्रस्थां कारयेत्सुधीः ।
खेचरत्वमवाप्नोति वलीपलितवर्जितः ॥ १,१२.८८ ॥
जीवेच्चन्द्रार्कपर्यन्तं वाग्मित्वं ब्रह्मणा समम् ।
सूतं कृष्णाभ्रसत्वं चाम्रफले पूर्ववत्क्षिपेत् ॥ १,१२.८९ ॥
प्रलिप्य गोशकृन्मृद्भ्यां पुटेदारण्यकोपलैः ।
स्वशीतं पारदं ग्राह्यं मधुसर्पिर्भिर्युतं लिहेत् ॥ १,१२.९० ॥
गुञ्जामात्रं च मासान्तं बालो भवति मानवः ।
नवनागोपमः सत्वे जीवेद्ब्रह्मैकवासरम् ॥ १,१२.९१ ॥
उत्तरे श्रीगिरीशस्य विद्यते शुक्लपर्वते ।
पञ्चोपचारैः सम्पूज्य त्रिषु लोकेषु विश्रुतः ॥ १,१२.९२ ॥
ओं हुं फट्कारमन्त्रेण निर्विकल्पेन साधकः ।
पश्येत्पश्चिमदिग्भागमन्तरिक्षे विमानकम् ॥ १,१२.९३ ॥

दिव्यं ह्यनेकरुचिरं सद्यः प्रत्ययकारकम् ।
ततः पश्चिमदिग्भागे व्रजेत्तीर्त्वा महानदीम् ॥ १,१२.९४ ॥
दृश्यते च गुहा तत्र प्रविशेत्पश्चिमाननः ।
त्रियोजनं व्रजेत्तत्र विभीरेकोऽविकल्पकः ॥ १,१२.९५ ॥
कदलीकाननं तत्र दृश्यते पञ्चयोजनम् ।
अच्छोदपूर्णा सरसी तन्मध्ये भद्रपीठकम् ॥ १,१२.९६ ॥
तत्पीठं तु महद्दिव्यं पश्येत्स्फटिकसन्निभम् ।
उच्चारयेन्मन्त्रमिमं दण्डवत्प्रणतिं भजेत् ॥ १,१२.९७ ॥
ओं ह्रीं विद्यावागीश्वराधिपतये ह्रीमों स्वाहा ।
तत्र स्नात्वा जपेन्मन्त्रं लक्षमेकं वरानने ।
कन्दमूलाशनो वा यथेष्टं साधकः प्रिये ॥ १,१२.९८ ॥
सिंहासनान्तरे देवं पश्येत्स्फटिकसन्निभम् ।
चतुर्भुजं त्रिणेत्रं च विशदेन्दुकलाधरम् ॥ १,१२.९९ ॥
नीलग्रीवं नागभूषं परश्वथमृगायुधम् ।
वराभयं वरेण्यं तं विशिष्टविबुधार्चितम् ॥ १,१२.१०० ॥
नमस्कुर्याच्च साष्टाङ्गं मन्त्रैः स्तोत्रैर्मुहुर्मुहुः ।
ततः प्रसन्नः स शिवो वरं दत्ते यथेप्सितम् ॥ १,१२.१०१ ॥
शतमायतनं तत्र कूपं नवशतं यथा ।
आरामाश्चापि तावन्ति नन्दनानि वनानि च ॥ १,१२.१०२ ॥
वाप्यो नवशतं सन्ति विवरं चैव तत्समम् ।
कल्पवृक्षाश्च तावन्ति एते सर्वेऽपि सिद्धिदाः ॥ १,१२.१०३ ॥
तत्रास्ते मोहली नाम्ना प्रथिता यक्षिणीष्टदा ।
ब्रूते सा देहि मे भुक्तिं सिद्धिं त्वं यदि वाञ्छसि ॥ १,१२.१०४ ॥
देवि दास्याम्यहं भुक्तिं वक्तव्यमिह चामुना ।
कन्दमूलं फलं तस्यै पायसं वा समर्पयेत् ॥ १,१२.१०५ ॥
सा यक्षिणी पुनर्वक्ति यावद्भुञ्जे सुतं मम ।
धारयेर्वक्षसा तावद्वरं दास्यामि ते महत् ॥ १,१२.१०६ ॥
विसृजेस्त्वं यदि तदा भवन्तं हन्मि निर्दया ।
एवं गतभयश्चीरः कुर्याच्चेत्सिद्धिभाग्भवेत् ॥ १,१२.१०७ ॥
व्रजेदुदीचीदिग्भागे तत्सरो योजनार्धके ।
तत्रास्ते चन्दनं दिव्यं पुष्पपूर्णं महेश्वरि ॥ १,१२.१०८ ॥
तत्पुष्पाघ्राणमात्रेण क्षुत्पिपासा न बाधते ।
भक्षयेदथवा तस्य फलमेकं यथोचितम् ॥ १,१२.१०९ ॥
वज्रकायो भवेत्तस्य भक्षणादेव मानवः ।
सरोदक्षिणदिग्भागे गच्छेद्योजनपादकम् ॥ १,१२.११० ॥
नन्दनं दृश्यते तत्र दाडिमीवृक्षसंकुलम् ।
तत्फलं भक्षयेद्यस्तु जीवेद्युगसहस्रकम् ॥ १,१२.१११ ॥
तस्यैव सरसः पूर्वभागे क्रोशार्धमात्रकम् ।
गच्छेद्धात्रीफलैर्युक्तं विद्यते नन्दनं वनम् ॥ १,१२.११२ ॥
अश्नीयात्तत्फलं धीरो जीवेत्संवर्तकत्रयम् ।
सरसस्तस्य भागे च पश्चिमे योजनं व्रजेत् ॥ १,१२.११३ ॥
तत्र श्रीफलसम्पूर्णं नन्दनं विद्यते वनम् ।
अद्यते तत्फलं येन जीवत्याचन्द्रतारकम् ॥ १,१२.११४ ॥
तत्रैव नन्दनवने लिङ्गं स्यान्नीलवर्णकम् ।
तस्योदग्द्वारमार्गेण विशेन्नागो महाबलः ॥ १,१२.११५ ॥

तत्र सप्तफणोपेतस्तूग्रभीतिकरो महान् ।
एवंविधं महानागं हुंहुंकारं वदन्मुहुः ॥ १,१२.११६ ॥
नमस्कुर्यात्प्रयत्नेन साधकः सिद्धिकाङ्क्षया ।
वदत्येवं महानागस्त्वदृश्यत्वं ददामि ते ॥ १,१२.११७ ॥
याहि स्वं पश्चिमद्वारं दिव्या कन्यास्ति तत्र वै ।
समुच्चरन्महामन्त्रं व्रजेत्तत्रैव साधकः ॥ १,१२.११८ ॥
ददाति हारं सा कन्या प्रवेशं न ददाति च ।
हारं गले धारयेत्तं तेन सारस्वतं भवेत् ॥ १,१२.११९ ॥
तस्माद्दक्षिणदिग्द्वारे व्रजेद्भीतिकरं परम् ।
तत्र पश्येन्मुक्तकेशं जिह्मनेत्रं दिगम्बरम् ॥ १,१२.१२० ॥
गदाहस्तं नीलवर्णं दृष्ट्वा श्रीक्षेत्रपालकम् ।
वन्देत मन्त्रमुच्चार्य स्तोत्रैर्विघ्ननिवारणम् ॥ १,१२.१२१ ॥
हाहाहेहेहुंहुंकारं फठुं स्वाहान्तमेव च ।
क्षेत्रपालोऽप्यनेनैव मन्त्रेणाशु प्रसीदति ॥ १,१२.१२२ ॥
स्वागत्वं वितरत्येष प्रवेशं न ददाति हि ।
अथ व्रजेत्पूर्वदिशो द्वारं तत्र गणाधिपम् ॥ १,१२.१२३ ॥
स्थितं प्रपूजयेत्तत्र प्रविशेत्साधकोत्तमः ।
दृश्यते दिव्यलिङ्गं च चापस्तत्र मनोहरः ॥ १,१२.१२४ ॥
ओं हुङ्कारेण मन्त्रेण पूजयेच्च तमीश्वरम् ।
उपवासेन तत्रैव दिवारात्रं जपेत्सुधीः ॥ १,१२.१२५ ॥
प्रत्यक्षो भवतीशानो ददाति हि वरं परम् ।
इत्येवमादयः सन्ति सिद्धयः कदलीवने ॥ १,१२.१२६ ॥
तत्रैव सरसः पूर्वभागे योजनमात्रके ।
अक्षरैर्लिखितं द्वारि तत्र पद्मावतीबिलम् ॥ १,१२.१२७ ॥
वमनाद्यैर्विशुद्धात्मा प्रविशेत्तत्र साधकः ।
तत्र चापान्तरशतं गच्छेत्तत्र मृदङ्गकम् ॥ १,१२.१२८ ॥
आलोक्य वादयेत्तं च तद्ध्वनिश्रवणात्तदा ।
पद्मावती स्वयं याति ह्यमृतं च ददाति च ॥ १,१२.१२९ ॥
तस्य पानेन सिद्धोऽयममरत्वं लभेत च ।
ततः सैनं समागम्य प्रार्थयेत्त्वं ममान्तिकम् ॥ १,१२.१३० ॥
समागच्छालये दिव्ये कन्यापञ्चशताकुले ।
स्थित्वा मम पतिर्भूया ब्रह्मायुष्यावधि प्रभो ॥ १,१२.१३१ ॥
तदन्ते शाश्वतं स्थानं गमिष्यसि न संशयः ।
तस्य पूर्वतटाकस्य चाग्नेय्यां दिशि विद्यते ॥ १,१२.१३२ ॥
कदम्बेश्वरदेवोऽपि वृक्षः कादम्बकोऽग्रतः ।
तत्र पत्राणि चादाय कटुतैलेन लेपयेत् ॥ १,१२.१३३ ॥
तद्बीजसंभवैस्तैलैर्लिम्पेद्वाथ पचेत्सुधीः ।
तत्काष्ठैस्तानि मत्स्याः स्युस्ताम्रपात्रे विनिक्षिपेत् ॥ १,१२.१३४ ॥
वर्ज्यमस्थि शिरः पुच्छं क्षौद्रसर्पिर्युतं भजेत् ।
तत्सेवया भवेत्सिद्धो रुद्रतुल्यो महाबलः ॥ १,१२.१३५ ॥
तद्वृक्षश्च नदीतीरे कुण्डलेशस्य सन्निधौ ।
विद्यते पूर्ववद्युक्त्या सिद्धिर्भवति नान्यथा ॥ १,१२.१३६ ॥
अस्त्युत्तरे पुष्पगिरिः कपोतेशश्च विद्यते ।
त्रिः प्रदक्षिणमातन्यात्तस्य मूर्धानमाव्रजेत् ॥ १,१२.१३७ ॥
खेचरत्वं भवेत्तस्य साधकस्य न संशयः ।

तस्य पूर्वोत्तरे भागे छेदिकीद्वारकं स्थितम् ॥ १,१२.१३८ ॥
उदङ्मुखं विशेत्तत्र त्रिचापान्तरमादरात् ।
मूषिकाकारपाषाणं तक्रे पिष्ट्वा पिबेन्नरः ॥ १,१२.१३९ ॥
क्षिप्रं मूर्च्छा भवेत्तस्य जीवेद्ब्रह्मदिनत्रयम् ।
वेधयेत्सर्वलोहानि स्पर्शमात्रान्न संशयः ॥ १,१२.१४० ॥
उपोष्य च दिवा नक्तं देवाग्रे सिद्धिमाप्नुयात् ।
विद्यते देवतायुग्मं कपोतेश्वरदक्षिणे ॥ १,१२.१४१ ॥
आ नाभिमात्रं निखनेद्देवताद्वयमध्यतः ।
गोरोचनोपमास्तत्र पाषाणाः सन्ति तान्हरेत् ॥ १,१२.१४२ ॥
पिष्ट्वा क्षौद्रघृताभ्यां च पिबेद्यः सोऽमरो भवेत् ।
कपोतेशस्य वायव्ये निखनेद्धस्तमात्रकम् ॥ १,१२.१४३ ॥
तत्र पारावताकारपाषाणाः स्पर्शसंज्ञकाः ।
देवताराधनं कृत्वा तेषामेकं समाहरेत् ॥ १,१२.१४४ ॥
ऐशान्यां श्रीगिरीशस्य ह्यस्त्येव भृगुपातनम् ।
तत्समीपे दिव्यकुण्डं मृदं तस्मात्समाहरेत् ॥ १,१२.१४५ ॥
गव्यपञ्चकयुक्तां तां धमेत्खदिरवह्निना ।
तस्माल्लोहं पतेन्नीलं मध्वाज्याभ्यां प्रतापितम् ॥ १,१२.१४६ ॥
तत्सेचयेत्सप्तधौते तद्गोलं निक्षिपेन्मुखे ।
विष्णुतुल्यो भवेत्सिद्धः सर्वज्ञः सर्वगः सुखी ॥ १,१२.१४७ ॥
भृगुपातनशैलाग्रात्क्रोशे दधिकवाटकम् ।
अच्छतैलगिरिर्नाम्ना तदग्रे विद्यते सदा ॥ १,१२.१४८ ॥
बिलं तत्पश्चिमे ह्यस्ति तन्मध्ये चापपञ्चके ।
गते पश्येत्तत्र कुण्डं तत्र लाक्षासमं रसम् ॥ १,१२.१४९ ॥
अलाबुपात्रे गृह्णीयात्स सूतः कोटिवेधकः ।
प्राकारश्चन्द्रगुप्तस्य श्रीगिरीशस्य पश्चिमे ॥ १,१२.१५० ॥
तन्मध्ये विद्यते वेश्म चैत्यं तत्पूर्वतः स्थितम् ।
चैत्यात्पूर्वे शिला दिव्या मुद्गाभा स्पर्शसंज्ञका ॥ १,१२.१५१ ॥
तत्रास्ते मोहनो दन्ती तमारुह्य समाहितः ।
पृष्ठात्तस्य तृणं ग्राह्यं तत्सर्वं काञ्चनं भवेत् ॥ १,१२.१५२ ॥
तद्गजस्योत्तरे पार्श्वे जानुदघ्नां खनेद्धराम् ।
जम्बूफलाभाः पाषाणाः स्पर्शसंज्ञा भवन्ति ते ॥ १,१२.१५३ ॥
क्षितिं खनेद्गजस्याधो जानुमात्रं लभेत्ततः ।
लक्षवेधकरा सिद्धा त्रिकोणे घुटिका परा ॥ १,१२.१५४ ॥
मल्लिनाथस्य वायव्ये नत्वा देवह्रदः परः ।
तीर्थं तत्रास्ति पाषाणा मुद्गाभाः स्पर्शसंज्ञः ॥ १,१२.१५५ ॥
लिङ्गं कूर्मोपमं तत्र स्पर्शसंज्ञं शुभं प्रिये ।
पूर्णिमायां कृत्तिकायां पूजयित्वा समाहरेत् ॥ १,१२.१५६ ॥
तस्माद्गव्यूतियुगलात्स्मृता नीलवनी परा ।
तस्या लिङ्गं च सलिलं नीलवर्णं प्रशस्यते ॥ १,१२.१५७ ॥
अश्वाम्रकाकसङ्काशाः पाषाणाः स्पर्शवेधकाः ।
देवालयान्तर्निखनेज्जानुमात्रान्तराद्धराम् ॥ १,१२.१५८ ॥
मूषिकाकारपाषाणाः स्पर्शसंज्ञा भवन्ति ते ।
श्रीगिरीशस्य नैरृत्यां ख्याता गुण्डीप्रभाख्यया ॥ १,१२.१५९ ॥
तस्याग्रगर्ते पीताभां मृत्तिकां च पुटे दहेत् ।
तस्यान्निःसरति स्वर्णं शुद्धदेवार्हकं परम् ॥ १,१२.१६० ॥

तत्रास्ते भृङ्गचूतोऽपि पूर्ववत्सिद्धिदायकः ।
तथा तम्बीपुरे चास्ति तीर्थे च विपुले शुभम् ॥ १,१२.१६१ ॥
सदाफलं तु विख्यातं तस्याः पूर्वोत्तरे सुधीः ।
श्रीगिरेर्नैरृते भागे महानन्देति विश्रुतः ॥ १,१२.१६२ ॥
व्रजेद्घण्टापथेनैव तस्य पूर्वोत्तरे सुधीः ।
तत्रास्ते कालकण्ठेशो नाम्नाग्रे तस्य कुण्डकम् ॥ १,१२.१६३ ॥
तत्रेन्द्रगोपसङ्काशं सिद्धिः सूतस्य विद्यते ।
भवन्ति सप्त लोहानि स्वर्णं तप्तानि सेकतः ॥ १,१२.१६४ ॥
ऐशान्ये श्रीगिरीशस्य चास्ति श्रीमालिनीश्वरः ।
तस्योत्तरदिशि ख्यातस्तूमापर्वतसंज्ञकः ॥ १,१२.१६५ ॥
तस्याग्रे च त्रिशूलाभाः सन्ति दर्भाः शुभङ्कराः ।
तदधो निखनेन्नाभिमात्रं नीलां मृदं हरेत् ॥ १,१२.१६६ ॥
अक्षकाष्ठैः पचेत्तां च देवातिथ्यग्नये क्रमात् ।
एकैकभागं कल्पेत चतुर्थांशं स्वयं भजेत् ॥ १,१२.१६७ ॥
जीवेत्कल्पायुतं सिद्धो महाबलपराक्रमः ।
इलेश्वरस्य निकटे तत्र कोटीश्वरः स्थितः ॥ १,१२.१६८ ॥
पुष्पं पत्रं तदग्रेऽस्ति स्पर्शवेधकरं भवेत् ।
तत्राचलेश्वरो देवः स्पर्शवेधकरः परः ॥ १,१२.१६९ ॥
तस्य योजनमात्रे च दक्षिणे चामरेश्वरः ।
ततः स्वर्णशिला चास्ति तदूर्ध्वं नरमांसकम् ॥ १,१२.१७० ॥
गोमांसं वा क्षिपेत्काष्ठैर्बादरैर्ज्वालयेत्सुधीः ।
प्रातः काञ्चनसङ्काशा दृश्यते सा शिला तदा ॥ १,१२.१७१ ॥
प्रत्यग्रपुष्पवत्याश्च रजसा भाविताांशुकम् ।
लोडयेत्तच्छिलायां च क्षिपेदल्पाम्बुपात्रके ॥ १,१२.१७२ ॥
तस्य संस्पर्शमात्रेण लेहः स्यात्काञ्चनं परम् ।
श्रीगुरौ यत्र तत्रापि पिण्डभूमिस्थितोपलाः ॥ १,१२.१७३ ॥
कर्षमात्रं तु तच्चूर्णं भक्षयेत्त्रिफला समम् ।
वलीपलितजिन्मासाज्जीवेदाचन्द्रतारकम् ॥ १,१२.१७४ ॥
श्रीगिरीन्द्रस्य नैरृत्यां पटाहकर्ण ईश्वरः ।
तस्य पूर्वोत्तरे भागे पञ्चविंशतिचापके ॥ १,१२.१७५ ॥
द्विहस्तमात्रोर्ध्वशिला खनेत्तत्र द्विहस्तकम् ।
शरावसंपुटाकारान् दृषदस्तान्समाहरेत् ॥ १,१२.१७६ ॥
कुर्वीत तानग्निवर्णान् सिञ्च्यात्कूष्माण्डजैर्द्रवैः ।
तन्मध्यान्नवनीतं तु दद्याद्देवाय भागकम् ॥ १,१२.१७७ ॥
भागैकमतिथेर्देयं भागमेकं स्वयं लिहेत् ।
दिवा नक्तं भवेन्मूर्च्छा विनिद्रो भवति स्वयम् ॥ १,१२.१७८ ॥
वलीपलितसंवर्ज्यो जीवेद्वर्षायुतं नरः ।
स्पर्शकान्तस्य सोपानं द्वितीयं भवति प्रिये ॥ १,१२.१७९ ॥
तद्देवपार्श्वयोः सर्वे पाषाणाः श्वेतपीतकाः ।
स्पर्शाः सर्वा भवन्त्येते तेषु चैकं समाहरेत् ॥ १,१२.१८० ॥
प्राच्यां हि तस्य देवस्य समीपे कूपमस्ति च ।
मण्डूकाभाश्च पाषाणाः सन्ति च स्पर्शसंज्ञकाः ॥ १,१२.१८१ ॥
तस्येश्वरस्य चोदीच्यां लिङ्गाद्रिर्विद्यते महान् ।
तदुत्तरस्यां दिश्यस्ति तटिनी पूर्ववाहिनी ॥ १,१२.१८२ ॥
तटिन्याः पश्चिमाशायां पिङ्गाभं लिङ्गमस्ति हि ।

पूर्णशैलोदकं कुण्डं तत्र स्यात्क्षणवेधकम् ॥ १,१२.१८३ ॥
द्वियोजने महेशस्य दक्षिणे चण्डिका स्थिता ।
पिण्डिकाख्या सुविख्याता तस्या वायव्यकोणतः ॥ १,१२.१८४ ॥
अन्धुरस्ति हि तन्मध्ये मुद्गवर्णास्तथोपलाः ।
केचित्पथ्यानिभाः सन्ति ते सर्वे स्पर्शसंज्ञकाः ॥ १,१२.१८५ ॥
अत्रत्यानां च सर्वेषां स्पर्शानां विधिरुच्यते ।
यदि स्थूलं पेषयेत्तं श्लक्ष्णं मूषान्तरेण हि ॥ १,१२.१८६ ॥
कुर्यात्सर्वाणि लोहानि तस्यामावर्तयेत्प्रिये ।
तत्सर्वं जायते स्वर्णं कुर्यादेवं यथेष्टकम् ॥ १,१२.१८७ ॥
सूक्ष्मश्चेत्सर्वलोहानां द्रुतानामन्तरे क्षिपेत् ।
तत्स्पर्शात्सर्वलोहानि काञ्चनत्वं प्रयान्ति हि ॥ १,१२.१८८ ॥
वायव्यां मल्लिनाथस्य तीर्थे सर्वेश्वराख्यकम् ।
तस्य दक्षिणदिग्भागे राजमार्गे द्वियोजने ॥ १,१२.१८९ ॥
गते डोंगलिका तत्र दृश्यते तस्य मूर्धनि ।
कृष्णधात्रीफलान्येव सन्ति तानि च भक्षयेत् ॥ १,१२.१९० ॥
सप्तवासरपर्यन्तमा तृप्तिं वज्रविग्रहः ।
जरामरणनिर्मुक्तो जीवेत्कल्पशतत्रयम् ॥ १,१२.१९१ ॥
तस्माच्च दक्षिणे भागे काकलारीमहावने ।
तत्रास्ते स्तम्बकदली प्रविशेत्तत्र साधकः ॥ १,१२.१९२ ॥
क्रोशार्धमात्रं गच्छेच्च रसकुण्डं च दृश्यते ।
अलाबुपात्रे संस्थाप्य कोटिवेधी भवेत्तु सः ॥ १,१२.१९३ ॥
शिलामयो नीलवर्णः शिखण्डी तत्र दृश्यते ।
तन्मुखाग्रेऽस्ति कुण्डं वितस्तिमात्रातिनीलकम् ॥ १,१२.१९४ ॥
शुष्कवंशं च तन्मध्ये क्षणं क्षिप्तं नवं भवेत् ।
पत्रं पुष्पं दिनैकेन भवत्येव न संशयः ॥ १,१२.१९५ ॥
तत्र प्रस्थं रसं क्षिप्त्वा तावन्मात्रं जलं हरेत् ।
मधुतुल्यं पिबेत्तं च मूर्च्छा भवति तत्क्षणात् ॥ १,१२.१९६ ॥
क्षणेन लब्धज्ञानः स्याज्जीवेद्युगसहस्रकम् ।
श्रीगिरेर्वह्निदिग्भागे घटिकासिद्धखेचरः ॥ १,१२.१९७ ॥
अस्ति तस्य पुरो भूमौ पञ्चहस्तं खनेत्सुधीः ।
बदराकारपाषाणा विद्यन्ते खगतिप्रदाः ॥ १,१२.१९८ ॥
एकं वक्त्रे सदा धार्यं सिद्धैः खेगतिलिप्सुभिः ।
[सिद्धिक्रमः]
श्रीशैले सर्वसिद्धीनामुक्तानां विधिरुच्यते ॥ १,१२.१९९ ॥
मन्त्रन्यासं पुरा कृत्वा पश्चाल्लक्षं जपेन्मनुम् ।
अघोरान्तेन वै शीघ्रं तत्तत्सिद्धिमवाप्नुयात् ॥ १,१२.२०० ॥
[अथ न्यासः]
ओं ह्रीं महापर्वतवासिन्यै हृदयाय नमः ।
ओं ह्रीं ज्येष्ठायै शिरसे स्वाहा ।
ओं ह्रीं रौद्र्यै शिखायै वषट् ।
ओं ह्रीं कनककुण्डलिन्यै कवचाय हुम् ।
ओं ह्रीं संजीविन्यै नेत्रेभ्यो वौषट् ।
ओं ह्रीं मालिन्यै अस्त्राय फट् ।
ओं हुं शिवाय नमः पादयोर्न्यसेत् ।
ओं वं वामदेवाय नमः जङ्घयोः ।

ओं पं पद्मिन्यै नमः गुह्ये ।
ओं कां कन्याकुमार्यै नमः नाभौ ।
ओं ग्लौं नमः कुक्षौ ।
ओं द्रां ह्रीं दुर्गायै नमः उरसि ।
ओं हुं विन्ध्यवासिन्यै नमः कण्ठमूले ।
ओं लं नमः ग्रीवायाम् ।
ओं ह्रीं श्रीमष्टभुजायै नमः भुजयोः ।
ओं हुं सर्वतोमुखिन्यै नमः मुखे ।
ओं प्रकाशिकायै नमः नेत्रयोः ।
ओं महिषमर्दिन्यै नमः कर्णयोः ।
ओं ह्रां सर्वाङ्गसुन्दर्यै नमः मूर्ध्नि न्यसेत् ।
एवमङ्गरक्षां कृत्वा क्षेत्रं पूजयेत् ।
ओं ह्रीं श्रीं नमो भगवति सर्वेश्वरि देवि नमो मण्डलवासिनि क्रां क्रीं क्रूं हन हन पच पच मथ मथ शीघ्रमावेशय शीघ्रमावेशय एह्येहि भुवनवन्दिते स्वाहा ।
अनेन मन्त्रेण देवतामावाहयेत् ।
ओं ह्रां ह्रीं ह्रूं त्रिभुवनेश्वर्यै नमः सांनिध्यं कुरु कुरु स्वाहा ।
अनेन मन्त्रेण तत्क्षेत्रदेवतां पूजयेत् ।
ओं कृष्णवर्णिनि अपरामुख्यै नमः पूर्वस्मिन् ।
ओं सुधावर्षिण्यै नमः आग्नेये ।
ओं पर्वताकृष्णवर्णिनीरौद्रमुख्यै नमः दक्षिणे ।
ओं बालार्कवर्णिनीमहालक्ष्म्यै नमः नैरृत्ये ।
ओं खं रक्तपर्वतवर्णिनी ।
महामहिषासुरमर्दिन्यै नमः पश्चिमे ।
ओं मां सर्ववर्णिनीहुङ्कारवाग्देव्यै नमः वायव्ये ।
ओं सिह्मवाहिन्यै नमः उत्तरे ।
ओं शिवाशिवाशिवात्रिशूलहस्तायै नमः ऐशान्ये ।
ओं ह्रां ह्रीं क्लीं मनोन्मन्यै नमः आकाशे ।
ओं ह्रां ह्रीं महामोहिन्यै नमः पाताले ।
ओं ह्रां ह्रीं ह्रूं ह्रैं ह्रों ह्रौं ह्रः महाविद्ये जम्भय जम्भय मोहय मोहय दर्शय दर्शय मूर्छय मूर्छय क्लीं मथ मथ आकर्षयाकर्षय हुं फट्स्वाहा ।
मध्ये च पूजयेत् ।
एवं न्यासं रक्षां पूजां कृत्वा तत्कर्मणि लक्षमेकमघोरं जपेत् ।
ततः सिद्धिमवाप्नोति ।
मन्त्रं यथा ।
ओं ह्रां ह्रीं ह्रमघोरतर प्रस्फुर प्रस्फुर प्रकट प्रकट कह कह शम शम जात जात दह दह पातय पातय ओं ह्रैं ह्रां ह्रमधोरास्त्राय फट् ।
अमुं मन्त्रं लक्षं जपेत् ।
ततः स्वप्ने प्रत्यक्षीभूय देवता वरं ददाति ॥ १,१२.२०१ ॥

आक्, १, १३
[गन्धकः]
श्रीभैरवी ।
प्रणम्य शिरसा शम्भुमस्तौषीत्परमेश्वरी ।
श्रुतं तव प्रसादेन दिव्यं सर्वरसायनम् ॥ १,१३.१ ॥
उत्पत्तिं गन्धकस्यापि जातिं संशोधनं तथा ।
सेवां रसायनफलं क्रमाद्ब्रूहि महेश्वर ॥ १,१३.२ ॥

श्रीभैरवः ।
देवि शृणु प्रवक्ष्यामि गन्धकस्य रसायनम् ।
श्वेतद्वीपे पुरा देवि लताकल्पद्रुमोज्ज्वले ॥ १,१३.३ ॥
नानामणिगणाकीर्णे नानापुष्पफलाकुले ।
सिद्धविद्याधरस्त्रीभिः किन्नर्यप्सरसां गणैः ॥ १,१३.४ ॥
अनेकनिर्जरस्त्रीभिः क्रीडन्ती त्वं मदोल्लसा ।
वेणुवीणाविनोदेन वाद्यनादैर्मनोहरैः ॥ १,१३.५ ॥
तालैर्झल्लरिकाढक्कानिनादैः करतालकैः ।
अत्यानन्देन देवेशि नृत्यन्ती त्वं सुरार्चिते ॥ १,१३.६ ॥
तदा ऋतुमती जाता सुस्राव च रजो महत् ।
सुगन्धिना तद्रजसा त्वद्वस्त्रं रक्ततां ययौ ॥ १,१३.७ ॥
विहाय तद्रक्तवस्त्रं स्नात्वा क्षीरमहोदधौ ।
अनेकामरकान्ताभिर्वृता कैलासमाव्रजः ॥ १,१३.८ ॥
वायुना तद्रजोवस्त्रं क्षिप्तं क्षीरमहोदधौ ।
मग्नं तत्रैव तद्वस्त्रं चिरकालं सुरेश्वरि ॥ १,१३.९ ॥
मथ्यमानान्महाम्भोधेरमृतेन सहोद्भवम् ।
श्लाघ्येन निजगन्धेन मोदयन्नसुरान्सुरान् ॥ १,१३.१० ॥
तेनैव नाम्ना ऊचुस्ते शक्राद्याः सुरपुङ्गवाः ।
गन्धकोऽयं भवत्वस्य नाम्ना जातं तु मत्प्रिये ॥ १,१३.११ ॥
चतुर्विधं शोणितं ते दिव्यं बलकरं परम् ।
समर्थोऽयं गन्धकस्तु रसबन्धे च जारणे ॥ १,१३.१२ ॥
रसेन्द्रे ये गुणाः सन्ति ते गुणाः सन्ति गन्धके ।
इत्यूचुरिन्द्रप्रमुखा हृष्टा गन्धकगन्धतः ॥ १,१३.१३ ॥
तदा प्रभृति लोकेऽस्मिन्ख्यातोऽयं गन्धकः प्रिये ।
जपाकुसुमसङ्काशः क्षत्रियश्चोत्तमः प्रिये ॥ १,१३.१४ ॥
पीतो वैश्यो मध्यमः स्याच्छ्वेतो विप्रोऽधमः स्मृतः ।
कृष्णवर्णो भवेच्छूद्रः प्रिये स्यादधमाधमः ॥ १,१३.१५ ॥
रक्तवर्णं लोहवेधि पीतवर्णं रसायनम् ।
श्वेतवर्णं च भैषज्ये कृष्णं कुष्ठादिलेपने ॥ १,१३.१६ ॥
[गन्धकशुद्धिः]
अथ वक्ष्ये गन्धकस्य शोधनं सिद्धिदायकम् ।
तिलपर्ण्यजमोदाश्च ब्राह्मी भृङ्गी च धुत्तुरः ॥ १,१३.१७ ॥
एतेषां च रसैर्भाव्यं चूर्णितं गन्धकं दिनम् ।
कान्तपात्रे विनिक्षिप्य समांशाज्येन पाचयेत् ॥ १,१३.१८ ॥
मृद्वग्निना तु तत्पक्त्वा हयजाक्षीरे विनिक्षिपेत् ।
गोक्षीराज्यैः किंचिदूनं स्थाल्या वक्त्रं तु बन्धयेत् ॥ १,१३.१९ ॥
स्वच्छांशुकेन बद्धस्य चूर्णं तदुपरि क्षिपेत् ।
तदूर्ध्वं श्रावकं रुद्ध्वा तत्स्थाप्यं गर्तकान्तरे ॥ १,१३.२० ॥
वनोत्पलैर्मृदुपुटं दत्त्वा द्रवति गन्धकम् ।
पुनश्च तिलपर्ण्याद्यैर्भावयेच्छोषयेत्त्रिधा ॥ १,१३.२१ ॥
द्रावयेत्तत्समादाय मत्स्यपित्तेन सप्तधा ।
भावयेज्जालिनीबीजचूर्णैस्तत्परिपेषयेत् ॥ १,१३.२२ ॥
ततो भृङ्गद्रवैर्भाव्यं सप्तकृत्वस्तपे खरे ।
जलैः प्रक्षाल्य तत्सम्यक्शोषयेत्तत्पुनः पचेत् ॥ १,१३.२३ ॥
मृद्वग्निना कान्तपात्रे घृताक्ते तु क्षणं ततः ।

भृङ्गराजद्रवे क्षिप्त्वा शुद्धं तद्गन्धकं भवेत् ॥ १,१३.२४ ॥
रसे रसायने योगे योज्यं सुखकरं भवेत् ।
[गन्धकरसायनम्]
पूर्वोक्तवद्देहशुद्धिं कुर्याद्वान्तिविरेचनैः ॥ १,१३.२५ ॥
सुमुहूर्ते सुनक्षत्रे पूजयित्वा परं शिवम् ।
गणाधिपं क्षेत्रपालं श्रीगुरुं भिषजं क्रमात् ॥ १,१३.२६ ॥
निष्कैकं त्रिफलाचूर्णं निष्कमेकं च गुग्गुलुम् ।
गुञ्जोन्मेयं शुद्धगन्धं लिहेदेरण्डतैलतः ॥ १,१३.२७ ॥
गुञ्जावृद्धिक्रमेणैव सेव्यं तत्प्रतिवासरम् ।
दिनषोडशपर्यन्तं गुञ्जाषोडशमात्रकम् ॥ १,१३.२८ ॥
तदा षोडशघस्रान्ते सेव्यं तत्प्रतिवासरम् ।
गुञ्जाषोडशिकोन्मेयमपूर्वं त्रिफलां परम् ॥ १,१३.२९ ॥
एतस्मादधिका वृद्धिर्न कार्या सिद्धिलिप्सुना ।
एवं मासप्रयोगेण कुष्ठमष्टादशं हरेत् ॥ १,१३.३० ॥
तथा प्रमेहान् गुल्मानि कासश्वासक्षयज्वरान् ।
व्रणान्भगन्दरादींश्चाशीतिवातोद्भवान्गदान् ॥ १,१३.३१ ॥
मासद्वयप्रयोगेण बहुकान्तिं प्रयच्छति ।
सर्वव्याधिप्रशमनं भवेन्मासत्रयात्प्रिये ॥ १,१३.३२ ॥
ततः षण्मासयोगेन वृद्धो यौवनमाप्नुयात् ।
एवमब्दप्रयोगेण सिद्धो भवति शाम्भवि ॥ १,१३.३३ ॥
तन्मूत्रमलयोगेन ताम्रं काञ्चनतां व्रजेत् ।
विधिं च प्रतिषेधं च कुर्यात्पूर्वोक्तवत्सुधीः ॥ १,१३.३४ ॥
रसादि पुण्यममलं यः सेवेत रसायनम् ।
स एव कृतकृत्यः स्याद्दैवतैरपि पूज्यते ॥ १,१३.३५ ॥
सर्वतीर्थेषु संस्नातः सर्वव्रतफलान्वितः ।
अश्वमेधादियज्ञानां सर्वेषां फलमाप्नुयात् ॥ १,१३.३६ ॥
धन्यः पुण्यतमः श्रेष्ठः श्लाघनीयो मनीषिभिः ।
स योगविज्ञः सर्वज्ञः सर्वानुग्राहकः प्रभुः ॥ १,१३.३७ ॥
शुद्धः सर्वगतः शान्तः शूरः सत्वगुणोज्ज्वलः ।
तस्य देहलयो नास्ति ह्यदृश्यः शिवतां व्रजेत् ॥ १,१३.३८ ॥

आक्, १, १४
[विषम्; विषोत्पत्तिः]
श्रीभैरवी ।
श्रुतं सर्वं मया देव दिव्यं सर्वरसायनम् ।
विषोत्पत्तिं च जातिं च सेवां वद च तत्फलम् ॥ १,१४.१ ॥
श्रीभैरवः ।
क्षीरोदधौ मथ्यमाने मन्थनीकृतमन्दरैः ।
सिद्धकिन्नरगुह्येन्द्रपिशाचोरगराक्षसैः ॥ १,१४.२ ॥
ब्रह्माद्यैरखिलैर्देवैरेकतो दनुजाधिपैः ।
दैत्यैरन्यत्र विपुलैर्महाबलपराक्रमैः ॥ १,१४.३ ॥
ततो जातानि रत्नानि कौस्तुभादीनि कामगौः ।
कल्पवृक्षो महालक्ष्मीरैरावतमहागजः ॥ १,१४.४ ॥
उच्चैःश्रवास्तथा चेन्दुर्धन्वन्तरिभिषग्वरः ।

अमृतं च लता दिव्या दिव्यसिद्धिप्रदायकाः ॥ १,१४.५ ॥
मन्दरभ्रमणश्रान्तनागराजमुखात्ततः ।
विषज्वाला समुत्पन्ना तीव्रा लोकभयंकरी ॥ १,१४.६ ॥
ममज्ज क्षीरजलधावत्यन्तमथनात्पुनः ।
कालकूटं महाक्ष्वेडं कल्पान्तयमसन्निभम् ॥ १,१४.७ ॥
संवर्ताग्निप्रतीकाशं वीक्ष्य भीताः सुरास्तदा ।
ममान्तिकं समाजग्मुः स्तुवन्तो दीनमानसाः ॥ १,१४.८ ॥
स्वामिन्सर्वोत्तम त्राहि शरणागतपालक ।
इत्यादि बहुधा स्तोत्रं कुर्वाणास्ते सुरासुराः ॥ १,१४.९ ॥
अहं स्मितमुखं कृत्वा कालकूटं तदापिबम् ।
तत्र तत्रावशिष्टं तद्बहुधा समभूद्भुवि ॥ १,१४.१० ॥
क्वचिन्मूलस्वरूपेण क्वापि त्वग्रूपतः प्रिये ।
कुत्रापि पर्णरूपेण तोयरूपेण कुत्रचित् ॥ १,१४.११ ॥
एवं बहुविधं जातं तत्र तत्र विषं गतम् ।
तेषां श्रेष्ठं कन्दविषमष्टादशविषं प्रिये ॥ १,१४.१२ ॥
[पोइसोन्:: १० किन्द्स्]
क्रमाद्भेदं प्रवक्ष्यामि कालकूटं च दर्दुरम् ।
हालाहलं मेषशृङ्गं मोहदं ग्रन्थि कर्कटम् ॥ १,१४.१३ ॥
रक्तशृङ्गि हरिद्रं च केसरं दशमं स्मृतम् ।
एते दशविधाः क्ष्वेडा न प्रयोज्या रसायने ॥ १,१४.१४ ॥
[पोइसोन्:: ८ किन्द्स्]
श्वेतशृङ्गी वत्सनाभं सर्षपं शृङ्गि वालुकम् ।
मुस्तकं सक्तुकं देवि चाष्टमं कर्दमं भवेत् ॥ १,१४.१५ ॥
रसायने योजनीयास्त्वष्टौ भेदाः प्रकीर्तिताः ।
कालकूटं काकचञ्चुप्रभं दर्दुरसन्निभम् ॥ १,१४.१६ ॥
दर्दुरं नीलवर्णं च हालाहलविषं समम् ।
मेषशृङ्गी तु मेषस्य शृङ्गाभं मोहदं पुनः ॥ १,१४.१७ ॥
रक्तनीलप्रभं देवि ग्रन्थिकं ग्रन्थिसंयुतम् ।
कर्कटं कपिलाभं च रक्तशृङ्गि महाविषम् ॥ १,१४.१८ ॥
कृष्णपिङ्गं च रक्ताभं हरिद्राभं हरिद्रकम् ।
केसरं पद्मकिञ्जल्कप्रभं दशविधं त्विति ॥ १,१४.१९ ॥
श्वेतशृङ्गीभदन्ताभं वत्सनाभं च पाण्डुरम् ।
सर्षपाकृतिभिर्युक्तं बिन्दुभिः सर्षपं भवेत् ॥ १,१४.२० ॥
शृङ्गी शृङ्गाकृतिर्ज्ञेयो वालुकं वालुकाकृति ।
मुस्ताकृतिर्मुस्तकं स्याच्छ्वेतवर्णं तु सक्तुकम् ॥ १,१४.२१ ॥
मधूच्छिष्टाकृतिर्देवि कर्दमं विषमुत्तमम् ।
विषखण्डेषु भग्नेषु दृश्यन्ते येषु बिन्दवः ॥ १,१४.२२ ॥
श्वेतरक्तपीतवर्णाः कृष्णा विप्रादयः क्रमात् ।
श्वेता रसायने रक्ता वश्ये पारदकर्मणि ॥ १,१४.२३ ॥
क्षुद्रकर्मणि पीताः स्युः कृष्णवर्णास्तु मारणे ।
विषं युक्त्यामृतं देवि तदयुक्त्या विषं भवेत् ॥ १,१४.२४ ॥
तस्माद्युक्त्या विषं सेव्यमयुक्त्या न कदाचन ।
रसाभ्रहेमकान्तानां वीर्येण सदृशं विषम् ॥ १,१४.२५ ॥
[विषशुद्धिः]
रक्तसर्षपतैलेन लिप्ते वस्त्रे च बन्धयेत् ।

त्रिदिनान्ते समुद्धृत्य टङ्कणेन समं विषम् ॥ १,१४.२६ ॥
मर्दयेच्छलक्ष्णचूर्णं तत्कारयेच्च विशुध्यति ।
रोगे रसायने योज्यं सिद्धिदं स्याद्वरानने ॥ १,१४.२७ ॥
[विषरसायनम्]
शुद्धदेहो विरेकाद्यैः पथ्याशी विषभुग्भवेत् ।
क्रमेण सेवनीयं तत्सर्षपं राजसर्षपम् ॥ १,१४.२८ ॥
मुद्गव्रीहियवा माषा गुञ्जामात्रं परावधिः ।
शर्करासहितं सेव्यं क्ष्वेलं तदमृतं भवेत् ॥ १,१४.२९ ॥
कट्वम्ललवणास्त्याज्या व्यायामोष्णातपादयः ।
तैलसर्षपखाद्याश्च वर्ज्या विषरसायने ॥ १,१४.३० ॥
गव्यं क्षीरं घृतं तक्रं स्निग्धं दधि च शर्करा ।
सेव्या स्वादुरसद्रव्या नोचेद्विकृतिकारणम् ॥ १,१४.३१ ॥
[विषोपद्रवास्तच्चिकित्सा च]
मात्रया सेवितं क्ष्वेलममृतं भवति प्रिये ।
अतिमात्रं यदि भवेदमृतं च विषायते ॥ १,१४.३२ ॥
प्रमादादतिमात्रं चेत्तदा वेगा भवन्ति च ।
कष्टं प्रथमवेगे स्याद्वेपथुश्च द्वितीयके ॥ १,१४.३३ ॥
तृतीये च तृषा दाहश्चतुर्थे गतिभञ्जनम् ।
फेनिलास्यः पञ्चमे स्यात्षष्ठे कन्धरभञ्जनम् ॥ १,१४.३४ ॥
सप्तमे च निरुत्थानं मरणं चाष्टमे भवेत् ।
तस्माच्छीघ्रं प्रतीकारः करणीयो वरानने ॥ १,१४.३५ ॥
किंचिन्मात्राधिकं क्ष्वेलं नानारोगान्करोति तत् ।
भ्रान्तिविस्मृतिशूलानि वान्त्यतीसारकं परम् ॥ १,१४.३६ ॥
स्वरसादं गद्गदत्वं दाहं दृष्टिभ्रमं तथा ।
कर्णरुक्श्वासकासादीनन्यान् वातोद्भवान् गदान् ॥ १,१४.३७ ॥
यदातिमात्रं चिह्नानि दृश्यन्ते वपुषि प्रिये ।
तदा तु टङ्कणं निष्कमाज्यं चापि चतुर्गुणम् ॥ १,१४.३८ ॥
पेयं तत्परिहारार्थं जलैर्वा तण्डुलीयकम् ।
मज्जां वा पुत्रजीवस्य फलान्निष्कं जलान्वितम् ॥ १,१४.३९ ॥
तुत्थं पणद्वयोन्मेयं नृमूत्रैर्वा हरिद्रकम् ।
वचां वा देवदालीं वा सर्पाक्षीं वाथ सार्बुणीम् ॥ १,१४.४० ॥
पटोलीं गिरिपर्णीं नृमूत्रैर्विषजित्पृथक् ।
लां यां वां हां चतुर्वर्णैर्गारुडं संपुटीकृतम् ॥ १,१४.४१ ॥
स्तम्भस्तोभननिर्वाहनिर्विषीकरणं तथा ।
लां प्रों लामनेन मन्त्रेण स्तम्भनम् ।
शीतजलघटमभिमन्त्र्य विषातुरस्य मस्तके जलं ढालयेत् ।
विषं नाक्रामति ।
यां प्रों यामनेन स्तोभनमन्त्रेण विषातुरस्य शिखिनमन्धयेत् ।
वां प्रों वामनेन निर्वाहमन्त्रेणार्कदण्डं वा धुत्तूरकाष्ठदण्डं वाभिमन्त्र्य विषातुरस्य सर्वाङ्गं स्पृष्ट्वा विषं निर्वाहयेत् ।
हां प्रों हामनेन निर्विषीकरणमन्त्रेण निर्विषीकरणार्थं विषातुरस्य सर्वाङ्गं दण्डेनापामार्जयेत्स्वस्थो भवति ।
जीर्णं क्ष्वेलं शरीरे चेत्पित्तान्तं वमनं प्रिये ॥ १,१४.४२ ॥
आमान्तं रेचनं कार्यं तण्डुलीयकमूलभुक् ।
सेवेत मांसं सघृतं विषदोषहरं भवेत् ॥ १,१४.४३ ॥
पूर्वोक्तमात्रासेवी यो महाव्याधेर्विमुच्यते ।
देवि षण्मासयोगेन जरापलितखण्डनम् ॥ १,१४.४४ ॥

संवत्सरोपयोगेन जीवेच्चन्द्रार्कतारकम् ।
हिमशीतवसन्तेषु योज्यं विषरसायनम् ॥ १,१४.४५ ॥
ग्रीष्मवर्षशरत्स्वेतन्न प्रयोज्यं कदाचन ।
वातस्थविरगर्भिण्यः क्षुत्तृड्घर्माध्वपीडिताः ॥ १,१४.४६ ॥
नपुंसका गदक्षीणाः पित्तक्रोधाधिकास्तथा ।
यक्ष्मिणो नैव योग्याः स्युः सदा विषरसायने ॥ १,१४.४७ ॥

आक्, १, १५
[दिव्यौषधिरसायनानि]
श्रीभैरवी ।
मलमायाविहीनेश जराजन्मगदापह ।
त्वत्प्रसादेन विदितं रसादीनां रसायनम् ॥ १,१५.१ ॥
इतःपरमपि स्वामिन् शुश्रूषे किमपि प्रभो ।
सुखोपायोपयोग्यं च दिव्यौषधिरसायनम् ॥ १,१५.२ ॥
ब्रूहि मे तद्विधं दिव्यं सर्वसिद्धिप्रदायकम् ।
श्रीभैरवः ।
[१. ब्रह्मकल्पः; ब्रह्मवृक्षतैलकल्पः]
वक्ष्यामि ब्रह्मवृक्षादि दिव्यौषधिरसायनम् ॥ १,१५.३ ॥
तत्रादौ ब्रह्मवृक्षस्य शृणु देवि रसायनम् ।
ब्रह्मवृक्षस्य बीजानि विदध्यान्निस्तुषाणि च ॥ १,१५.४ ॥
परिशोष्यातपे तीव्रे सूक्ष्मचूर्णानि कारयेत् ।
धात्रीफलेन सप्ताहं भावयेत्पयसाथवा ॥ १,१५.५ ॥
चक्रयन्त्रे क्षिपेत्तानि ततस्तत्तैलमाहरेत् ।
इत्थमुत्थापितं तैलं दोषघ्नं च रसायनम् ॥ १,१५.६ ॥
ब्रह्मबीजजतैलस्य प्रस्थमाज्यं च तत्समम् ।
निक्षिप्तं स्निग्धभाण्डे च धान्यराशौ विनिक्षिपेत् ॥ १,१५.७ ॥
मासार्धमासं देवेशि तस्मात्तैलं समाहरेत् ।
शुद्धदेहो विरेकाद्यैरर्चिताग्निगुरुद्विजः ॥ १,१५.८ ॥
द्विपलं च गवां क्षीरं तत्तैलं निष्कमात्रकम् ।
संमिश्र्य च पिबेत्प्रातः पथ्याशी स्याज्जितेन्द्रियः ॥ १,१५.९ ॥
एवं द्वितीयेऽपि दिने ह्येकाहान्तरिते क्रमात् ।
निष्कवृद्धिर्भवेदेवं यावत्षोडशनिष्ककम् ॥ १,१५.१० ॥
एतत्तैलस्य परमा मात्रा ह्यस्यैवमीरिता ।
पीतमात्रे क्षणं मूर्च्छा जायते सिञ्चयेन्मुखम् ॥ १,१५.११ ॥
प्रबुद्धे सघृतं दद्याद्दुग्धान्नं शर्करान्वितम् ।
एवं तैलोपयोगेन मासाज्ज्ञानी भवेन्नरः ॥ १,१५.१२ ॥
सकृद्ग्राही सुकान्तश्च षोडशाब्द इव स्थितः ।
द्वितीये नागबलवान् सर्वव्याधिविवर्जितः ॥ १,१५.१३ ॥
इन्द्रोपमबलो धीरश्चतुर्थे मासि च क्रमात् ।
वज्रदेहो दिव्यदृष्टिः पञ्चमे खेचरो भवेत् ॥ १,१५.१४ ॥
अणिमादिगुणोपेतः सर्वगः सर्वकालिकः ।
षष्ठे मासि स्वयं स्रष्टा भोक्ता हर्ता त्रिमूर्तिवत् ॥ १,१५.१५ ॥
वर्षैकसेवनाद्देवि भवेत्साक्षात्सदाशिवः ।
यावत्तैलोपजीवी स्यात्तावत्क्षीरौदनाशनः ॥ १,१५.१६ ॥

वमनादिविशुद्धाङ्गः कृत्वा वैद्यद्विजार्चनम् ।
प्रातर्गोक्षीरकुडुबं तैलं किंशुकबीजजम् ॥ १,१५.१७ ॥
कुडुबं पूर्ववज्जातमेकीकृत्य द्वयं पिबेत् ।
तत्पानमात्रे मूर्छा स्यात्कुर्यात्तं भस्मशायिनम् ॥ १,१५.१८ ॥
सप्तरात्रे प्रबुद्धः स्याद्बद्धवच्छयने स्थितः ।
नाङ्गानि चालयेदेष जायते विचलेक्षणः ॥ १,१५.१९ ॥
तैले जीर्णे समापन्ने संज्ञा भवति भैरवि ।
गोक्षीरं तस्य दातव्यं प्रत्यहं दशवासरम् ॥ १,१५.२० ॥
स त्वचं च त्यजेद्देहात्कञ्चुकं भुजगो यथा ।
क्षीराहारी भवेन्नित्यमेकविंशतिवासरम् ॥ १,१५.२१ ॥
वाचां पतिर्भवेद्धीरः श्रुतं धारयते क्षणात् ।
दूरश्रावी दिव्यदृष्टिर्जीवेद्ब्रह्मदिनं सुधीः ॥ १,१५.२२ ॥
[ब्रह्मवृक्षपल्लवकल्पः]
पुण्यर्क्षे ब्रह्मवृक्षस्य पल्लवानि समाहरेत् ।
क्रिमिकीटविहीनानि कोमलानि शुभानि च ॥ १,१५.२३ ॥
आतपे शोषयेत्तीव्रे चूर्णितं वस्त्रगालितम् ।
कुर्यान्नूतनभाण्डे च निक्षिपेच्च प्रयत्नतः ॥ १,१५.२४ ॥
वमनाद्यैर्विशुद्धाङ्गो ब्रह्मचारी जितेन्द्रियः ।
क्षाराम्लवर्जिताहारः क्षीरशाल्यन्नभोजनः ॥ १,१५.२५ ॥
कोष्णं जलं पिबेन्नित्यं निवाते शयनं भजेत् ।
कर्षमात्रं च सेवेत मासं गोतक्रसंयुतम् ॥ १,१५.२६ ॥
द्वितीये च तृतीये च वृद्धिः कर्षाधिका क्रमात् ।
एवं षोडशमासान्तं सतक्रं कुडुबं पिबेत् ॥ १,१५.२७ ॥
एवं नित्योपसेवी यः कुञ्चितस्निग्धकुन्तलः ।
मत्तमातङ्गबलवान् जीवेद्ब्रह्मदिनं नरः ॥ १,१५.२८ ॥
[ब्रह्मवृक्षपुष्पकल्पः]
ब्रह्मवृक्षस्य पुष्पाणि छायायां शोषयेत्सुधीः ।
चूर्णयेद्गालयेद्वस्त्रे नवभाण्डे विनिक्षिपेत् ॥ १,१५.२९ ॥
विंशत्पलं पुष्पचूर्णं चतुर्विंशतिगोघृतम् ।
पलमेकत्र संमिश्रं धान्यराशौ निवेशयेत् ॥ १,१५.३० ॥
तदुद्धरेच्च मासान्ते कृत्वा भागांश्चतुर्दश ।
एकैकं प्रत्येकं सेव्यमेवं मासत्रयं भवेत् ॥ १,१५.३१ ॥
भुञ्जीत शुल्बपात्रे च लवणाम्लादिवर्जितम् ।
पायसाशी कषायं तृषार्तः खादिरं पिबेत् ॥ १,१५.३२ ॥
त्रिमासाज्जायते गात्रं वज्रवन्नात्र संशयः ।
नागायुतबलो धीरो वायुवेगगतिर्भवेत् ॥ १,१५.३३ ॥
अस्य वर्षोपयोगेन पुरीषमपि मूत्रकम् ।
वेधयेत्सर्वलोहानि काञ्चनानि च कारयेत् ॥ १,१५.३४ ॥
जीवेद्ब्रह्मदिनं साक्षाद्दैवतैः सह मोदते ।
[ब्रह्मवृक्षबीजकल्पः]
ब्रह्मवृक्षस्य बीजानि चूर्णयेन्निक्षिपेद्घटे ॥ १,१५.३५ ॥
मध्वाज्यशर्करायुक्तं धान्यराशौ विनिक्षिपेत् ।
मासादूर्ध्वं समाहृत्य प्रत्यहं कर्षमात्रकम् ॥ १,१५.३६ ॥
उपयुञ्जीत शुद्धात्मा गोक्षीरं च पिबेदनु ।
यावत्पलं भवेद्वृद्धिस्तावदेवाधिकं न हि ॥ १,१५.३७ ॥

एवं संवत्सरात्सिद्धिर्जायते मृत्युवर्जिता ।
जीवेद्ब्रह्मदिनं शुद्धो मतङ्गजबलोपमः ॥ १,१५.३८ ॥
[ब्रह्मवृक्षवल्कलकल्पः]
सूक्ष्मचूर्णं प्रकुर्वीत ब्रह्मवृक्षस्य वल्कलम् ।
भावयेद्गव्यपयसा पलं चानुदिनं पिबेत् ॥ १,१५.३९ ॥
जितेन्द्रियश्च पथ्याशी भवेदा वत्सरं सुधीः ।
दशवर्षसहस्राणि जीवेत्सिद्धो भवेद्ध्रुवम् ॥ १,१५.४० ॥
[ब्रह्मवृक्षनिर्यासकल्पः]
ब्राह्मी च मधुकं साज्यं निर्यासं ब्रह्मवृक्षजम् ।
समभागानि सेवेत पलं चानुपिबेत्पयः ॥ १,१५.४१ ॥
एवमेकाब्दयोगेन शुभंयुदर्शनः शुचिः ।
जीवेद्ब्रह्मदिनं ज्ञानी वलीपलितवर्जितः ॥ १,१५.४२ ॥
[ब्रह्मवृक्षपञ्चाङ्गकल्पः]
पञ्चाङ्गं ब्रह्मवृक्षस्य विधिवत्तत्समाहरेत् ।
छायाशुष्कं प्रकुर्वीत चूर्णितं पटशोधितम् ॥ १,१५.४३ ॥
कर्षमात्रं लिहेच्छुद्धः क्षौद्राज्याभ्यां दिनोदये ।
वलीपलितनिर्मुक्तो वत्सराज्जायते नरः ॥ १,१५.४४ ॥
[ब्रह्मवृक्षमूलगुप्तधात्रीकल्पः]
अतिस्थूलतरं दीर्घं भेदयेद्ब्रह्मभूरुहम् ।
मूले त्रिहस्तशेषं च तदग्रे गर्तमारचेत् ॥ १,१५.४५ ॥
धात्रीफलानि पक्वानि तत्र सम्पूरयेत्प्रिये ।
तच्छिन्नकाष्ठशेषेण तद्गर्तं च निरोधयेत् ॥ १,१५.४६ ॥
कुशैः संवेष्टयेत्सम्यगा मूलाग्रं च लेपयेत् ।
मृद्गोमयाभ्यां मतिमांस्ततो वस्त्रेण वेष्टयेत् ॥ १,१५.४७ ॥
पुनर्मृद्गोमयाभ्यां च लेपयेच्छोषयेत्सुधीः ।
सम्यक्शुष्के च परितः करीषैः परिपूरयेत् ॥ १,१५.४८ ॥
दहेत्तं शीतलीभूते सान्द्रं तत्फलमाहरेत् ।
भाण्डे क्षौद्राज्यभरिते क्षिपेद्धात्रीफलं च तत् ॥ १,१५.४९ ॥
भूगृहे वा निवाते वा प्रदेशे च वसन्सुखी ।
यथेष्टं भक्षयेन्नित्यं क्षीराहारी जितेन्द्रियः ॥ १,१५.५० ॥
षण्मासात्पश्यति छिद्रं निधानानि च भूतले ।
त्यजेत्त्वचं सर्प इव जीवेद्ब्रह्मयुगं नरः ॥ १,१५.५१ ॥
[२. श्वेतब्रह्मवृक्षकल्पः; श्वेतब्रह्मवृक्षपञ्चाङ्गकल्पः]
चूर्णयेच्छ्वेतपालाशपञ्चाङ्गं शोषयेत्प्रिये ।
छायायां वस्त्रगलितं मधुना च लिहेत्प्रिये ॥ १,१५.५२ ॥
कर्षमात्रं त्रिमासान्तर्जरामृत्युं जयेन्नरः ।
संवत्सराच्च ब्रह्मायुः सिद्धः सर्वगतो भवेत् ॥ १,१५.५३ ॥
[श्वेतब्रह्मबीजकल्पः]
श्वेतपालाशबीजानि चैकैकानि समाहरेत् ।
अजाघृतेनानुदिनं मासान्मृत्युं जरां जयेत् ॥ १,१५.५४ ॥
संवत्सराद्ब्रह्मयुगं जीवेत्सिद्धिपुरोगमः ।
ये प्रोक्ता रक्तपालाशतैलत्वक्पर्णकादिषु ॥ १,१५.५५ ॥
ते गुणाः श्वेतपालाशे सन्ति साधकसिद्धिदाः ।
[ब्रह्मवृक्षकल्पसिद्धिः]
वक्ष्यामि ब्रह्मवृक्षस्य कल्पसिद्धिं मनुम् ॥ १,१५.५६ ॥

ओं ह्रीममृतं कुरु कुरु अमृतमालिन्यै नमः ।
पूर्वं विंशतिसाहस्रं पुरश्चरणमाचरेत् ।
सुधाकुम्भवराक्षस्रग्ज्ञानमुद्रां करांबुजैः ॥ १,१५.५७ ॥
बिभ्राणां मौक्तिकं पाशं ध्यायेदमृतमालिनीम् ।
ग्रहणेऽष्टोत्तरशतं भक्षयेत्सप्तवारकम् ॥ १,१५.५८ ॥
चन्द्रसूर्योपरागादिकालेष्वष्टसहस्रकम् ।
मन्त्रं विना न सिद्धिः स्यात्कल्पकोटिशतैरपि ॥ १,१५.५९ ॥
समन्त्रे शीघ्रसिद्धिः स्याच्चरेन्मन्त्रपुरःसरः ।
[३. मुण्डीकल्पः]
अथ मुण्डीं प्रवक्ष्यामि साधकेष्टार्थदायिनीम् ॥ १,१५.६० ॥
चतुर्विधा भवेत्च रक्ता पीता सितासिता ।
पुष्यार्के पूर्णमास्यां वा रेवत्यां श्रवणेऽपि वा ॥ १,१५.६१ ॥
उपरागादिकाले वा सिद्धयोगेषु वा हरेत् ।
कैदारीं मुण्डिनीं तां च बलिपूजनपूर्वकम् ॥ १,१५.६२ ॥
समाहरेत्कृतस्नानो मौनी मन्त्रं समुच्चरन् ।
ओममृतोद्भवाय अमृतं कुरु कुरु स्वाहा ह्रीं सः ।
मन्त्रं द्वादशसाहस्रं पुरश्चर्यां समाचरेत् ॥ १,१५.६३ ॥
मूलं नालं फलं पुष्पं पत्रं पञ्चाङ्गमीरितम् ।
स पञ्चाङ्गं हरेन्मुण्डीं सम्यक्शीतेन वारिणा ॥ १,१५.६४ ॥
प्रक्षाल्य शोषयेत्तां च छायायां चूर्णयेत्ततः ।
वस्त्रेण शोधयेत्कुम्भे नूतने स्थापयेत्क्रमात् ॥ १,१५.६५ ॥
विशुद्धदेहस्तच्चूर्णं कर्षं गोपयसा सह ।
पिबेज्जीर्णे च भैषज्ये घृतमादौ पिबेन्नरः ॥ १,१५.६६ ॥
ततो भुञ्जीत लवणतैलाम्लादिविवर्जितम् ।
घृतपक्वं समधुरं षष्टिकान्नं पयोऽधिकम् ॥ १,१५.६७ ॥
षण्मासाज्जायते सिद्धिस्त्वचं सर्प इव त्यजेत् ।
पलितादिविनिर्मुक्तो दिव्यदृष्टिर्दृढं वपुः ॥ १,१५.६८ ॥
मत्तनागबलो धीरो युवा दर्पविग्रहः ।
संवत्सरात्सर्वसिद्धिर्भवेद्ब्रह्मायुषो नरः ॥ १,१५.६९ ॥
घृतोपयुक्ता सा मुण्डी पूर्वफलदा भवेत् ।
[४. देवदालीकल्पः]
अथ वक्ष्याम्यहं देवि देवदालीरसायनम् ॥ १,१५.७० ॥
श्वेता कृष्णा च पीता च देवदाली त्रिधा मता ।
श्वेता रोगप्रशमनी कृष्णा पीता विशेषतः ॥ १,१५.७१ ॥
रसायने च फलदा लोहकर्मणि पार्वति ।
चन्द्रसूर्योपरागेषु पूर्णिमायां सुरार्चिते ॥ १,१५.७२ ॥
त्रयोदश्यां कृष्णपक्षे पञ्चम्यां वा यथाविधि ।
शुभाहे शुभनक्षत्रे चाहरेन्मन्त्रपूर्वकम् ॥ १,१५.७३ ॥
ओममृतगणरुद्रगणान्ताय स्वाहा ।
अष्टोत्तरशतं जप्त्वा बलिपूर्वं समाहरेत् ।
ओं नमो भगवते रुद्राय फट्स्वाहा ।
साधकस्य शिखाबन्धनमन्त्रः ।
देवदाल्याश्च पञ्चाङ्गं छायायां शोषयेत्सुधीः ॥ १,१५.७४ ॥
वस्त्रेण शोधयेत्सम्यग्गव्यक्षीरेण भक्षयेत् ।
पचेत्तां लौहपात्रेण ततो मन्दाग्निना सुधीः ॥ १,१५.७५ ॥

मध्वाज्याभ्यां लिहेत्कर्षं शुद्धात्मा सप्तवासरम् ।
तस्य दिव्या भवेत्प्रज्ञा रोगहृन्मासंसेवया ॥ १,१५.७६ ॥
द्विमासभक्षणेनैव निध्यादिं पश्यति ध्रुवम् ।
धात्रीफलरसं क्षौद्रं देवदालीरसं घृतम् ॥ १,१५.७७ ॥
प्रत्येकं कर्षमात्रं स्यात्प्रत्यहं च पिबेल्लघु ।
एकविंशद्दिनादूर्ध्वं मेधावी श्रुतधारकः ॥ १,१५.७८ ॥
पञ्चाङ्गं चूर्णयेद्देवदाल्या वस्त्रेण शोधयेत् ।
शिवाम्बुना वा पयसा गोमूत्रैर्वा पिबेत्सदा ॥ १,१५.७९ ॥
पूर्ववत्सिद्धिदा सा स्यात्सर्वकुष्ठापहारिणी ।
कामिलाप्लीहपवनशूलं हन्ति भगन्दरान् ॥ १,१५.८० ॥
तद्रसो गन्धकोपेतः सर्वलोहं विलापयेत् ।
बध्नाति च रसं सम्यक्समं मूर्छति तत्क्षणात् ॥ १,१५.८१ ॥
गन्धर्वलज्जागान्धारीदेवदालीरसस्तथा ।
लेपनं मेषतैलेन स्तम्भयेदग्निमुज्ज्वलम् ॥ १,१५.८२ ॥
बीजानि देवदाल्याश्च सगुडानि च मर्दयेत् ।
तेन वर्तिं प्रकुर्वीत अर्शोघ्नी स्याद्गुदाङ्कुरे ॥ १,१५.८३ ॥
रसेन देवदाल्याश्च नयनं त्वञ्जयेन्नरः ।
पश्यत्यसौ भूतजालं तस्मै सर्वं प्रयच्छति ॥ १,१५.८४ ॥
घृतं धात्रीफलरसं देवदालीरसं मधु ।
रसं च लक्ष्मणायाश्च सर्वमेकपलं पिबेत् ॥ १,१५.८५ ॥
त्रिदिनमृतुकाले तु स्त्रीणां पुत्रप्रदायकम् ।
देवदालीरसं क्षीरं मध्वाज्याभ्यां समं लिहेत् ॥ १,१५.८६ ॥
पुंसः कोमलबीजानां बीजं गर्भप्रदं भवेत् ।
भृङ्गराड्वाकुची वह्निः सर्पाक्षी देवदालिकम् ॥ १,१५.८७ ॥
शिवाम्बुना चानुदिनं पिबेत्कर्षं महेश्वरि ।
धरित्र्याः पश्यति छिद्रं वर्षान्मृत्युं जरां जयेत् ॥ १,१५.८८ ॥
पुनर्नवादेवदाल्योः पलं क्षीरयुतं पिबेत् ।
शिवाम्बुना देवदालीं ससर्पाक्षीपलं पिबेत् ॥ १,१५.८९ ॥
पूर्ववज्जायते सिद्धिः शीघ्रमेव वरानने ।
शिवांबुना देवदाल्या निर्गुण्ड्याश्च पलं पिबेत् ॥ १,१५.९० ॥
संवत्सराज्जरां हन्याज्जीवेदाचन्द्रतारकम् ।
ओममृतं कुरु कुरु अमृतेश्वराय स्वाहा ।
एतन्मन्त्रं जपेदादौ देवदाल्युपयोगके ॥ १,१५.९१ ॥
[५. श्वेतार्ककल्पः; श्वेतार्कमूलकल्पः]
अथ श्वेतार्कमूलस्य कल्पं वक्ष्याम्यहं शृणु ।
श्वेतार्कमूलं पुष्यर्क्षे गृहीत्वा काष्ठवर्जितम् ॥ १,१५.९२ ॥
शुद्धां त्वचं च छायायां शोषयेत्पटशोधितम् ।
चूर्णं कृत्वा कर्षमेकं सेव्यं गोपयसा सह ॥ १,१५.९३ ॥
पलद्वयेन षण्मासात्सर्वव्याधीञ्जरां हरेत् ।
संवत्सराद्ब्रह्मदिनत्रयं जीवेन्न संशयः ॥ १,१५.९४ ॥
[श्वेतार्कपर्णकल्पः]
श्वेतार्कपर्णस्वरसं भृङ्गराजरसं समम् ।
एकीकृत्यातपे शोष्यं यावच्चूर्णत्वमाप्नुयात् ॥ १,१५.९५ ॥
चतुर्गुणे गवां क्षीरे तत्पचेन्मृदुवह्निना ।
यावत्पिण्डं भवेत्तावत्सेव्यं तत्कर्षमात्रकम् ॥ १,१५.९६ ॥

गवां क्षीरं पलं पेयं पूर्ववत्फलमाप्नुयात् ।
ओमां हंसमालिनि स्वाहा अयं भक्षणमन्त्रः ।
[६. हस्तिकर्णीकल्पः; हस्तिकर्णीपत्रकल्पः]
अथेन्दुवारसंयुक्तत्रयोदश्यां समाहरेत् ॥ १,१५.९७ ॥
हस्तिकर्णीपलाशानि छायाशुष्काणि चूर्णयेत् ।
पलं सेव्यं गवां क्षीरं वर्षान्मृत्युं जरां जयेत् ॥ १,१५.९८ ॥
जीवेद्ब्रह्मायुषं मर्त्यः सिद्धसाध्यादिसेवितः ।
[हस्तिकर्णीपञ्चाङ्गकल्पः]
पञ्चाङ्गं हस्तिकर्ण्याश्च कुर्याच्छायाविशोषितम् ॥ १,१५.९९ ॥
मासैकमुदकैः सार्धं कर्षं प्रत्यहमश्नुयात् ।
सौवीरदधिदुग्धाज्यतक्रक्षौद्रैर्यथाक्रमम् ॥ १,१५.१०० ॥
एकैकं प्रतिमासं च सेव्यं वर्षाच्च सिध्यति ।
जीवेद्ब्रह्मदिनं सिद्धो वज्रकायो महाबलः ॥ १,१५.१०१ ॥
ओममृताय अमृतं गृह्णामि स्वाहा ।
अयं ग्रहणमन्त्रः ।
अमृतकुटीजातानाममृतं कुरु कुरु स्वाहा ।
अनेन मन्त्रेण पूजयेत् ।
ओममृतोद्भवाय अमृतं कुरु कुरु नित्यं नमो नमः ।
अयं भक्षणमन्त्रः ।
[७. रुदन्तीकल्पः]
अथ वक्ष्याम्यहं दिव्यं रुदन्तीकल्पमुत्तमम् ।
चणपत्रोपमैः पत्रैः पुष्पैरपि च तादृशैः ॥ १,१५.१०२ ॥
रुदन्ती नाम विख्याता ह्यधस्ताज्जलवर्षिणी ।
रोदितीव जनान्दृष्ट्वा म्रियमाणान्गदाकुलान् ॥ १,१५.१०३ ॥
चतुर्विधा च सा ज्ञेया पीता रक्ता सितासिता ।
शुक्लपक्षे शुभदिने रुदन्तीं तां समाहरेत् ॥ १,१५.१०४ ॥
समूलां शोषयेद्धीमान् छायायां वस्त्रशोधिताम् ।
विशुद्धदेहः सेवेत बिडालपदमात्रकम् ॥ १,१५.१०५ ॥
क्षौद्राज्याभ्यामनुदिनं भुक्तिः क्षीराज्यसंयुता ।
जीर्णायां संयमी भूत्वा वर्षात्तेजोबलान्वितः ॥ १,१५.१०६ ॥
परमायुर्भवेन्मर्त्यो जराव्याधिविवर्जितः ।
तैलं कतकमूलोत्थं कुर्यात्पातालयन्त्रके ॥ १,१५.१०७ ॥
गर्भयन्त्रेऽथवा क्षाल्यं पञ्चाशद्वारमम्बुना ।
नालिकेराम्बुना वाथ कृत्वेत्थं तैलशोधनम् ॥ १,१५.१०८ ॥
पञ्चाङ्गं च रुदन्त्याश्च छायाशुष्कं विचूर्णयेत् ।
तदर्धं मुसलीचूर्णं मुसल्यर्धपलत्रयम् ॥ १,१५.१०९ ॥
एतत्त्रिचूर्णं संमिश्रं कर्षं कतकतैलतः ।
लिहेदनुदिनं शुद्धस्तद्वृद्धिः स्यात्पलावधि ॥ १,१५.११० ॥
संवत्सराद्वज्रकायः स जीवेद्ब्रह्मणो दिनम् ।
[८. निर्गुण्डीकल्पः; निर्गुण्डीमूलकल्पः]
अथ वच्मि शुभं दिव्यं निर्गुण्डीकल्पमुत्तमम् ॥ १,१५.१११ ॥
प्रातः पुष्यरवौ ग्राह्या निर्गुण्डीमूलसंभवा ।
त्वक्शोषणीया छायायां तच्चूर्णं कर्षमात्रकम् ॥ १,१५.११२ ॥
पलमात्राजमूत्रेण पिबेच्छुद्धोऽनुवासरम् ।
षण्मासाद्दिव्यदेहः स्यान्मत्तनागबलान्वितः ॥ १,१५.११३ ॥

मध्वाज्यक्षीरलुलितं तच्चूर्णं स्निग्धभाण्डके ।
पिधाय धान्यराशौ तु मासमेकं तु निक्षिपेत् ॥ १,१५.११४ ॥
मासान्ते तत्समुद्धृत्य शुद्धाङ्गो द्विपलं सदा ।
सेवेत वर्षपर्यन्तं जीवेदाचन्द्रतारकम् ॥ १,१५.११५ ॥
अथवार्धपलं चूर्णं तदीयं सघृतं पिबेत् ।
पूर्ववज्जायते सिद्धिर्जरारोगविवर्जितः ॥ १,१५.११६ ॥
वचामुण्डीनिम्बवरागुडूचीभृङ्गराट्समाः ।
एषां समांशं संयोज्य निर्गुण्डीमूलचूर्णतः ॥ १,१५.११७ ॥
क्षौद्राज्याभ्यां लिहेद्धस्तादन्वहं पलमात्रकम् ।
आयुर्विरिञ्चित्रिदिनं भवेन्मृत्युजरोज्झितम् ॥ १,१५.११८ ॥
निर्गुण्डीमूलचूर्णं तु क्रिमिघ्नकटुकैः समम् ।
पलमात्रमजाक्षीरैर्नित्यं शुद्धः पिबेद्बुधः ॥ १,१५.११९ ॥
वलीपलितनिर्मुक्तो निर्गदः स्यात्त्रिमासतः ।
[निर्गुण्डीपत्रकल्पः]
निर्गुण्डीपत्रजद्रावं भाण्डे मृद्वग्निना पचेत् ॥ १,१५.१२० ॥
गुडवत्पाकमापन्नं तं पिबेन्निष्कमात्रकम् ।
दिने दिने निष्कवृद्धिर्यावद्द्विपलिकं भवेत् ॥ १,१५.१२१ ॥
तेन वान्तिर्विरेकः स्यान्निर्यान्ति क्रिमयः परम् ।
अपानतो देहगता मुखनासाक्षिकर्णतः ॥ १,१५.१२२ ॥
क्षयकुष्ठादिरोगाश्च नश्यन्ति मुनिवासरात् ।
मासत्रये जरां हन्ति जीवेद्वर्षशतत्रयम् ॥ १,१५.१२३ ॥
[निर्गुण्डीपञ्चाङ्गकल्पः]
पञ्चाङ्गचूर्णं निर्गुण्ड्यास्तिलतैलेन सेवितम् ।
निष्कादिपलपर्यन्तं त्रिमासेन जरां जयेत् ॥ १,१५.१२४ ॥
अशीतिं वातजान्रोगान् कुष्ठानपि गलामयान् ।
आस्यार्त्युपकुशादींश्च जयेत्तत्पर्णचर्वणात् ॥ १,१५.१२५ ॥
सिन्धुवारकपञ्चाङ्गचूर्णं मधुघृतप्लुतम् ।
पलमात्रं लिहेत्प्रातस्ततो जीर्णे गवां पयः ॥ १,१५.१२६ ॥
पिबेद्यथानलबलं भुञ्जीताग्नौ क्रमेण च ।
निर्वाते निवसेद्धीमान्सिद्धिमाप्नोति वत्सरात् ॥ १,१५.१२७ ॥
सिद्धदेहस्य पूर्वेण म्रियेते विषपारदौ ।
काले काले यथाप्राप्तं पञ्चाङ्गं सिन्धुवारकात् ॥ १,१५.१२८ ॥
छायायां शोषितं चूर्णं त्रिमधुत्रिफलायुतम् ।
स्निग्धभाण्डे धान्यराशौ त्रिमासं स्थापयेत्ततः ॥ १,१५.१२९ ॥
निष्कादिपलपर्यन्तं सेवेताकर्षकं सुधीः ।
सर्वव्याधिविनिर्मुक्तो जरामरणवर्जितः ॥ १,१५.१३० ॥
ओं नमो मायागणपतये कुबेराय स्वाहा ।
अयं भक्षणमन्त्रः ।
[९. शुनकशाल्मलीकल्पः]
अथ वक्ष्यामि देवेशि कल्पं शुनकशाल्मलेः ।
अष्टम्यां कृष्णपक्षस्य स्नात्वा रात्रौ समाहितः ॥ १,१५.१३१ ॥
आवेष्ट्य कृष्णसूत्रैश्च वृक्षं शुनकशाल्मलिम् ।
तत्राघोरं जपेद्धीरः सहस्रवसुसंमितम् ॥ १,१५.१३२ ॥
[९. शुनकशाल्मलीमूलकल्पः]
तन्मूलवल्कलं ग्राहयं छायायां शोषयेत्ततः ।

चूर्णं कृत्वा तु मध्वाज्यैः खादेत्प्रातः पलं पलम् ॥ १,१५.१३३ ॥
वर्षाद्वलिजरामुक्तः स जीवेद्ब्रह्मणो दिनम् ।
[शुनकशाल्मलीपुष्पकल्पः]
तस्याष्टादश पुष्पाणि गोक्षीरेऽष्टपले पचेत् ॥ १,१५.१३४ ॥
पुष्पवर्ज्यं पिबेत्क्षारमेवं च प्रतिवासरम् ।
मासेन दिव्यदेहः स्याज्जीवेद्ब्रह्मदिनत्रयम् ॥ १,१५.१३५ ॥
[शुनकशाल्मलीफलकल्पः]
तत्फलं तु गवां क्षीरे पाचयेत्कान्तपात्रके ।
फलं त्यक्त्वा पिबेत्क्षीरं दीप्तेऽग्नौ क्षीरभोजनम् ॥ १,१५.१३६ ॥
मासषट्कप्रयोगेण दिव्यदेहो भवेन्नरः ।
जीवेत्कल्पान्तपर्यन्तं वायुवेगी महाबलः ॥ १,१५.१३७ ॥
तस्य मूत्रपुरीषाभ्यां शुल्बं स्वर्णं भवेद्ध्रुवम् ।
[१०. पथ्याकल्पः; पथ्योत्पत्तिः]
अथातः सम्प्रवक्ष्यामि पथ्याकल्पमनूपमम् ॥ १,१५.१३८ ॥
येन रोगा विनश्यन्ति सिध्यन्ति च मनोरथाः ।
पीत्वामृतं शचीनाथः प्रीत्या शच्यै समापिबत् ॥ १,१५.१३९ ॥
तयोर्हृष्टमुखाम्भोजगलितामृतबिन्दवः ।
सप्तधा भुवि ते जाता महावीर्याः स्थिरायुषः ॥ १,१५.१४० ॥
ते सप्तदेशेषूत्पन्नाः सप्तधा नाम धारकाः ।
विन्ध्यदेशे कान्यकुब्जे सौराष्ट्रे हिमवद्गिरौ ॥ १,१५.१४१ ॥
गङ्गातटे च काश्मीरे वैन्यदेशे यथाक्रमम् ।
विजया रोहिणी चैव पूता स्यात्त्रिवृतामृता ॥ १,१५.१४२ ॥
जीवन्ती त्वभया जाता देशे देशे यथाक्रमम् ।
उत्तमा मध्यमा नीचाः स्वयं पक्वास्तु शोभनाः ॥ १,१५.१४३ ॥
हरीतक्यां रसाः पञ्च विद्यन्ते लवणोज्झिताः ।
स्वाद्वम्लतिक्तकटुकतुवराश्च यथाक्रमम् ॥ १,१५.१४४ ॥
स्युर्मज्जस्नायुवृन्तत्वङ्मांसेषु क्रमशो रसाः ।
अलाबुकर्णी वृत्ता च चतुरङ्ग्यल्पचर्मका ॥ १,१५.१४५ ॥
पञ्चास्रा मांसला स्वर्णवर्णा कृष्णा स्मृताः क्रमात् ।
या मज्जन्ती जले ग्राह्या गुर्वी स्निग्धा घनाघनाः ॥ १,१५.१४६ ॥
द्विकर्षमात्रा सा श्रेष्ठा कर्षमात्रा तु मध्यमा ।
अर्धकर्षा भवेन्नीचा पथ्या फलमुदाहृतम् ॥ १,१५.१४७ ॥
क्रिमिजुष्टा वह्निदग्धा नष्टा पङ्कजलार्द्रिता ।
स्फुटिता चोषरस्था च वर्जनीया हरीतकी ॥ १,१५.१४८ ॥
[पथ्याकल्पः]
शुद्धदेशे पुण्यदिने ग्रहणे चन्द्रसूर्ययोः ।
गन्धाद्यैः पूजयित्वादौ प्रार्थयित्वा जपेत्सुधीः ॥ १,१५.१४९ ॥
गायत्रीशतमावृत्त्य पथ्यामेवं समाहरेत् ।
शुण्ठ्या वाथ गुडेनापि सैन्धवेनाथवा शिवाम् ॥ १,१५.१५० ॥
सेवेत दीपनं तेन करोत्यामविनाशनम् ।
क्षौद्रेण वा गुडेनापि पिप्पल्या नागरेण वा ॥ १,१५.१५१ ॥
सैन्धवेनाथवा सेव्या शुद्धाङ्गः प्रतिवासरम् ।
द्वे द्वे पथ्ये द्वादशाब्दं तेन जीवेच्छतं समाः ॥ १,१५.१५२ ॥
द्विनिष्कचूर्णं पथ्याया निष्कैकं लोहभस्म च ।
लोलयित्वा गोघृतेन कान्तपात्रे च लेपयेत् ॥ १,१५.१५३ ॥

अधोमुखीकृतं पात्रं स्थापयेत्तद्दिवानिशम् ।
प्रातः शुद्धवपुर्लेह्यं जरां मृत्युं जयेत्सुधीः ॥ १,१५.१५४ ॥
शाल्मलीं छिद्रयित्वादौ तदन्तर्निक्षिपेच्छिवाः ।
आ षण्मासं परस्तास्तु ग्राह्या चैकैकशोऽन्वहम् ॥ १,१५.१५५ ॥
सेवेत पथ्यां शुद्धाङ्गस्तस्य मृत्युर्जरा न हि ।
[११. आमलकीकल्पः]
अथ वक्ष्यामि देवेशि कल्पमामलकीभवम् ॥ १,१५.१५६ ॥
चैत्रादौ ग्राहयेद्धात्र्याः सुपक्वानि फलानि च ।
हरीतकीवद्ग्राह्यानि छायाशुष्काणि चूर्णयेत् ॥ १,१५.१५७ ॥
कर्षं जलेन वाज्येन मधुना वा फलं निशि ।
वर्धयेज्जाठरं वह्निमिन्द्रियाणां प्रसादकृत् ॥ १,१५.१५८ ॥
धात्रीचूर्णं लोहभस्म क्षौद्राज्यालुलितं लिहेत् ।
वलीपलितमृत्युघ्नं वत्सरात्पूर्ववद्विधिः ॥ १,१५.१५९ ॥
क्षीरपक्वं च तद्भक्ष्यं पूर्ववत्सिद्धिदायकः ।
धात्रीचूर्णं भृङ्गचूर्णं मध्वाज्यसहितं लिहेत् ॥ १,१५.१६० ॥
वलीपलितनिर्मुक्तो वत्सराद्भवति ध्रुवम् ।
निंबामलकयोश्चूर्णं मध्वाज्यसहितं लिहेत् ॥ १,१५.१६१ ॥
पूर्ववच्च फलं देवि नात्र कार्या विचारणा ।
[१२. त्रिफलाकल्पः]
अथ ब्रवीमि ते देवि त्रिफलाया रसायनम् ॥ १,१५.१६२ ॥
एकं हरीतकीभागं द्विभागं च विभीतकम् ।
चतुर्भागं तथा धात्री सर्वमेकत्र चूर्णयेत् ॥ १,१५.१६३ ॥
पिप्पल्या वा तुगाक्षीर्या सैन्धवैर्मधुकेन वा ।
क्षौद्रेण वा सर्पिषा वा वचया सितयाथवा ॥ १,१५.१६४ ॥
सुवर्णै रजतैः शुल्बैर्वङ्गैर्नागैस्तथायसैः ।
संयुक्ता त्रिफला लीढा जरामरणनाशिनी ॥ १,१५.१६५ ॥
त्रिफलायाः समांशास्तु योज्याश्चैकैकशस्तु ताः ।
पिप्पल्याद्यास्तु सौवर्णभस्मादीनां च कथ्यते ॥ १,१५.१६६ ॥
सौवर्णं पणमात्रं च द्विपणं राजतं भवेत् ।
पणार्धं शुल्बचूर्णं च द्विपणं नागवङ्गजम् ॥ १,१५.१६७ ॥
चूर्णं तथायसं प्रोक्तं पणपञ्चकमात्रकम् ।
एवं यस्त्रिफलासेवी जीवेदाचन्द्रतारकम् ॥ १,१५.१६८ ॥
एकां हरीतकीं प्रातर्भुक्तेः प्राग्द्विविभीतकम् ।
चतुरामलकं रात्रौ सर्वे ते घृतपाचिताः ॥ १,१५.१६९ ॥
सेवेतावत्सरं धीमान्वलीपलितवर्जितः ।
अन्नोदकेन संपेष्य कान्तपात्रे लिहेन्निशि ॥ १,१५.१७० ॥
सक्षौद्रं तल्लिहेत्प्रातरायुरारोग्यवर्धनम् ।
त्रिफलां भावयेत्पूर्वं खदिरासनयूषतः ॥ १,१५.१७१ ॥
त्रिः सप्तवारं देवेशि ततः क्षौद्रघृताप्लुताम् ।
सेवेतानुदिनं कर्षं वर्षादिन्द्रायुषो भवेत् ॥ १,१५.१७२ ॥
विडङ्गभृङ्गखदिरब्रह्मवृक्षरसैः पृथक् ।
पृथक्सप्तदिनं घर्मे भावयेत्त्रिफलां प्रिये ॥ १,१५.१७३ ॥
भक्षयेद्गुडसर्पिर्भ्यां कर्षं वर्षात्सुरोपमः ।
त्रिफलायाः शतफलं चूर्णं भृङ्गरसैः पुरा ॥ १,१५.१७४ ॥
त्रिः सप्तवासरं भाव्यं लिहेन्मधुघृतान्वितम् ।

पलार्धं प्रत्यहं प्रातर्जीर्णेऽद्याद्दधिभक्तकम् ॥ १,१५.१७५ ॥
वर्षात्प्रसन्नदृष्टिश्च जीवेत्षट्शतवत्सरम् ।
महाबलः कृष्णकेशः स्मृतिबुद्धिसमन्वितः ॥ १,१५.१७६ ॥
युवा शतस्त्रीरन्ता च धीरः स सुभगो भवेत् ।
[१३. शुण्ठीकल्पः]
अथ वक्ष्यामि गिरिजे दिव्यं शुण्ठीरसायनम् ॥ १,१५.१७७ ॥
श्रेष्ठं नागरमादाय चूर्णयेत्पटगालितम् ।
गुडं चास्य समं योज्यं मधुना गोघृतेन च ॥ १,१५.१७८ ॥
स्निग्धभाण्डे विनिक्षिप्य धान्यराशौ सुयन्त्रितम् ।
द्विमण्डलात्समाहृत्य शुद्धाङ्गः पुण्यवासरे ॥ १,१५.१७९ ॥
कर्षं कर्षं लिहेन्नित्यं सप्ताहाद्रोगवर्जितः ।
षण्मासमुपभुञ्जानो जीवेद्वर्षशतद्वयम् ॥ १,१५.१८० ॥
बुद्ध्या वाचस्पतिसमः पुराणागमशास्त्रवित् ।
मयानुभूतं देवेशि कथितं तव सौहृदात् ॥ १,१५.१८१ ॥
[१४. पिप्पलीकल्पः]
अथ प्रिये प्रवक्ष्यामि पिप्पलीनां रसायनम् ।
पिप्पलीं शोधयेत्पूर्वं किंशुकक्षारवारिणा ॥ १,१५.१८२ ॥
सप्तधा च ततः कुर्यात्तासां च घृतभर्जनम् ।
ततः सेवेत शुद्धाङ्गः पञ्चाष्टौ दश सप्तधा ॥ १,१५.१८३ ॥
वर्षमेकं तु मध्वाज्यै रोगास्तस्य न सन्ति च ।
वलीपलितनिर्मुक्तो जीवेच्च शरदः शतम् ॥ १,१५.१८४ ॥
प्रातः प्राग्भोजनात्पश्चाद्भक्षयेत्त्रित्रिपिप्पलीः ।
वर्षाद्व्याधिं जरां हन्ति शतायुष्यमवाप्नुयात् ॥ १,१५.१८५ ॥
एकद्वित्रिक्रमेणैव वर्धयेद्दशवासरम् ।
ह्रासयेत्पिप्पलीस्तद्वद्ध्रासवृद्धी पुनः पुनः ॥ १,१५.१८६ ॥
गोक्षीरेण युतं यावत्पिप्पलीनां सहस्रकम् ।
तावत्सेवेत शुद्धाङ्गो जरारोगविवर्जितः ॥ १,१५.१८७ ॥
अजाक्षीरेण संपेष्य पिबेद्युक्ता बलाधिका ।
क्षीरशृता मध्यफला पूर्ववद्ध्रासवृद्धयः ॥ १,१५.१८८ ॥
यावत्सहस्रद्वितयं तावत्सेव्यं रसायनम् ।
कासश्वासक्षयाः पाण्डुप्लीहशोणितमारुताः ॥ १,१५.१८९ ॥
मेहार्शोग्रहणीशोफहिध्मवमिगलग्रहाः ।
रसायनेन पिप्पल्या नश्यन्ति विषमज्वराः ॥ १,१५.१९० ॥
जीवेद्वर्षशतं पूर्णं वलीपलितवर्जितः ।
[१५. चित्रककल्पः]
अथ चित्रककल्पं ते वक्ष्यामि शृणु पार्वति ॥ १,१५.१९१ ॥
चित्रकस्त्रिविधो ज्ञेयः कृष्णो रक्तः सितः शिवे ।
कृष्णो रसायने रक्तो लोहे रोगे सितो भवेत् ॥ १,१५.१९२ ॥
श्रेष्ठमध्यकनीयांसो न हेमन्ते समाहरेत् ।
वसन्ते कृष्णपञ्चम्यां कृष्णाम्बरधरः शुचिः ॥ १,१५.१९३ ॥
कृष्णगन्धाक्षतैः पुष्पैः पूजयेत्कृष्णसूत्रकैः ।
परिवेष्ट्य च पूर्वेद्युर्दद्यात्कृष्णौदनं बलिम् ॥ १,१५.१९४ ॥
प्रातर्मौनी खनेच्छुद्धः समूलं चित्रकं हरेत् ।
न गोघ्रातं पदा स्पृष्टं शुचौ देशे विनिक्षिपेत् ॥ १,१५.१९५ ॥
क्षिप्तं क्षीरान्तरे कृष्णं वह्नौ क्षीरं तु कृष्णति ।

रक्तचित्रं परीक्ष्यैवं क्षीरं रक्तत्वमाप्नुयात् ॥ १,१५.१९६ ॥
एवं च रक्तचित्रस्य रक्तपुष्पाक्षतादिभिः ।
कृष्णं वा लोहितं वापि समूलमपि खण्डयेत् ॥ १,१५.१९७ ॥
सप्तधामलकाम्भोभिर्भावयेच्छोषयेत्क्रमात् ।
संचूर्ण्य तार्क्षीतालत्वक्चित्रकत्रिफलाः समाः ॥ १,१५.१९८ ॥
एषां समं चाग्निचूर्णं सर्वं भाण्डे नवे क्षिपेत् ।
ततः शुद्धः शुभदिने निष्कं निष्कं घृताप्लुतम् ॥ १,१५.१९९ ॥
भक्षयेन्मासमात्रेण व्रणकुष्ठादिकृन्तनम् ।
दन्तकेशनखा यान्ति पतनं च पुनर्भवम् ॥ १,१५.२०० ॥
वलीपलितनिर्मुक्तो जीवेच्च शरदः शतम् ।
एवं च रक्तचित्रस्य योजना च फलं तथा ॥ १,१५.२०१ ॥
[१६. भल्लातकीकल्पः]
अथ भल्लातकीकल्पं शृणु वक्ष्यामि पार्वति ।
पक्वं नवं सुतीक्ष्णं च भल्लातकफलं हरेत् ॥ १,१५.२०२ ॥
गोक्षीरे फलमेकं तु सूचीभिन्नं पचेत्सुधीः ।
मध्वाज्यशर्करायुक्तं फलं त्यक्त्वा पयः पिबेत् ॥ १,१५.२०३ ॥
एकद्वित्रिक्रमेणैवं वर्धयेदेकविंशतिम् ।
फलानि च दिनान्येकविंशतिः क्रमशः प्रिये ॥ १,१५.२०४ ॥
सर्वे रोगा विनश्यन्ति षण्मासाद्दिव्यविग्रहः ।
[१७. भूमिकदम्बकल्पः]
अथ भूमिकदम्बस्य कल्पं वक्ष्यामि पार्वति ॥ १,१५.२०५ ॥
त्रिविधः स तु विज्ञेयः श्वेतो रक्तश्च मेचकः ।
शुक्लपक्षे च पुष्यार्के विधिवत्तं समाहरेत् ॥ १,१५.२०६ ॥
समूलं शोषयेत्तं च छायायां चूर्णयेत्ततः ।
तच्चूर्णं कर्षमाज्येन लिहेच्छुद्धवपुः प्रिये ॥ १,१५.२०७ ॥
तस्मिञ्जीर्णे प्रकुर्वीत क्षीरान्नं विजितेन्द्रियः ।
नश्यन्ति वलयस्तस्य षण्मासात्पलितानि च ॥ १,१५.२०८ ॥
संवत्सरप्रयोगेण जीवेद्वर्षशतत्रयम् ।
[१८. पुनर्नवाकल्पः]
दिव्यं पुनर्नवाकल्पं वक्ष्यामि शृणु पार्वति ॥ १,१५.२०९ ॥
पुनर्नवाख्या द्विविधा लोहिता धवला तथा ।
रसे रसायने श्वेता रोगे रक्ता प्रशस्यते ॥ १,१५.२१० ॥
पुष्यार्के श्वेतशोफघ्नीं समूलामाहरेत्सुधीः ।
छायाशुष्कं चूर्णयित्वा गोक्षीरेण पलार्धकम् ॥ १,१५.२११ ॥
पलं वाथ पिबेत्प्रातः शुद्धाङ्गो वत्सरावधि ।
युवा भवति वृद्धोऽपि स जीवेच्छरदः शतम् ॥ १,१५.२१२ ॥
गोक्षीरेण च तन्मूलं क्षीरक्षीणं पचेत्प्रिये ।
चूर्णीकृत्य च तन्मूलं पक्वीकृतगुडे समम् ॥ १,१५.२१३ ॥
गोघृतं च क्षिपेत्तत्र त्वेकीकृत्यावतारयेत् ।
पलं चानुदिनं लेह्यं क्षीरान्नाशी जितेन्द्रियः ॥ १,१५.२१४ ॥
संवत्सरप्रयोगेण वलीपलितवर्जितः ।
तत्सेवकस्य नश्यन्ति विषाणि विविधानि च ॥ १,१५.२१५ ॥
त्वग्दोषः कफपाण्ड्वाद्या औदरा गुल्मपायुजाः ।
नश्यन्ति सकला रोगाश्छर्दिहिक्काक्षिकर्णजाः ॥ १,१५.२१६ ॥
पुष्पितां फलितां पक्वामादाय च पुनर्नवाम् ।

खण्डितां नागरक्वाथसुस्विन्नां क्षीरपेषिताम् ॥ १,१५.२१७ ॥
पिबेद्दिवा च चूर्णान्ते निशि क्षीरघृताशनः ।
षण्मासात्सिद्धिमाप्नोति योषिच्छतरतो भवेत् ॥ १,१५.२१८ ॥
[१९. भृङ्गराजकल्पः]
अथ श्रीभृङ्गराजस्य कल्पं वच्मि महेश्वरि ।
समूलं तच्च पुष्यार्के समाहृत्याथ शोषयेत् ॥ १,१५.२१९ ॥
छायायां पूर्णितं कृत्वा कर्षं सौवीरलोडितम् ।
प्रातः पिबेच्छुद्धदेहो मासाद्रोगान्व्यपोहति ॥ १,१५.२२० ॥
ततः षण्मासयोगेन वलीपलितखण्डनम् ।
घृतक्षीराशनो नित्यं जीवेद्वर्षशतत्रयम् ॥ १,१५.२२१ ॥
युक्तः कृष्णतिलैरर्धैर्भृङ्गराजस्य पल्लवम् ।
उपयुञ्जीत षण्मासं वलीपलितकृन्तनम् ॥ १,१५.२२२ ॥
भृङ्गराजफलं पुष्पं पत्रं मूलं च चूर्णयेत् ।
एतच्चूर्णस्य सदृशांश्चित्राद्यान्परिकल्पयेत् ॥ १,१५.२२३ ॥
चित्रविश्वकणाबिल्वपथ्याधात्रीविडङ्गकम् ।
मरीचं व्याधिघातं च चक्रमर्दस्य बीजकम् ॥ १,१५.२२४ ॥
लोध्रसर्षपराज्यश्च चूर्णिताश्च समाहृताः ।
एकीकृत्यैव भृङ्गस्य रसेन परिभावयेत् ॥ १,१५.२२५ ॥
सप्तधा च ततः सर्वं चूर्णीकृत्य पुनः प्रिये ।
कर्षं गोपयसा सार्धं शुद्धकोष्ठो लिहेत्प्रिये ॥ १,१५.२२६ ॥
षण्मासाज्जायते सिद्धिर्वलीपलितवर्जितः ।
पूर्वोक्तवद्विधिः प्रोक्तः स्वर्णभृङ्गस्य पार्वति ॥ १,१५.२२७ ॥
ओं नमो भगवते रुद्राय तिष्ठ तिष्ठ संगृहाण स्वाहा ।
अयं ग्रहणमन्त्रः ।
ओं नमो रुद्राय अमृतात्मने स्वाहा ।
अयमालोडनमन्त्रः ।
ओमुत्तिष्ठोत्तिष्ठ कल्याणि स्वाहा ।
अयं भक्षणमन्त्रः ।
[२०. कुमारीकल्पः]
अथ वक्ष्याम्यहं देवि कुमारीकल्पमुत्तमम् ।
नदीतीरेऽथवा ग्रामे नगरेऽब्धितटेऽथवा ॥ १,१५.२२८ ॥
मृदुकर्णकपत्राणि पीतान्यहिसमानि च ।
प्रवालसमपुष्पाणि सक्लेदहस्तीनि च ॥ १,१५.२२९ ॥
यस्याः पत्राणि तिष्ठन्ति सा कुमारीति कथ्यते ।
शुचिः पुण्यदिने कन्यां सोपवासः समाहरेत् ॥ १,१५.२३० ॥
अर्चयित्वा बलिं दत्त्वा कुमारीं सिद्धिदायिनीम् ।
शुद्धकोष्ठः प्रगे खादेच्चतुरङ्गुलमात्रतः ॥ १,१५.२३१ ॥
एवं मासं ततः खाद्यं यथा वृद्धिः शनैः शनैः ।
अत्यन्तं वर्जयेन्मध्यं खाद्यं भवति सर्वदा ॥ १,१५.२३२ ॥
स्वशक्त्यनुगुणं सेव्यं स्वेच्छाहारविहारवान् ।
स्निग्धैर्मांसरसक्षीरैर्युक्त्या सेव्या कुमारिका ॥ १,१५.२३३ ॥
हरत्यखिलरोगांश्च राजयक्ष्मादिकान्प्रिये ।
किन्नरैः सदृशं गायेद्गृध्रदृष्टिर्महाबलः ॥ १,१५.२३४ ॥
स्निग्धकेशश्च मतिमान् बालादित्यसमप्रभः ।
दशनागबलोपेतः समीरसदृशो गतौ ॥ १,१५.२३५ ॥

वलीपलितनिर्मुक्तः षोडशाब्दवया भवेत् ।
एवं वर्षप्रयोगेण भवत्येतैर्गुणैर्युतः ॥ १,१५.२३६ ॥
यस्तु द्वादशवर्षान्तं सेवेत स सुरासुरैः ।
महोरगैरवध्यश्च त्रिंशन्नागबलान्वितः ॥ १,१५.२३७ ॥
मयूरदृष्टिः सर्वज्ञः सर्वशास्त्रविशारदः ।
विद्याधरो भवेन्मर्त्यो नात्र कार्या विचारणा ॥ १,१५.२३८ ॥
कुमार्या दलमादाय हस्तर्क्षे साधकेऽहनि ।
प्रातः प्रत्यहमास्वाद्य शुचिरग्निबलं यथा ॥ १,१५.२३९ ॥
तन्मज्जां वा लिहेद्यस्तु मध्वाज्यव्योषसंयुताम् ।
मासं सेवेत नियमात्सर्वरोगैः प्रमुच्यते ॥ १,१५.२४० ॥
षण्मासमुपयुञ्जानो वलीपलितवर्जितः ।
तस्याः क्लेदं समानीय व्योषक्षौद्राज्यसंयुतम् ॥ १,१५.२४१ ॥
स्विन्नं मृद्वग्निना सेव्यं क्षीराहारो जितेन्द्रियः ।
मासाद्रोगा विनश्यन्ति द्विमासाद्दृढविग्रहः ॥ १,१५.२४२ ॥
दिव्यदृष्टिश्च तेजस्वी द्विमासाद्विषहृद्भवेत् ।
षण्मासयोगाद्वृद्धोऽपि युवा स्यात्सत्यमीश्वरि ॥ १,१५.२४३ ॥
एवं वर्षोपयोगेन जीवेद्विशतवत्सरम् ।
तस्या दलं युगैः सार्धं भक्षयेच्छुद्धकोष्ठवान् ॥ १,१५.२४४ ॥
वलीपलितनाशः स्याद्वत्सरान्नात्र संशयः ।
[२१. नीलीकल्पः]
अथ देवि प्रवक्ष्यामि महानीलीरसायनम् ॥ १,१५.२४५ ॥
पुष्यार्के शुचिराददयान्महानीलीं विधानतः ।
मूलपुष्पफलोपेतां छायायां शोषयेत्प्रिये ॥ १,१५.२४६ ॥
पटचूर्णं द्विनिष्कं स्यान्निष्कमभ्रं च योजयेत् ।
सर्वं च मधुनालोड्य स्निग्धभाण्डे विनिक्षिपेत् ॥ १,१५.२४७ ॥
धान्यराशौ न्यसेन्मासमुद्धृत्य च ततः प्रिये ।
शुद्धकोष्ठो लिहेत्प्रातर्बिडालपदमात्रकम् ॥ १,१५.२४८ ॥
षण्मासाज्जायते मर्त्यो वलीपलितवर्जितः ।
महानीलीं च कृष्णाभ्रं मुसलीममृतालताम् ॥ १,१५.२४९ ॥
समांशं चूर्णितान्कृत्वा मधुना कर्षमालिहेत् ।
एवं वर्षोपयोगेन जीर्णोऽपि तरुणायते ॥ १,१५.२५० ॥
बलवान्मतिमान्धीरो जीवेद्वर्षशतद्वयम् ।
अभ्रकं च कुमारीं च काकजङ्घां शतावरीम् ॥ १,१५.२५१ ॥
एतत्समां महानीलीं चूर्णयेत्स्निग्धभाण्डके ।
मधुना सहितं सप्तरात्र्यन्ते च समुद्धरेत् ॥ १,१५.२५२ ॥
कर्षं लिहेत्क्षीरभोजी वर्षाद्वलिजरां जयेत् ।
[२२. मुसलीकल्पः]
अथ ब्रवीमि देवेशि मुसलीकल्पमुत्तमम् ॥ १,१५.२५३ ॥
स्वर्णपुष्पी च खर्जूरपत्रवत्पत्रशोभिता ।
अन्तः श्वेता च नाराचमूला सा मुसली स्मृता ॥ १,१५.२५४ ॥
तन्मूलं च समुद्धृत्य छायाशुष्कं च चूर्णयेत् ।
कर्षं मध्वाज्यलुलितं प्रातः शुद्धतनुर्लिहेत् ॥ १,१५.२५५ ॥
जीर्णे दुग्धान्नभोजी स्याद्रूक्षान्नं वर्जयेत्प्रिये ।
षष्ठे मासि भवेद्बालो वृद्धोऽपि बलबुद्धिमान् ॥ १,१५.२५६ ॥
पयसा मुसलीचूर्णं दध्ना वापि पिबेच्छुचिः ।

वर्षाद्यौवनमाप्नोति शतस्त्रीगमने पटुः ॥ १,१५.२५७ ॥
[२३. इन्द्रवल्लीकल्पः]
अथेन्द्रवल्लीकल्पं च व्याख्यामि शृणु पार्वति ।
मयोदिता सुरेन्द्रस्य दैत्यानां विजयाय च ॥ १,१५.२५८ ॥
तदा प्रभृति लोकेषु ख्याता सा चेन्द्रवल्लिका ।
तामिमां भजतां पुंसां देहसिद्धिर्भवेद्ध्रुवम् ॥ १,१५.२५९ ॥
समूलां तां समुद्धृत्य छायाशुष्कां विचूर्णयेत् ।
तच्चूर्णं द्वादशपलं वचाचूर्णं च तत्समम् ॥ १,१५.२६० ॥
व्रणघ्नीचूर्णमेतस्य समांशं त्रिकटूद्भवम् ।
षट्पलं सर्वमेकत्र कृत्वा भाण्डे विनिक्षिपेत् ॥ १,१५.२६१ ॥
कर्षं कर्षं मधुयुतं प्रातः प्रातर्लिहेत्सदा ।
षण्मासात्सर्वरोगघ्नं वत्सराद्देहसिद्धिदम् ॥ १,१५.२६२ ॥
भूयो भूयश्च षण्मासान्नवं चूर्णं प्रकल्पयेत् ।
[२४. ज्योतिर्द्रुमकल्पः]
अथ ज्योतिर्द्रुमस्यापि पञ्चाङ्गान्याहरेत्प्रिये ॥ १,१५.२६३ ॥
त्रिः सप्तरात्रं सक्षौद्राण्याश्रयेद्धान्यराशिके ।
भक्षयेद्रोगनिर्मुक्तस्तेजस्वी देहसिद्धिभाक् ॥ १,१५.२६४ ॥
[२५. अश्वगन्धाकल्पः]
अथाश्वगन्धाकन्दं च पौत्रीकोरण्टयोः समम् ।
चूर्णितं मधुसर्पिर्भ्यां कर्षं प्रातर्लिहेच्छुचिः ॥ १,१५.२६५ ॥
संवत्सरप्रयोगेण त्रिशतायुर्भवेन्नरः ।
[२६. ज्योतिष्मतीकल्पः]
अथ ज्योतिष्मतीकल्पं वक्ष्यामि शृणु पार्वति ॥ १,१५.२६६ ॥
दिव्या ज्योतिष्मती वल्ली तप्तकाञ्चनसन्निभा ।
बहुप्रताना स्वर्णाभा फलबीजा शुभप्रदा ॥ १,१५.२६७ ॥
आषाढे शुक्लपक्षे च शुभर्क्षे शुभवासरे ।
कुङ्कुमाक्तेन सूत्रेण तां वल्लीं परिवेष्टयेत् ॥ १,१५.२६८ ॥
रक्तगन्धाक्षतैः पुष्पैरर्चयित्वा प्रणम्य च ।
रक्तमाल्याम्बरधरः कुङ्कुमागरुचर्चितः ॥ १,१५.२६९ ॥
तांबूलचर्वणं कुर्वन्हृष्टो नियतमानसः ।
अभीष्टदेवतामन्त्रैस्तारामन्त्रेण वार्चयेत् ॥ १,१५.२७० ॥
अभीष्टदेवतां ध्यात्वा ततश्चोदङ्मुखः प्रिये ।
पक्वबीजानि गृह्णीयादातपे शोषयेत्ततः ॥ १,१५.२७१ ॥
त्वग्वर्ज्यानि निधायादौ चूर्णितानि विशेषतः ।
तेभ्यस्तैलं समाहृत्य तत्तैलसदृशं पयः ॥ १,१५.२७२ ॥
पादांशं मधु संयोज्य तैलशेषं पचेच्छनैः ।
तस्मिन्कर्पूरतक्कोलत्वग्जातीफलमेव च ॥ १,१५.२७३ ॥
एतानि समभागानि चूर्णयित्वा च कोविदः ।
तत्तैलं षोडशपलं तच्चूर्णं पलमात्रकम् ॥ १,१५.२७४ ॥
एकीकृत्यावलोड्याथ स्नेहभाण्डे विनिक्षिपेत् ।
त्रिः सप्तवासरं धान्यराशौ भाण्डे विनिक्षिपेत् ॥ १,१५.२७५ ॥
दशाहमथवा त्रिंशत्षष्टिर्वा नवतिस्तथा ।
अधिकं वा यथायोगं पश्चात्तैलं समाहरेत् ॥ १,१५.२७६ ॥
शुद्धकोष्ठः शुभदिने कृतदेवद्विजार्चनः ।
सूर्योदये पिबेद्धीरो बिन्दुवृद्ध्या क्रमात्प्रिये ॥ १,१५.२७७ ॥

पलान्तं साधकस्तेन निःसंज्ञत्वमवाप्यते ।
मन्दं मन्दं लब्धसंज्ञो मुहुः क्रन्दति नन्दति ॥ १,१५.२७८ ॥
रोदित्येव मुहुः कृच्छ्राल्लब्धसंज्ञो भवेन्नरः ।
गोक्षीरं पाययेत्पश्चात्सक्षौद्रं श्रान्तचेतसे ॥ १,१५.२७९ ॥
क्रमादेवं भवेत्स्वस्थः साधकोऽसौ न संशयः ।
षष्टिकान्नं सगोक्षीरं तैले जीर्णे च भोजनम् ॥ १,१५.२८० ॥
एवं कुर्यात्प्रतिदिनं मासमेकं निरन्तरम् ।
मासात्सूर्यसमः साक्षात्तेजसा मन्त्रशास्त्रवित् ॥ १,१५.२८१ ॥
साङ्गोपाङ्गश्रुतिं वेत्ति त्वनधीतोऽपि मानवः ।
मध्याह्ने भास्करं पश्येत्पूर्णचन्द्रमिवापरम् ॥ १,१५.२८२ ॥
वैनतेयसमा दृष्टिर्दिवा पश्यति तारकाः ।
अन्नवज्जीर्यते क्ष्वेलं सुप्तोऽप्याकर्णयेद्ध्वनिम् ॥ १,१५.२८३ ॥
अष्टादशविधं कुष्ठं सर्वरोगान्विनाशयेत् ।
फलं द्वितीयमासस्य शृणु वक्ष्यामि भैरवि ॥ १,१५.२८४ ॥
गन्धर्वोरगरक्षोभिः सेव्यते तैलसेवकः ।
महापातककर्तारो देवतापितृनिन्दकाः ॥ १,१५.२८५ ॥
समयाचाररहितास्त एते मुक्तकिल्बिषाः ।
अमुष्य सेवया मुक्ताः प्रयान्ति परमां गतिम् ॥ १,१५.२८६ ॥
फलं तृतीयमासस्य शृणु पार्वति वक्ष्यते ।
देवाश्च दिव्या ऋषयो वसवोऽष्टौ महोरगाः ॥ १,१५.२८७ ॥
अमुष्य सेवां कुर्वन्ति प्रियं नित्यहितं तथा ।
तस्य मूत्रं ताम्रघटे पूरयित्वा खनेद्भुवम् ॥ १,१५.२८८ ॥
तद्गर्ते विहितं कृत्वा षण्मासात्कनकं भवेत् ।
चतुर्थमासस्य फलं शर्वाणि शृणु सांप्रतम् ॥ १,१५.२८९ ॥
अदृश्योऽसौ भवेन्मर्त्यः सर्वैश्वर्ययुतो बली ।
दशब्रह्मदिनं जीवेत्सर्वलोकगतौ पटुः ॥ १,१५.२९० ॥
तन्मूत्रमलघर्माम्बूद्वर्तनैस्ताम्रलेपनम् ।
कुर्याद्वह्नौ प्रतपनं तच्छुल्बं काञ्चनं भवेत् ॥ १,१५.२९१ ॥
अथ पञ्चममासे तु सदेहः खेचरो भवेत् ।
साक्षाद्ब्रह्मा भवेद्देवि शृणु षाण्मासिकं फलम् ॥ १,१५.२९२ ॥
महासिद्धैः परिवृतः सर्वलोकान् यदृच्छया ।
विचरेच्छिवतुल्यः स्यान्महातेजा महायशाः ॥ १,१५.२९३ ॥
अथ सप्तममासस्य फलं कल्याणि वक्ष्यते ।
जितारिषड्वर्गमनाः सर्वभूतहिते रतः ॥ १,१५.२९४ ॥
विष्ण्वायुष्यमवाप्नोति पुण्यापुण्यविवर्जितः ।
विचरेच्च महावीर्यः श्रीमान् विष्णुरिवापरः ॥ १,१५.२९५ ॥
अष्टमासफलं वच्मि शृणु त्वं सर्वमङ्गले ।
मत्प्रियो दिव्यकर्मा च सर्वज्ञो मुक्तिमाप्नुयात् ॥ १,१५.२९६ ॥
फलं नवममासस्य शृणु कात्यायनि प्रिये ।
द्वितीयचिन्तामणिवद्वीरोऽसौ कामरूपवान् ॥ १,१५.२९७ ॥
ब्रह्मविष्ण्विन्द्रचन्द्राणां रूपं सृजति साधकः ।
मनसा चिन्तितं यद्यत्तत्तत्कर्तुं स्वयं प्रभुः ॥ १,१५.२९८ ॥
एतद्रसायनं दिव्यं सुकरं मोक्षसाधनम् ।
पुण्यं परमगुह्यं च गोपनीयं त्वया प्रिये ॥ १,१५.२९९ ॥
एतस्य सदृशं नास्ति देवानामपि दुर्लभम् ।

बहुनात्र किमुक्तेन त्वत्प्रियार्थं मयोदितम् ॥ १,१५.३०० ॥
रसायनमिदं दिव्यं न कुर्वन्ति च मानवाः ।
अज्ञानोपहताः केचित्केचिन्नास्तीति शङ्कया ॥ १,१५.३०१ ॥
अन्तरायेण केचिच्च तदलाभेन केचन ।
तत्कल्पाज्ञानतः केचित्केचिद्गुरुविवर्जिताः ॥ १,१५.३०२ ॥
केचिद्रोगाकुला देवि त्वित्थं तैरपि विघ्निताः ।
यत्र ज्योतिष्मती वल्ली सा भूमिः पुण्यभूमिका ॥ १,१५.३०३ ॥
तत्रैव सर्वतीर्थानि सिद्धयो विविधा अपि ।
ज्योतिष्मतीफलभवं सेव्यं दिव्यरसायनम् ॥ १,१५.३०४ ॥
[२७. गुग्गुलुकल्पः]
अथ गुग्गुलुकल्पं च शृणु त्वं चण्डिकेऽधुना ।
चतुर्विधो गुग्गुलुः स्यात्कुमुदः पद्मकस्तथा ॥ १,१५.३०५ ॥
महिषाक्षं च हेमाख्यस्तत्तद्वर्णसमुज्ज्वलः ।
हेमाख्यं च मनुष्याणां रसायनमुदाहृतम् ॥ १,१५.३०६ ॥
कणशो गुग्गुलुं कृत्वा गोघृतेन शनैः पचेत् ।
डोलायन्त्रे युक्तिपरो घृतभर्जितमांसवत् ॥ १,१५.३०७ ॥
पथ्याविभीतकौ धात्री गन्धकश्च पृथक्पृथक् ।
समांशं तान्विचूर्ण्यैव एतत्सर्वसमं पुरम् ॥ १,१५.३०८ ॥
शुद्धकोष्ठो लिहेत्प्रातस्तैलं ह्येरण्डसंभवम् ।
लोलयित्वा निष्कमात्रं वृद्धिः कर्षावधिर्भवेत् ॥ १,१५.३०९ ॥
एवं वर्षप्रयोगेण शीतवातव्रणास्तथा ।
पिडकागण्डमालाद्या विनश्यन्ति महारुजः ॥ १,१५.३१० ॥
द्वादशाब्दप्रयोगेण वज्रकायो भवेन्नरः ।
यद्यद्द्रव्यं च सात्म्यं स्यात्तत्तद्द्रव्येण वा भजेत् ॥ १,१५.३११ ॥
यस्य यस्य च रोगस्य यद्यद्भेषजमीरितम् ।
तैस्तैः सहैव सेवेत तत्तद्रोगहरं भवेत् ॥ १,१५.३१२ ॥
[२८. विजयाकल्पः; विजयोत्पत्तिः]
श्रीभैरवी ।
देवदेव जगन्नाथ सुरासुरनमस्कृत ।
पञ्चकृत्यप्रधानेश नमस्तुभ्यं परात्पर ॥ १,१५.३१३ ॥
सर्वेऽप्यौषधकल्पाश्च मत्प्रीत्या कथितास्त्वया ।
आश्चर्यं भूतदेवेश सद्यः सिद्धिप्रदायकम् ॥ १,१५.३१४ ॥
सुखसेव्यं सुखकरं ज्ञानदं भुक्तिदं शुचिम् ।
अस्मत्सायुज्यदं ब्रूहि प्रीत्या मम रसायनम् ॥ १,१५.३१५ ॥
ततः स्मितमुखो भूत्वा शङ्करो लोकशंकरः ।
श्रीभैरवः ।
देवि वक्ष्याम्यहं कल्पं स्पृहणीयं सुरासुरैः ॥ १,१५.३१६ ॥
सिद्धैश्च मुनिभिः स्त्रीभिः सर्ववर्णैश्च योगिभिः ।
बालैर्वृद्धैश्च रुग्णैश्च षण्ढैश्च बहुयोषितैः ॥ १,१५.३१७ ॥
शृणु त्वममृतोद्भूतं सावधानेन चेतसा ।
आग्नेयो मामकोऽंशः स्यात्सौम्यांशस्तावकः प्रिये ॥ १,१५.३१८ ॥
अग्नीषोमात्मकं सर्वमौषधं जलधौ सुराः ।
असुराः प्राक्षिपंश्चक्रुर्मथनं मन्दराद्रिणा ॥ १,१५.३१९ ॥
अतीव मथनात्तत्र देव्याग्नेयो ममांशकः ।
ज्वलन्महाविषं घोरं जातं हालाहलाख्यकम् ॥ १,१५.३२० ॥

तेन व्याकुलिता म्लाना गतवेगाः सुरासुराः ।
कृपया तन्मया सर्वं विषं च कबलीकृतम् ॥ १,१५.३२१ ॥
ततो देवा दितिसुता ममन्थुर्हृष्टमानसाः ।
ततो लक्ष्मीप्रभृतयः प्रादुरासंस्ततोऽमृतम् ॥ १,१५.३२२ ॥
तदुद्भूतं परं दिव्यं जरामरणकृन्तनम् ।
तदा तदा महाविष्णुर्मम हस्ताम्बुजेऽर्पयत् ॥ १,१५.३२३ ॥
त्रिवारं बिन्दवो दत्ताः परस्मै परमात्मने ।
पराशक्तियुजे पश्चात्तुभ्यं दत्ते मया प्रिये ॥ १,१५.३२४ ॥
पीतं त्वया च मे दत्तं मधुसूक्तमुदीर्य च ।
स्वीकृतं च मया कान्ते चिदानन्दात्मकामृतम् ॥ १,१५.३२५ ॥
सान्द्रानन्देन च मया स्फूत्कृतिर्लज्जया कृता ।
पतिता बिन्दवः सूक्ष्मास्तेभ्यो जाता महौषधिः ॥ १,१५.३२६ ॥
तामालोक्य शुभां दिव्यां मुदिताः पर्यपालयन् ।
मत्करांबुजनीतेन पीयूषेण विवर्धितम् ॥ १,१५.३२७ ॥
तस्मात्त्रिशूलसदृशपर्णं च पटलं बहु ।
तस्मान्महौषधिर्जाता मदादिष्टैर्गुणैर्वृता ॥ १,१५.३२८ ॥
कदाचिद्भैरवो दृष्ट्वा हृष्टस्तां प्रार्थयन्मया ।
दत्ता तस्मै भैरवोऽपि योगिनीभ्यः समर्पिपत् ॥ १,१५.३२९ ॥
ताश्च प्रीताः स्वभक्तेभ्यो भक्तेभ्यः प्रददुश्च ते ।
निन्युश्च भूतलं दिव्यामौषधिं सर्वसिद्धिदाम् ॥ १,१५.३३० ॥
[विजयाभेदाः]
श्रीभैरवी ।
किंनाम्नी सा कथंवीर्या सेवनीया कथं प्रभो ।
कीदृग्वर्णा कियद्भेदा कीदृग्रूपगुणा च सा ॥ १,१५.३३१ ॥
कथं वा सिद्धिदा सा स्यात्क्रमान्मे ब्रूहि वल्लभ ।
श्रीभैरवः ।
अथ तस्याश्चतुर्वर्णा युगधर्माश्रिताः प्रिये ॥ १,१५.३३२ ॥
शुक्लवर्णा कृतयुगे त्रेतायां शोणितप्रभा ।
द्वापरे पीतवर्णा च नीलवर्णा कलौ युगे ॥ १,१५.३३३ ॥
एकपर्णा त्रिपर्णा च पञ्चपर्णा मुनिच्छदा ।
दशपर्णा रुद्रपर्णा त्रयोदशदलान्विता ॥ १,१५.३३४ ॥
नवपर्णेति विज्ञेया भेदा ह्येते सुरेश्वरि ।
[विजयालक्षणम्]
स्त्रीरूपा सफला वल्ली पुंरूपा च द्रुमाकृतिः ॥ १,१५.३३५ ॥
सफला तु मदं मूर्छां सुखं सत्वं करोति च ।
योगवाहा तिक्तरसा सा कटुश्चूग्रगन्धिनी ॥ १,१५.३३६ ॥
शिवमूली च विजया भङ्गी गञ्जा विमर्दिनी ।
दिव्या सिद्धा सिद्धिदा च सिद्धमूली मनोन्मनी ॥ १,१५.३३७ ॥
मधुद्रवा चिदाह्लादा पशुपाशविनाशिनी ।
कालघ्नी सर्वरोगघ्नी नामान्येतानि पार्वति ॥ १,१५.३३८ ॥
शिवो मूलं भवेद्यस्याः शिवमूलीति कथ्यते ।
त्रिलोकानरिषड्वर्गान् विजयाख्या जयेदिति ॥ १,१५.३३९ ॥
तापत्रयादिदुःखानां भञ्जनाद्भङ्गिनी स्मृता ।
गञ्जेति मादयत्येषा मदिरास्थानकारिणी ॥ १,१५.३४० ॥
सदृशं मर्शनं यस्याः सैव प्रोक्ता विमर्शिनी ।

क्रीडामोदद्युतिमदकान्तिदत्वाच्च दिव्यका ॥ १,१५.३४१ ॥
स्वतःसिद्धेति सिद्धाख्या दिष्टसिद्धिप्रदायिका ।
सिद्धिदेति महासिद्धैः सा नीता सिद्धमूलिका ॥ १,१५.३४२ ॥
मनश्चिन्तितकार्याणां साधनाच्च मनोन्मना ।
संविदानन्ददत्वाच्च चिदाह्लादेति कीर्तिता ॥ १,१५.३४३ ॥
ब्रह्मरन्ध्रस्थितसुधाद्रावणाच्च मधुद्रवा ।
जन्तूनां पाशनाशत्वात्पशुपाशविनाशिनी ॥ १,१५.३४४ ॥
मृत्युञ्जयत्वात्कालघ्नी रोगघ्नी सार्थनामिका ।
[विजयावर्धनक्रमः]
वर्धनक्रममाचक्षे शृणु लोकशिवंकरि ॥ १,१५.३४५ ॥
शिलालोष्टादितो वर्ज्या वालुकाशर्करादितः ।
भूमिः कृष्णा पांसुला च मृदुला सकरीषका ॥ १,१५.३४६ ॥
भुजङ्गमांससहिता तत्र बीजानि वापयेत् ।
अहिवक्त्रेषु सत्वञ्चि स्निग्धानि च गुरूणि च ॥ १,१५.३४७ ॥
पुष्यार्के सिद्धयोगे वा श्रवणे शुक्लपक्षके ।
स्नातो लिप्ततनुर्गन्धैः कृतन्यासजपार्चनः ॥ १,१५.३४८ ॥
उदङ्मुखः प्राङ्मुखो वा ध्यात्वा च गुरुपादुकाम् ।
सक्षीराङ्कोलतैलेन जलेन परिषेचयेत् ॥ १,१५.३४९ ॥
अङ्कुरे च समुत्पन्ने सिञ्चेत्सघृतवारिणा ।
पर्णे कीटे समुत्पन्ने सामुद्रं वारि सेचयेत् ॥ १,१५.३५० ॥
ततोऽस्यां विततायां च शिरश्छित्त्वा च रन्ध्रयेत् ।
तत्र सूतं क्षिपेन्निष्कं निष्कं प्रत्येकमादरात् ॥ १,१५.३५१ ॥
निरोधयेत्तन्मुखानि कौशिकेन प्रयत्नतः ।
पुष्पिते फलिते मद्यमांसाम्बु च निषेचयेत् ॥ १,१५.३५२ ॥
एकैकपक्षपर्यन्तं क्षीरादि परिषेचयेत् ।
अस्यां बद्ध्वा जटामांसीं सक्षौद्रं वारि सेचयेत् ॥ १,१५.३५३ ॥
शेषं मद्येन वा वारा वर्धनीया महौषधिः ।
आदौ वा परमं मन्त्रं पश्चात्सेवनमन्त्रकम् ॥ १,१५.३५४ ॥
ओं क्षां क्षीं क्षूं क्षेत्रपालाय नमः सवीर्यं कुरु कुरु सिद्धिं देहि देहि स्वाहा ।
अयं स्थापनमन्त्रः ।
ओं श्रीं ह्रीं क्लीं यरलवशषसह अमृतेश्वरि अमृतं कुरु कुरु आं ह्रां क्रों स्वाहा ।
अयं सेवनमन्त्रः ।
फाल्गुने कृष्णपक्षस्य चतुर्दश्यां च साधकः ।
स्नातः शुद्धाम्बरो गन्धपुष्पभूषणसंयुतः ॥ १,१५.३५५ ॥
अर्चयेद्भैरवं तत्र नन्दीशं च क्रमेण च ।
मद्यमांसोपहारेण रक्तपीतसितासितैः ॥ १,१५.३५६ ॥
तन्तुभिर्वेष्टयेद्देवि तन्मन्त्रं च निगद्यते ।
ओं ग्लौं सौं ह्रीं खेचरभूचरदिव्ययोगिनि इमां रक्ष रक्ष सर्वशत्रुप्रमथिनि स्वाहा ।
अयं तन्तुबन्धनमन्त्रः ।
सहस्रं प्रत्यहं जप्यमघोरं मन्त्रनायकम् ॥ १,१५.३५७ ॥
एवं सप्तदिनं कार्यं पञ्चम्याममृतेश्वरीम् ।
ध्यात्वा कुन्देन्दुकर्पूरसंकाशां धवलांबराम् ॥ १,१५.३५८ ॥
सितमाल्यानुलेपाढ्यां मुक्ताभरणमण्डिताम् ।
दक्षिणेऽक्षगुणं वामे सुधापूर्णघटं ततः ॥ १,१५.३५९ ॥
तदधो दक्षिणे वामे संवित्पुस्तकधारिणीम् ।

तत्र स्थितां ततः कुर्याल्लवनं च समन्त्रकम् ॥ १,१५.३६० ॥
स्निग्धानि च सबीजानि सपर्णानि समाहरेत् ।
ओं क्लीं वं सं क्रौं शिवानन्दामृतोद्भवे त्रिभुवनविजये विजयं प्रयच्छ स्वाहा ।
अयं लावनमन्त्रः ।
मन्दातपे शुद्धदेशे शोषयेत्सप्तवासरम् ॥ १,१५.३६१ ॥
निक्षिपेन्नूतने भाण्डे तत्पर्णानि सुचूर्णयेत् ।
स्थालीद्वयं प्रताप्यादावेकस्यां प्रथमं पुटेत् ॥ १,१५.३६२ ॥
ततोऽपरस्यां पुटयेदेवं कार्यं मुहुर्मुहुः ।
यावत्सुपाकतां याति तज्ज्ञस्तावद्विपाचयेत् ॥ १,१५.३६३ ॥
गुञ्जोन्मत्तश्च वल्ली च तासां पर्णरसैर्मुहुः ।
स्थाल्यौ पृथक्पृथक्देवि सप्तधा सप्तधा प्रिये ॥ १,१५.३६४ ॥
मुण्डी ब्राह्मी कुमारी च वरी धात्री कटुद्वयम् ।
सुगन्धिका क्रमाज्ज्ञेया चैकैकपलमानतः ॥ १,१५.३६५ ॥
योजनीयाश्चूर्णिताश्च तत्सर्वसदृशा जयाः ।
सिता सर्वसमा योज्या तत्समं गोपयः क्षिपेत् ॥ १,१५.३६६ ॥
क्षीरमध्ये सितां क्षिप्त्वा तन्तुपाकं भवेद्भिषक् ।
मुण्डादिविजयान्तं च तच्चूर्णं तत्र निक्षिपेत् ॥ १,१५.३६७ ॥
लोलयित्वावतार्यैवं शैत्ये क्षौद्रं सितार्धकम् ।
निक्षिप्य गोघृतं तुल्यं क्षौद्रस्य परिमेलयेत् ॥ १,१५.३६८ ॥
पक्षद्वयं धान्यराशौ निधाय प्रत्यहं जपेत् ।
सहस्रं वा यथाशक्त्या महावटुकमन्त्रकम् ॥ १,१५.३६९ ॥
ह्रीं श्रीं महाकालाग्निभैरवाय सर्वसिद्धिमातृब्रह्मा लिङ्गितविग्रहाय सर्वापदां शोषकाय हुं फट्टम् ।
अयमग्निपाकमन्त्रः ।
मासादुद्धृत्य विधिवद्ग्रसेदामलकोपमम् ।
निवातमन्दिरे स्थायी क्षीरान्नाशी जितेन्द्रियः ॥ १,१५.३७० ॥
गुरूपदिष्टदेवं वा तत्त्वं वा परमं स्मरेत् ।
द्विकालं वा त्रिकालं वा यथा सेवाबलं क्रमात् ॥ १,१५.३७१ ॥
एवं त्रिवर्षाज्जरया वलीभिश्च विवर्जितः ।
भूचरीसिद्धिमाप्नोति जीवेत्त्रिशतवत्सरम् ॥ १,१५.३७२ ॥
वाराही त्रिफला चित्रमश्वगन्धा क्रमेण च ।
एवं द्वित्रिचतुर्भागमश्वगन्धादि योजयेत् ॥ १,१५.३७३ ॥
एतत्समा च विजया मधुना लोलयेत्सुखम् ।
आतपे पक्षपर्यन्तं स्थापयेत्प्रतितापयेत् ॥ १,१५.३७४ ॥
धात्रीफलोपमं सेव्यं सूर्याभश्चाष्टमासतः ।
साधको जायते वर्षाज्जरामरणवर्जितः ॥ १,१५.३७५ ॥
जपन्मन्त्रमिमं भक्त्या देहसिद्ध्यै सुरेश्वरि ।
ह्रीं श्रीं महाव्योमभास्कराय दीपिमातृकालिङ्गितविग्रहाय तेजसां निधिं कुरु कुरु ठम् ।
इति सूर्यपाकमन्त्रः ।
पलत्रयं जयायाश्च यष्टीचूर्णं पलद्वयम् ॥ १,१५.३७६ ॥
पलमेलाभद्रचूर्णं चित्रमूलं पलार्धकम् ।
श्रीखण्डचूर्णं च पलं चैतत्सर्वसमा सिता ॥ १,१५.३७७ ॥
स्वर्णचूर्णं च निष्कार्धं निष्कं च हिमवालुकम् ।
सर्वमाज्येन लुलितं ज्योत्स्नायां निक्षिपेत्सुधीः ॥ १,१५.३७८ ॥
शुक्लपञ्चमीमारभ्य पक्षान्तं शशिभावना ।
विधिवत्पूजयित्वा तु शुद्धकोष्ठो लिहेत्प्रिये ॥ १,१५.३७९ ॥

अस्य मन्त्रं पुनर्वच्मि सर्वसिद्धिप्रदायकम् ।
ह्रीं श्रीं महाशशाङ्ककिरणविस्फारभैरवाय अमृतेश्वरी मातृकालिङ्गितविग्रहाय विस्फुरणं कुरु कुरु हुं फट्टम् ।
इति चन्द्रपाकमन्त्रः ।
एवंविधस्य कल्पस्य त्रिविधं मन्त्रमीरितम् ॥ १,१५.३८० ॥
एकैकमन्त्रमयुतं पुरश्चरणमाचरेत् ।
वह्निपाकं चतुर्मासेष्वाषाढादिषु तन्यते ॥ १,१५.३८१ ॥
फाल्गुनादौ प्रकुर्वीत रविपाकं सुरेश्वरि ।
कार्त्तिकादिषु चन्द्रस्य पाकः स्यात्सिद्धिदायकः ॥ १,१५.३८२ ॥
मुण्डीचित्रकनिर्गुण्डीसहिता कुष्ठनाशिनी ।
ब्राह्मी कुमार्या युक्ता चेदमपस्मारविनाशिनी ॥ १,१५.३८३ ॥
जया वराव्योषयुता क्षयस्य क्षयकारिणी ।
जया कार्पासमत्स्याक्षीपत्रयुक्ता च पित्तनुत् ॥ १,१५.३८४ ॥
स्नुह्यर्कपत्रक्षारेण संयुता गुल्मशूलहृत् ।
वचादूर्वारजोयुक्ता ज्ञानवृद्धिप्रदायिनी ॥ १,१५.३८५ ॥
यष्टीगन्धकसंयुक्ता कुष्ठनुत्पुष्टिदायिनी ।
शाल्मलीपिच्छसंयुक्ता ससिता वीर्यवर्धिनी ॥ १,१५.३८६ ॥
पाठातिक्तात्रिकटुकैर्युक्ता कफगदापहा ।
शुक्लगुञ्जायुता नॄणां महाविषविनाशिनी ॥ १,१५.३८७ ॥
व्याघातचूर्णसहिता कुष्ठरोगविनाशिनी ।
आरण्यमरिचैरण्डयुक्ता वातविनाशिनी ॥ १,१५.३८८ ॥
एते द्वादशयोगाश्च मासेषु द्वादशेषु च ।
मन्त्रत्रयं च प्रजपेत्प्रतिमासेषु साधकः ॥ १,१५.३८९ ॥
साधकोऽनेन योगेन जरामरणवर्जितः ।
भवत्येव न सन्देहः सत्यं सत्यं वरानने ॥ १,१५.३९० ॥
रसत्रिगन्धकृष्णाभ्ररुद्राक्षस्वर्णभस्म च ।
जयारसेन संमर्द्यं पक्षमेकं तु भावयेत् ॥ १,१५.३९१ ॥
भूधरे संपुटे यन्त्रे पुटयेच्चूर्णयेत्ततः ।
एतच्चतुर्गुणजया शर्कराघृतसंयुता ॥ १,१५.३९२ ॥
सेव्या निष्कप्रमाणेन प्रातः सायन्तनेऽथवा ।
महावटुकमन्त्रं च जपेल्लक्षावधि प्रिये ॥ १,१५.३९३ ॥
षष्ठमासे भवेत्सिद्धिर्जरामरणवर्जितः ।
वर्षान्मनोजवगतिर्नागायुतबलो भवेत् ॥ १,१५.३९४ ॥
वज्रकायश्च सिद्धोऽसौ जीवेदाचन्द्रतारकम् ।
वटाङ्कुरस्य चूर्णेन सितामध्वाज्यसंयुता ॥ १,१५.३९५ ॥
त्रिपक्षात्सेवितजया सर्वलोकवशंकरी ।
अपामार्गरजोयुक्ता जया घृतसमन्विता ॥ १,१५.३९६ ॥
मन्त्रजापी भवेन्नित्यं षण्मासादमरो भवेत् ।
वरा सितजया चित्रस्त्रिवृता त्रिकटुर्वृषा ॥ १,१५.३९७ ॥
दूर्वा भृङ्गो मरीचश्च मधुकाजाजिसैन्धवम् ।
कर्पूरं च कचोरं च सर्वतुल्यं जयारजः ॥ १,१५.३९८ ॥
मधुत्रयेण लुलितं स्निग्धभाण्डे विनिक्षिपेत् ।
कर्षं प्रभाते सेवेत मण्डलात्सिद्धिभाग्भवेत् ॥ १,१५.३९९ ॥
स्याद्वर्षाद्देवसदृशो जीवेद्देवदिनत्रयम् ।
अश्वगन्धा वचा व्योषं जयाचूर्णं च तत्समम् ॥ १,१५.४०० ॥
लिहेत्त्रिमधुरैर्युक्तं त्रिवर्षाद्देवतासमः ।

गञ्जाचूर्णं चाष्टभागं चतुर्भागा च मुण्डिका ॥ १,१५.४०१ ॥
ब्राह्मीरजो द्विभागं स्याद्वाजिगन्धैकभागिका ।
द्विभागस्त्र्यूषणस्यापि वराभागद्वयं तथा ॥ १,१५.४०२ ॥
भागमेकं शिलायाश्च भागैकं गन्धकस्य च ।
रसराडेकभागः स्यात्तदर्धं स्वर्णभस्म च ॥ १,१५.४०३ ॥
तत्समं मौक्तिकं योज्यं मुक्तातुल्यं प्रवालकम् ।
मध्वाज्याभ्यां विलुलितं स्निग्धभाण्डे विनिक्षिपेत् ॥ १,१५.४०४ ॥
सप्तरात्रं धान्यपाकं कृत्वा लक्षत्रयं जपम् ।
निष्कमात्रवटी सेव्या क्षीराहारो जितेन्द्रियः ॥ १,१५.४०५ ॥
मण्डलात्सर्वरोगघ्नं त्वब्दात्पुष्पवदग्निभाक् ।
अर्धवर्षाद्भैरवः स्याज्जीवेदाचन्द्रतारकम् ॥ १,१५.४०६ ॥
त्रिसुगन्धिवराव्योषैः समांशा शिवमूलिका ।
मध्वाज्याभ्यां युता लेह्या कासघ्नी वह्निवर्धनी ॥ १,१५.४०७ ॥
मधुरप्रायभोजी चेत्सकासश्वासरोगजित् ।
हरिद्रया च सहिता सर्वमेहविनाशिनी ॥ १,१५.४०८ ॥
मण्डूकपर्ण्या सहिता वचया वाङ्मतिप्रदा ।
द्राक्षा सिता वल्लकी च खर्जूरी दुग्धपिण्डिका ॥ १,१५.४०९ ॥
सहिता कन्दलीनीरसैः सर्वस्वादुरिति स्मृतः ।
नारिकेलोदकैर्युक्ता कर्पूरसुरभीकृता ॥ १,१५.४१० ॥
सर्वस्वादुयुता सिद्धा पित्तघ्नी वीर्यवर्धनी ।
स्वादोश्चतुर्गुणं क्षीरं मधुपाकं यथा भवेत् ॥ १,१५.४११ ॥
तद्वस्त्रगालितं कृत्वा कर्पूरं तत्र निक्षिपेत् ।
एलां च सर्वमधुरं जयां च पिबतस्ततः ॥ १,१५.४१२ ॥
शतस्त्रीगमने शक्तिः पित्तहृत्पुष्टिवर्धनम् ।
समाम्बुपयसि क्षिप्त्वा जयाबीजं सवस्त्रकम् ॥ १,१५.४१३ ॥
अवशिष्टं चतुर्थांशं पचेन्मृद्वग्निना प्रिये ।
तद्दधीकृत्य विधिवन्मन्थयेत्तत उद्धरेत् ॥ १,१५.४१४ ॥
नवनीतं क्षिपेत्तत्र कर्पूरैला सिता मधु ।
पुष्ट्यायुष्यद्युतिकरं बलारोग्यविवर्धनम् ॥ १,१५.४१५ ॥
शतधा स्तन्यधौतं तच्छतधौतमितीरितम् ।
नागकेसरकच्छूरलवङ्गैलागरुं तथा ॥ १,१५.४१६ ॥
कर्पूरचन्दनमृगनाभितक्कोलकुङ्कुमम् ।
एतत्समं जयाबीजं गोक्षीरेण च मर्दयेत् ॥ १,१५.४१७ ॥
निष्कनिष्कप्रमाणेन विदध्याद्वटिकाः सुधीः ।
सुपुष्पवासिताः कृत्वा सताम्बूलं मुखे क्षिपेत् ॥ १,१५.४१८ ॥
प्रसेकमुखवैरस्यमलपूतिहरी शुचिः ।
सौगन्ध्यवैशद्यकरी चित्तहर्षप्रदायिनी ॥ १,१५.४१९ ॥
गोक्षीरे चार्धसलिले धातकीकुसुमं क्षिपेत् ।
जातीफलं नागरं च तत्सर्वसदृशां जयाम् ॥ १,१५.४२० ॥
क्षीरावशिष्टं वस्त्रेण गालयेत्त्रिमधुप्लुतम् ।
सिद्धयोग इति ख्यातो वृष्यायुष्यबलप्रदः ॥ १,१५.४२१ ॥
अजमोदयुता वापि निशारजोयुताथवा ।
तन्मात्रसेविता चूर्णा पामाकिट्टिभनाशिनी ॥ १,१५.४२२ ॥
जया तालयुता हन्यात्प्रदरं श्वयथुं तथा ।
कण्डूप्रशमनी ज्ञेया विजया शिलया युता ॥ १,१५.४२३ ॥

तैलेन भावयेत्स्थाल्यां जयां पश्चाच्च फाणिते ।
सान्द्रपाकं भवेद्धीमान् सघृतं भक्षयेत्सदा ॥ १,१५.४२४ ॥
साक्षात्पर्यायमदनोऽनेकयोषित्सुखप्रदः ।
पथ्या भल्लातकगुडं तिलाश्चैते समांशिनः ॥ १,१५.४२५ ॥
तत्समा विजया हन्ति गुदकीलांश्च षड्विधान् ।
यवानी जीरकयुगमजमोदा समांशिनः ॥ १,१५.४२६ ॥
एतत्समा च विजया सर्पिषा सेव्यतां बुधैः ।
सन्धिवातं भ्रमं छर्दिमुन्मादं मस्तकव्यथाम् ॥ १,१५.४२७ ॥
शर्करां मधु विश्वं च मागधीं तत्समां जयाम् ।
कृत्वाज्यगलितां गोलीमिमां पञ्चागदं विदुः ॥ १,१५.४२८ ॥
हृद्रोगप्लीहजठरभगन्दरनिकृन्तनीम् ।
सचित्रका वह्निकरी सवरा शूलभञ्जिनी ॥ १,१५.४२९ ॥
सव्योषा वातसंहर्त्री पित्तघ्नी शर्करायुता ।
श्वेताद्रिकर्णिकाबीजं विजयां खरमूत्रतः ॥ १,१५.४३० ॥
नस्येनापस्मृतिहरा भूतप्रेतादिभञ्जनी ।
जयाचूर्णं समध्वाज्यं भजेदामलकोपमम् ॥ १,१५.४३१ ॥
वाक्पाटवं वीर्यवृद्धिं कुरुते विजया परम् ।
मधुनाज्येन वा धात्र्या मुस्तया स्वरसेन वा ॥ १,१५.४३२ ॥
उपयुक्ता जया रात्रौ दृक्प्रसादकरी नृणाम् ।
यौवनस्थैर्यमातन्यादायुष्यं परमं भवेत् ॥ १,१५.४३३ ॥
गुडोऽभया च विजया दुर्नामकुलभञ्जनी ।
जयाकाष्ठेन दन्तानां शोधनं दन्तदार्ढ्यकृत् ॥ १,१५.४३४ ॥
तैलाक्तविजयाकाष्ठाद्रसज्ञाशोधनं यदि ।
जिह्वापूतिमलान् हन्याद्यथार्था स्याद्रसज्ञता ॥ १,१५.४३५ ॥
नालिकेरभवक्षीरे पचेन्मृद्वग्निना जयाम् ।
त्रिमध्वक्तां पिबेद्रात्रौ ततो रामाशतं भजेत् ॥ १,१५.४३६ ॥
शुण्ठी हरीतकी तुल्ये तत्समा च जया तथा ।
सर्वतुल्या सिता योज्या योगस्त्रैलोक्यमोहनम् ॥ १,१५.४३७ ॥
त्र्यूषणं मधुकं चव्यं चातुर्जातं फलं वरा ।
गोस्तनी पिप्पलीमूलं समांशं परिकल्पयेत् ॥ १,१५.४३८ ॥
प्रियालमज्जा तैस्तुल्या चैतत्सर्वसमा जया ।
त्रिगुणेन गुडे पक्वे तेषां चूर्णं क्षिपेच्छिवे ॥ १,१५.४३९ ॥
आलोड्य मोदकान्कुर्यात्कामी कन्दर्पमोदकान् ।
सर्वरोगोपशमनांस्त्रिदोषघ्नान्बलप्रदान् ॥ १,१५.४४० ॥
वृष्यान्पुष्टिकरान् धीमांस्त्रिसंध्यमनुवासरम् ।
भक्षयेच्छुद्धकोष्ठे तु त्रिवर्षात्सिद्धिरीदृशी ॥ १,१५.४४१ ॥
सदैवमुपयुञ्जानो जरामरणवर्जितः ।
मरीचं पिप्पली शुण्ठी त्वगेलां पत्रकं समम् ॥ १,१५.४४२ ॥
एतैश्च विजया तुल्या समगोधूमपिष्टकैः ।
द्विगुणेन गुडेनैव मोदकान्परिकल्पयेत् ॥ १,१५.४४३ ॥
कर्षमात्रान्प्रतिदिनं भक्षयेन्नियतेन्द्रियः ।
बलपुष्टियुतो वर्षाद्वलीपलितवर्जितः ॥ १,१५.४४४ ॥
चणकैर्माषकैर्मुद्गैराढकैर्वा तिलैस्तथा ।
निष्पावैर्वितुषैराज्यभर्जितैर्गुडसंयुतैः ॥ १,१५.४४५ ॥
सत्रिजातैश्च सव्योषैः सजीरैः समभागतः ।

संयोज्य विजयां कुर्यान्मोदकान् कर्षमात्रकान् ॥ १,१५.४४६ ॥
एकैकं प्रत्यहं खादेत्सायं प्रातर्विशुद्धधीः ।
सर्वरोगहरान् वृष्यान् बुद्धीन्द्रियबलप्रदान् ॥ १,१५.४४७ ॥
तक्कोलं चन्दनं सेव्यं कर्पूरं नागकेसरम् ।
एलालवङ्गमधुकं पिप्पली मरिचं तथा ॥ १,१५.४४८ ॥
सर्वैः समांशा विजया सिता सर्वसमा शुभा ।
पञ्चबाणाभिधानोऽयं चूर्णं सर्वरुजापहम् ॥ १,१५.४४९ ॥
द्वादशाब्दोपयोगेन वलीपलितहा भवेत् ।
वरा त्रिजातकश्चन्द्रखण्डबीजं कटुत्रयम् ॥ १,१५.४५० ॥
एतैः समा सिद्धमूली सर्वतुल्या च शर्करा ।
मधुना लोलिता लीढा दीपनी देहसिद्धिदा ॥ १,१५.४५१ ॥
शतावर्युत्तमाव्योषमुसलीद्विगुणान्वितः ।
जया समा समसिता वृष्यायुष्यबलप्रदा ॥ १,१५.४५२ ॥
आयुर्घृतयुता धत्ते प्रातः शुण्ठीसितायुता ।
क्षीरसिद्धा जया वृष्या बल्या च निशि सेविता ॥ १,१५.४५३ ॥
मधुना सेविता भुक्तेः पूर्वं सा वाजिगन्धया ।
बलपुष्टिकरा सिद्धा रसायनमिदं परम् ॥ १,१५.४५४ ॥
निस्त्वङ्मर्कटिकाबीजं माषचूर्णं समा जया ।
क्षीरे च माहिषे पक्त्वा रात्रौ सेव्यातिवृष्यकृत् ॥ १,१५.४५५ ॥
विधिवच्छाल्मलीपिच्छवरीभृङ्गामृतारसैः ।
कान्तपात्रे प्रतिरसैः सप्तधा सप्तधातपे ॥ १,१५.४५६ ॥
कुर्वीत भावनां पश्चाच्चूर्णयेत्तत्समां जयाम् ।
मधुना च लिहेत्कर्षं जरामरणनाशिनी ॥ १,१५.४५७ ॥
पञ्चाङ्गं शाल्मलेर्ग्राह्यं तत्समं विजयारजः ।
मध्वाज्याभ्यां लिहेत्कर्षं वलीपलितखण्डनम् ॥ १,१५.४५८ ॥
अथ पुष्यरवौ हस्तिकन्दं ग्राह्यं समूलकम् ।
अनातपे च संशोष्य चूर्णयेत्तत्समां जयाम् ॥ १,१५.४५९ ॥
मधुनालोडयेत्पश्चात्स्निग्धभाण्डे विनिक्षिपेत् ।
एकविंशद्दिनं धान्यराशौ स्थाप्यं तत उद्धरेत् ॥ १,१५.४६० ॥
प्रत्यहं पलमेकं तु भक्षयेन्मण्डलद्वयम् ।
कट्वम्लौ वर्जयेत्तावन्मृदु यूषान्नभोजनम् ॥ १,१५.४६१ ॥
मधुरं लघु पित्तघ्नं पललं जाङ्गलं हितम् ।
बालार्काभश्च मतिमान् पिकालापो बलान्वितः ॥ १,१५.४६२ ॥
शतयोजनपर्यन्तं दिनेनैकेन गच्छति ।
मुण्डीचूर्णं जयाचूर्णं समं मधुघृतान्वितम् ॥ १,१५.४६३ ॥
कर्षं प्रातः प्रतिदिनं लिहेदायुष्यपुष्टिकृत् ।
द्वादशाब्दं तु सेवेत भुञ्जीत घृतसंयुतम् ॥ १,१५.४६४ ॥
गोक्षीरं षष्टिकान्नं च लोणाम्लक्षारहीनकम् ।
भवेद्वलिजराहीनो दृश्यः स्याल्लघुदेहवान् ॥ १,१५.४६५ ॥
पत्रं पुष्पं फलं श्वेतब्रह्मवृक्षस्य चाहरेत् ।
छायायां शोषयेच्चूर्णं तत्समं विजयारजः ॥ १,१५.४६६ ॥
मध्वाज्याभ्यां लिहेत्कर्षमब्दाद्यौवनमाप्नुयात् ।
जयाबीजानि च तिलान्भर्जयेत्सगुडान्प्रिये ॥ १,१५.४६७ ॥
विधाय लड्डुकान्प्रातर्भक्षयेद्गोघृताप्लुतान् ।
मनःसंमोहनकरान् कान्तासङ्गमसाधकान् ॥ १,१५.४६८ ॥

पाकार्हव्यञ्जनैः सार्धं जयापत्राणि पाचयेत् ।
भर्जयेद्गोघृतेनैव गुडैलातीक्ष्णजीरकैः ॥ १,१५.४६९ ॥
संस्कृतः सुखसेव्योऽयं नाम्ना व्यञ्जनयोगराट् ।
तण्डुलान्विजयाबीजं मुद्गं च विगतत्वचः ॥ १,१५.४७० ॥
सुरन्ध्रनालिकेरान्तः क्षिपेद्रन्ध्रं निरोधयेत् ।
बहिर्गोमयमृल्लिप्तं शोषयेन्मृदुवह्निना ॥ १,१५.४७१ ॥
पाचयेन्नालिकेरस्थं समज्जं तत्समाहरेत् ।
मधुत्रयेण सहितं भुञ्जीत च यथाबलम् ॥ १,१५.४७२ ॥
महावृष्यकरो योगः षण्ढानामपि पुंस्त्वदः ।
गोक्षीरे विजयाबीजं वस्त्रबद्धं विनिक्षिपेत् ॥ १,१५.४७३ ॥
अर्धावशिष्टे तत्क्षीरे व्यजनानिलशीतले ।
वाराहीमर्कटीबीजकर्पूरैलालवङ्गकम् ॥ १,१५.४७४ ॥
त्रिमधु त्रिसुगन्धं च निक्षिपेच्च समांशतः ।
एकीकृत्य पिबेद्रात्रौ महावृष्यकरः परः ॥ १,१५.४७५ ॥
वाराहीयोग एषोऽयं षण्ढत्वादिनिकृन्तनः ।
क्षीरशृतं च तद्बीजं पेषयेच्छिलया तनु ॥ १,१५.४७६ ॥
रसेनोत्तमकन्यायाः कांस्यपात्रे प्रलेपयेत् ।
तीव्रातपे धारयेत्तं तस्मात्स्नेहं समाहरेत् ॥ १,१५.४७७ ॥
स्नेहान्तरयुजा तेन नस्यकर्म समाचरेत् ।
जत्रूर्ध्वगतरोगांश्च कासश्वासादिकान्हरेत् ॥ १,१५.४७८ ॥
यस्य यस्य च रोगस्य विहितं यद्यदौषधम् ।
तेन तेन युता सिद्धा तत्तद्रोगहरा भवेत् ॥ १,१५.४७९ ॥
गुणा मया च कथ्यन्ते तान् शृणुष्व महेश्वरि ।
जिह्वार्द्रता मनःसौख्यं तृप्तिः संकल्पसिद्धता ॥ १,१५.४८० ॥
वाक्पटुत्वं मुखोल्लासो भवेद्व्यायामपेशलः ।
स्नानध्यानार्चनपरो मधुरास्वादलोलुपः ॥ १,१५.४८१ ॥
मृष्टान्नाशी शीतवारि पिबन्नालापतत्परः ।
यथेष्टालोकनपरः कामिनीसङ्गलोलुपः ॥ १,१५.४८२ ॥
सर्वभूतदयाविष्टस्तत्त्वज्ञानविलीनधीः ।
कविताख्यानविज्ञानोपन्यासैकपरायणः ॥ १,१५.४८३ ॥
वादेषु विजयं कुर्यात्सङ्ग्रामे मल्लसङ्गरे ।
अन्येऽपि बहवः सन्ति गुणास्त्वन्यत्र दुर्लभाः ॥ १,१५.४८४ ॥
[विजयाव्यापत्सिद्धी]
एतस्याः सिद्धिमूल्याश्च भक्षणे त्वधिके सति ।
जायन्ते हि विकाराश्च शृणु तान्परमेश्वरि ॥ १,१५.४८५ ॥
आरक्तलोचनः शुष्कजिह्वौष्ठपुटतालुकः ।
प्रथमे शुष्कनासाग्र उष्णकृच्छ्वासपार्श्वयोः ॥ १,१५.४८६ ॥
द्वितीयेऽक्षिनिमीलत्वं पटलीकृतविग्रहः ।
तृतीये पादहस्ताक्षिदाहकृद्गद्गदध्वनिः ॥ १,१५.४८७ ॥
चतुर्थे क्षुत्पिपासार्तो निद्राघूर्णितलोचनः ।
पञ्चमे गद्गदा वाणी स्वप्रोक्तं विस्मरेत्क्षणात् ॥ १,१५.४८८ ॥
षष्ठे विकारे संजाते चित्तापस्मृतिकारणम् ।
सप्तमे करसादश्च देहे च रुचिरायते ॥ १,१५.४८९ ॥
महोर्मय इवोल्लासा जायन्ते च पुनः पुनः ।
अष्टमे दिग्भ्रमः शान्तिर्भ्रूभङ्गश्चातिरोदनम् ॥ १,१५.४९० ॥

नवमे श्रोत्रहुङ्कारो मूर्च्छापस्मृतिकातरः ।
उद्गारः कूजनं भूमौ लुठनं दैन्यभाषणम् ॥ १,१५.४९१ ॥
अन्यथा भाषणं गुह्यं ब्रवन्सौख्यं न वेत्ति च ।
दुःखं च मृदुकल्पोऽयं स्विन्नाङ्गश्च भवेत्प्रिये ॥ १,१५.४९२ ॥
अन्ये विकारा बहवः सन्ति तेषां चिकित्सनम् ।
विरेकोऽम्लरसः शीर्षस्नानं शीताम्बुना ततः ॥ १,१५.४९३ ॥
चन्दनोशीरकर्पूरहिमाम्बुपरिलेपनम् ।
सुगन्धिशीतलीभूतमालालंकृतविग्रहः ॥ १,१५.४९४ ॥
मल्लिकाजातिचाम्पेयकमलोत्पलधारिणा ।
मृणालवलयोद्भासिशय्या च कदलीदलम् ॥ १,१५.४९५ ॥
कर्पूरैलालवङ्गाश्च तक्कोलं कटुकीफलम् ।
चर्वयेत्सह ताम्बूलं तालवृन्तेन वीजनम् ॥ १,१५.४९६ ॥
सूक्ष्मकाषायवस्त्राणि सुगन्धीनि च धारयेत् ।
कङ्कणे चन्द्रमापश्यञ्ज्योत्स्नायां द्विमुहूर्तकम् ॥ १,१५.४९७ ॥
पीनोत्तुङ्गकुचद्वन्द्वगाढालिङ्गनतत्परः ।
शयीत शर्कराक्षीरघृतमांसरसादिकम् ॥ १,१५.४९८ ॥
पानकं मुद्गयूषं वा पेयं वा शार्करं मधु ।
केवलं शयनं कुर्याद्यद्यच्छीतं भजेच्च तत् ॥ १,१५.४९९ ॥
[२९. कञ्चुकीकल्पः]
अथ वक्ष्यामि देवेशि कञ्चुकीकल्पमुत्तमम् ।
सप्ताष्टच्छदसंयुक्ता मूलकोपमकन्दुका ॥ १,१५.५०० ॥
क्षीरान्विता मेषशब्दाज्जायन्ते पल्लवान्यपि ।
सा ज्ञेया पीतरक्ताभकाण्डा श्वेततनुः प्रिये ॥ १,१५.५०१ ॥
आषाढे कार्त्तिके मासे चैत्यदेशे प्ररोहति ।
पिष्टां पलाष्टके क्षीरे त्वङ्गुष्ठद्वयमात्रकम् ॥ १,१५.५०२ ॥
कुटीप्रवेशं कृत्वादौ पीत्वा पश्चात्पयः पिबेत् ।
जीर्णे क्षीरं पुनः पेयं पेयां वा स्नेहवर्जिताम् ॥ १,१५.५०३ ॥
स्तोकोष्णलवणाम्लां तां न स्पृशेच्छीतलं जलम् ।
एवं सप्तदिनं सेव्यं खिलकुष्ठं विनाशयेत् ॥ १,१५.५०४ ॥
तृतीये सप्तरात्रेण नश्यन्ति निखिला गदाः ।
तृतीये सप्तरात्रेण भुजङ्गः कञ्चुकं तथा ॥ १,१५.५०५ ॥
त्वक्केशनखदन्तांश्च स त्यजेत्स्वयमेवं हि ।
जीवेत्पञ्चशतं वर्षं रूपमेधाबलान्वितः ॥ १,१५.५०६ ॥
चूर्णितं कञ्चुकीकन्दं तत्क्षीरेण विभावितम् ।
कर्षं गोक्षीरकुडुबैः पिष्ट्वा खण्डं पलं क्षिपेत् ॥ १,१५.५०७ ॥
नखकेशास्थिदन्तस्थान् रोगान्पानेन नाशयेत् ।
कञ्चुक्यास्तु पलं चूर्णं प्रस्थगोक्षीरवापितम् ॥ १,१५.५०८ ॥
चूर्णशेषं पचेत्तावद्गोघृतेन च भर्जयेत् ।
सितया मधुना लिह्यात्क्षीरान्नो मण्डलावधि ॥ १,१५.५०९ ॥
महागजबलोपेतो द्विरष्टवयसोज्ज्वलः ।
जीवेत्पञ्चशतं वर्षान्कामिनीकेलिमन्मथः ॥ १,१५.५१० ॥
[३०. कुक्कुटीकल्पः]
अथ वक्ष्यामि ते देवि कुक्कुटीकल्पमुत्तमम् ।
सुरासुरैर्मथ्यमानादब्धेरमृतबिन्दवः ॥ १,१५.५११ ॥
पतितास्तेभ्य उत्पन्ना कुक्कुटी निर्जरत्वदा ।

पत्त्रैर्मरकतच्छायैः खर्जूरीदलसन्निभैः ॥ १,१५.५१२ ॥
कन्दैश्च कुक्कुटास्याभैरीषत्कटुकपिच्छिलैः ।
लक्षिता कुक्कुटी ज्ञेया महारोगहरा परा ॥ १,१५.५१३ ॥
विशेषाद्वातरोगांश्च गुदकीलविषाणि च ।
घृतेन भर्जयेत्कन्दं शुद्धकोष्ठः कुटीं व्रजेत् ॥ १,१५.५१४ ॥
गुञ्जामात्रं प्रगे सेव्यं धारोष्णं गोपयः पिबेत् ।
जीर्णे क्षीरान्नमश्नीयाज्जलान्नं वा विचक्षणः ॥ १,१५.५१५ ॥
यथाबलं प्रतिदिनं वर्धयेन्मण्डलावधि ।
जत्रूर्ध्वरोगान् पाण्ड्वादीन् क्षयकुष्ठादिकान्हरेत् ॥ १,१५.५१६ ॥
स्थिरकेशद्विजनखो वलीपलितवर्जितः ।
जीवेद्द्विशतवर्षं च मेधाधैर्यबलान्वितः ॥ १,१५.५१७ ॥
शुक्लप्रतिपदारभ्य चैकैकं घृतवर्जितम् ।
कन्दं प्राश्नीय पर्वान्तं वर्धयेत्तद्यथाबलम् ॥ १,१५.५१८ ॥
तथैवासितपक्षादि नूनं कुर्याद्दिनाद्दिनम् ।
भुक्तेः प्रागुपयुञ्जीत पश्चात्क्षीराशनो भवेत् ॥ १,१५.५१९ ॥
दर्शान्तमेवं सेवेत प्रतिमासं पुनः पुनः ।
त्रिवर्षात्सिद्धिमाप्नोति जीवेद्वर्षायुतत्रयम् ॥ १,१५.५२० ॥
कुक्कुटीकन्दचूर्णं च गोक्षीरेण यथाबलम् ।
जीर्णे पिबेद्यवागूंश्च मासात्सिद्धिः प्रजायते ॥ १,१५.५२१ ॥
नानाविधगदान्हन्ति जीवेद्वर्षशतद्वयम् ।
[३१. सोमलताकल्पः]
अथ सोमलताकल्पं दिव्यं वक्ष्यामि शङ्करि ॥ १,१५.५२२ ॥
सोमः स्वयं मनुष्याणां हितायावनिमण्डलम् ।
प्रतिपेदे च तन्नाम्ना ख्याता सोमलता भुवि ॥ १,१५.५२३ ॥
चतुर्विंशतिधा प्रोक्ता स्थाननामादिभेदतः ।
पूर्वप्रतिपदारभ्य पूर्णान्तं प्रतिवासरम् ॥ १,१५.५२४ ॥
एकैकं जायते पर्णं तथैवापरपक्षके ।
पतति क्रमशः पर्णं दर्शे सैकावशिष्यते ॥ १,१५.५२५ ॥
पूर्णमास्यां पञ्चदशछ्दोपेता सदा भवेत् ।
नानाविधदलोपेताश्छदपञ्चदशात्मिकाः ॥ १,१५.५२६ ॥
क्षीरयुक्तलताकन्दाः सर्वाः सोमलताः स्मृताः ।
तुषाराद्रावर्बुदे च सह्ये देवगिरौ तथा ॥ १,१५.५२७ ॥
श्रीपर्वते च मलये महेन्द्रे पारियात्रके ।
विन्ध्ये देवसहेऽद्रौ च देवसूतह्रदे तथा ॥ १,१५.५२८ ॥
वितस्तोत्तरतीरेऽस्ति प्रभासाख्यो महीधरः ।
सिन्धुह्रदोऽस्ति पाञ्चाले चन्द्रमाः प्लवतेऽत्र च ॥ १,१५.५२९ ॥
तत्प्रदेशे च वाप्यस्ति त्वंशुमानथ मुञ्जवान् ।
दिव्यं सरोऽस्ति काश्मीरे ख्यातं क्षुद्रकमानसम् ॥ १,१५.५३० ॥
औष्णिक्त्रैष्टुभगायत्रो जागतस्त्र्यैष्टुभस्तथा ।
अन्याश्च पञ्च सन्त्यत्र मृगाङ्काभासवल्लिकाः ॥ १,१५.५३१ ॥
भाग्यहीना न पश्यन्ति देवाग्निद्विजनिन्दकाः ।
सर्वसोमलतानां च विधिरेक उपासने ॥ १,१५.५३२ ॥
चन्द्रमाः स्वर्णसच्छायो विशदो रजतप्रभः ।
तौ रंभाकृतिकन्दौ तु चन्द्रमास्तु जलेचरः ॥ १,१५.५३३ ॥
लशुनच्छदनः पुण्यो मुञ्जवान्गरुडाहृतः ।

श्येनच्छदनिभः पाण्डुः सर्पनिर्मोकवत्सदा ॥ १,१५.५३४ ॥
लम्बते पादपाग्रेषु विशेषं लक्षणं स्मृतम् ।
अंशुमांश्चन्द्रमाश्चैव शोनकी कर्णकोपमः ॥ १,१५.५३५ ॥
दूर्वासोमौ जाग्रतश्च कन्याभासश्च शाक्वरः ।
करवीरस्तालवृन्तः प्रतानश्च गवीनसः ॥ १,१५.५३६ ॥
पथ्यः सोमप्रदश्चैव गरुडाहृतनामकः ।
अयःप्रभोऽग्निष्टोमः स्यादौक्थ्यो रेवतकस्तथा ॥ १,१५.५३७ ॥
अंशुमान्सर्वमुख्यः स्यादस्य सेवां प्रचक्षते ।
एतद्रसायनज्ञैश्च प्रीतैर्मन्त्रविदुत्तमैः ॥ १,१५.५३८ ॥
भिषग्वरैः सुहृद्भिश्च संयुक्तः शुद्धकोष्ठवान् ।
कुटीं प्रविश्य निवृतां पुण्यर्क्षे शुभवासरे ॥ १,१५.५३९ ॥
पूर्वेद्युर्देवि विप्राग्निसिद्धसामायिकान्गुरून् ।
योगिनीश्च कुमारीश्च बालकान् सिद्धसन्ततिम् ॥ १,१५.५४० ॥
गन्धपुष्पाक्षताद्यैश्च धूपैर्दीपैश्च पूजयेत् ।
भोजनैर्दक्षिणाभिश्च तोषयेच्च विधानतः ॥ १,१५.५४१ ॥
क्षीरमंशुमतः कन्दात्स्वर्णसूच्या विभेदितात् ।
हेमपात्रे समादाय तत्क्षीरं कुडुबं पिबेत् ॥ १,१५.५४२ ॥
सकृदेव पिबेत्सर्वं पीतशेषं जले क्षिपेत् ।
दिवा सुहृद्भिर्विहरेद्वाग्यतश्च वशी भवेत् ॥ १,१५.५४३ ॥
द्रव्यदेहोपदेशज्ञैः कुट्यामास्तिकबुद्धिभिः ।
उपवासी जपरतः सायं सन्ध्यार्चनापरः ॥ १,१५.५४४ ॥
प्रसुप्याद्दर्भशयने कृष्णाजिनतिरोहिते ।
पिपासितोऽपि पानीयं शीतलं मात्रया पिबेत् ॥ १,१५.५४५ ॥
प्रभाते च समुत्थाय कृतप्रागेतनक्रमः ।
विना सोमं तथासीत जीर्णे क्षीरे सशोणितम् ॥ १,१५.५४६ ॥
पित्तावसानं सकृमि वमनं भवति प्रिये ।
शृतशीतं च गोक्षीरं सायं पेयं सुसाधकैः ॥ १,१५.५४७ ॥
विरेको जायते तस्य तृतीयदिवसे महान् ।
तेन प्रमुच्यते मर्त्यः पूर्वकैर्दुष्टभोजनैः ॥ १,१५.५४८ ॥
स्नानं कुर्याद्दिनान्ते स शृतशीतं पिबेत्पयः ।
दर्भशय्यां सुमक्षौमछादितायां शयीत सः ॥ १,१५.५४९ ॥
ततश्चतुर्थे दिवसे श्वयथुस्तस्य जायते ।
अङ्गेभ्यः क्रिमयो बह्व्यः सूक्ष्मा निर्यान्ति तद्दिने ॥ १,१५.५५० ॥
गोविड्भस्ममयीं शय्यां शोधितां मृदुलां सुधीः ।
अधिशेत पिपासा चेच्छृतशीतं जलं पिबेत् ॥ १,१५.५५१ ॥
सायं गव्यं शृतं क्षीरं पीत्वा शिष्यसुहृद्वृतः ।
यथासुखं प्रसुप्याच्च निशि पञ्चमषष्ठयोः ॥ १,१५.५५२ ॥
अह्नो विधिरयं कार्यो द्विकालं पाययेत्पयः ।
सप्तमे दिवसे देहस्त्वगस्थिस्नायुशेषितः ॥ १,१५.५५३ ॥
मांसरक्तविहीनः स्यात्सोमपः प्राणशेषितः ।
सुखोष्णैः सिञ्चयेत्क्षीरैर्गव्यैरेतस्य विग्रहम् ॥ १,१५.५५४ ॥
श्रीखण्डतिलयष्ट्याह्वैः पिष्टैस्तं परिलेपयेत् ।
क्षीराशी कटशायी च क्षौममय्यां शयीत सः ॥ १,१५.५५५ ॥
अष्टमेऽह्नि नखं श्मश्रु त्वक्केशा रदना अपि ।
पतन्ति सद्योजातस्य देहवज्जायते वपुः ॥ १,१५.५५६ ॥

क्षीराशी स्यात्तु नवमेऽणुतैलाभ्यङ्गमाचरेत् ।
स्नायात्सोमलताकल्पं क्वथितेन जलेन च ॥ १,१५.५५७ ॥
ततस्तु नवमे त्वक्च स्थिरतां प्रतियाति च ।
तथैवैकादशदिनं प्रारभ्य षोडशं दिनम् ॥ १,१५.५५८ ॥
अभ्यङ्गं नाचरेत्स्नानं सोमवल्ककषायजम् ।
दिनात्सप्तदशादूर्ध्वं चतुर्विंशतिकावधि ॥ १,१५.५५९ ॥
स्थिरत्वं त्वगवाप्नोति दन्ता वज्रनिभोज्ज्वलाः ।
स्थिरा दृढतराः स्निग्धा जायन्ते समपङ्क्तयः ॥ १,१५.५६० ॥
पञ्चविंशत्तमे घस्रे षष्ट्यन्नं गोपयोऽन्वितम् ।
भुञ्जीत नखरास्तस्य शुकचञ्चुनिभोज्ज्वलाः ॥ १,१५.५६१ ॥
त्वगस्य जायते स्निग्धा नीलोत्पलसमद्युतिः ।
सुलक्षणातसीपुष्पवैडूर्याम्बुदसन्निभा ॥ १,१५.५६२ ॥
मासादनन्तरं कुर्यात्तिलोशीरकचन्दनैः ।
पिष्टैः प्रलेपनं पश्चात्पयसा स्नपनक्रिया ॥ १,१५.५६३ ॥
रोहन्ति चिकुरास्तस्य भ्रमराञ्जनसन्निभाः ।
माससप्तदिनादूर्ध्वं द्वितीयावरणस्थितिः ॥ १,१५.५६४ ॥
पुनस्तृतीयावरणे तिष्ठेत्सिद्धो मुहूर्तकम् ।
कुटीं विशेद्यथापूर्वं बलातैलाज्यलेपनम् ॥ १,१५.५६५ ॥
कुर्याद्दिनत्रयं पश्चाच्चत्वारिंशद्दिनात्परम् ।
करीषभस्मनोद्धूल्य देहं कल्कैर्विलेपयेत् ॥ १,१५.५६६ ॥
अजशृङ्गीत्वगुद्भूतैः स्नानं कोष्णजलेन च ।
चन्दनोशीरकर्पूरैर्लिप्ताङ्गो मुद्गधात्रिजैः ॥ १,१५.५६७ ॥
यूषैः षष्ट्यन्नमश्नीयात्क्षीरैस्त्रिमधुसंयुतैः ।
घृतेन वा द्वितीये तु वसेदावरणे सुधीः ॥ १,१५.५६८ ॥
दिवसं पञ्चकं तत्र किंचिद्वातातपे सुधीः ।
मध्ये मध्ये च सेवेत तथैव दशवासरम् ॥ १,१५.५६९ ॥
सोढवातातपस्तस्मात्तृतीयावरणं भजेत् ।
एकविंशद्दिनं तिष्ठन् स्थिरीकृतमनाः समुत् ॥ १,१५.५७० ॥
ततो द्वाविंशतिदिने देहसिद्धिः प्रजायते ।
बहिर्निर्गत्य च तदा पूजयेद्भैरवं पुरा ॥ १,१५.५७१ ॥
गुर्वग्निद्विजसिद्धानां चेतांसि परिमोदयन् ।
सर्वत्र स्वेच्छया नित्यं विहरेद्दुःखवर्जितः ॥ १,१५.५७२ ॥
वर्षायुतं नवं दिव्यं वपुर्धत्ते सुकान्तिमत् ।
बलं गजसहस्राणां भवेदस्य न संशयः ॥ १,१५.५७३ ॥
विषाग्नितोयशस्त्रास्त्रमृगादिभ्यो भयं न हि ।
ब्रह्मलोकादिलोकेषु विचरेत्स्वेच्छया सदा ॥ १,१५.५७४ ॥
कान्त्या द्वितीयश्चन्द्रः स्याद्रूपेण मकरध्वजः ।
सर्वाह्लादकरः शान्तः सषडङ्गपदक्रमान् ॥ १,१५.५७५ ॥
वेदान्वेत्ति च शास्त्राणि भूलोकगतिनिर्जरः ।
ह्रस्वशाखाप्रतानायाः सोमवल्ल्याः समाहरेत् ॥ १,१५.५७६ ॥
काण्डान्द्वात्रिंशतिं स्वर्णपात्रे पुण्ये यथाविधि ।
रौप्ये पात्रेऽथवा योज्यं द्विपलं गोपयस्तथा ॥ १,१५.५७७ ॥
सोमवल्लीरसं तद्वन्मेलयित्वा पिबेत्ततः ।
कुटीप्रवेशः पथ्यं च पूर्ववत्समुदाहृतम् ॥ १,१५.५७८ ॥
अणिमाद्यष्टसिद्धिः स्यात्स साक्षादमरो भवेत् ।

[३२. गुडूचीकल्पः]
अथामृतलताकल्पं वक्ष्यामि शृणु भैरवि ॥ १,१५.५७९ ॥
साक्षात्सुधामृतलता व्याधिजन्मजरापहा ।
अमृतायाः शतपलं त्रिप्रस्थं मधुरत्रयम् ॥ १,१५.५८० ॥
चूर्णं लिहेत्कर्षमात्रमेवं संवत्सरावधि ।
सर्वव्याधिप्रशमनं जीवेच्च शरदः शतम् ॥ १,१५.५८१ ॥
अथ छिन्नरुहाचूर्णं पञ्चविंशत्पलं सिता ।
द्विगुणा च तवक्षीरी चात्मगुप्ताश्वगन्धिका ॥ १,१५.५८२ ॥
पुनर्नवाज्यं प्रत्येकं युञ्ज्याद्दशपलं प्रिये ।
मृद्वीकाष्टपला यष्टी ततः पञ्चपला तथा ॥ १,१५.५८३ ॥
एकीकृत्य च तत्सर्वं स्निग्धभाण्डे विनिक्षिपेत् ।
पक्षमेकं धान्यराशौ निधाय प्रतिवासरम् ॥ १,१५.५८४ ॥
पलं पलं प्रयुञ्जीत मासं स्याद्व्याधिवर्जितः ।
षण्मासाद्गृध्रदृष्टिः स्याद्वर्षं जीवेच्छतायुषम् ॥ १,१५.५८५ ॥
अमृतायाः शतपलं चूर्णं षष्टिपलं मधु ।
चत्वारिंशत्पलं सर्पिर्द्विमासं धान्यराशिगम् ॥ १,१५.५८६ ॥
प्रत्यहं पलमात्राशी मासात्सर्वगदान्हरेत् ।
दिव्यदृष्टिः शतं जीवेन्मेधाबलमहाद्युतिः ॥ १,१५.५८७ ॥
[३३. तुवरककल्पः]
अथ वक्ष्याम्यहं देवि कल्पं तुवरकस्य च ।
वृक्षाः पश्चिमवारीशतटे तिष्ठन्ति संततम् ॥ १,१५.५८८ ॥
तरङ्गानिलसंक्षुब्धशीकारार्द्रितपल्लवाः ।
वर्षर्तौ च सुपक्वानि तत्फलानि समाहरेत् ॥ १,१५.५८९ ॥
शोषयित्वाथ संचूर्ण्य तिलवत्तैलमाहरेत् ।
अथवैरण्डवत्तैलं प्रयत्नेन समाहरेत् ॥ १,१५.५९० ॥
पुनर्वह्नौ पचेत्तैलं यावदंभःक्षयं भवेत् ।
तत्कर्षं निक्षिपेत्पक्षं तत उद्धृत्य प्रयत्नतः ॥ १,१५.५९१ ॥
चतुर्भक्तविहीनः सन् शुद्धः कर्षं पिबेत्प्रिये ।
शङ्खचक्रगदापाणिस्त्वामाज्ञापयदच्युतः ॥ १,१५.५९२ ॥
मन्त्रेणानेन सेवेत सर्वो दोषो विनश्यति ।
एवं पञ्चदिनं सेव्यमहितानि च वर्जयेत् ॥ १,१५.५९३ ॥
मासं मुद्गरसाशी स्यात्सर्वकुष्ठविवर्जितः ।
ततः क्षौद्रघृताभ्यां च लिहेत्षाण्मासिकावधि ॥ १,१५.५९४ ॥
वलीपलितहीनश्च जीवेद्वर्षशतद्वयम् ।
तत्तैलं दिनपञ्चाशं नस्येद्धीरकवद्द्विजः ॥ १,१५.५९५ ॥
वलीपलितनिर्मुक्तः श्रुतधारी दृढाङ्गवान् ।
जीवेद्द्विशतवर्षं च मेधावी गृध्रलोचनः ॥ १,१५.५९६ ॥
[३४. सोमराजीकल्पः]
अथ वक्ष्याम्यहं देवि सोमराजीरसायनम् ।
संग्रहेत्तां पुष्यरवावातपे शोषयेत्ततः ॥ १,१५.५९७ ॥
चूर्णितां कोष्णसलिलैः पिबेत्प्रातर्विशुद्धये ।
त्रिदिवं च ततः क्षौद्रैः कर्षमात्रं लिहेत्प्रगे ॥ १,१५.५९८ ॥
मासेन रोगा नश्यन्ति षण्मासात्सिद्धिमाप्नुयात् ।
[३५. वृद्धदारुककल्पः]
अथ ब्रवीमि देवेशि वृद्धदारुककल्पकम् ॥ १,१५.५९९ ॥

नागवल्लीदलक्षौद्रैः सदुग्धैर्मृदुरोमकैः ।
पत्रैर्युतापि सफला रक्तपुष्पा प्रतानिका ॥ १,१५.६०० ॥
तिक्तोषणं काम्बुतेति महिषाख्यलता स्मृता ।
तुलोन्मितं च तन्मूलं चूर्णितं सर्षपायुतम् ॥ १,१५.६०१ ॥
धान्यराशौ न्यसेत्पक्षमुद्धृत्योन्मितकर्षकम् ।
अनुपेयं च गोक्षीरं जीर्णे क्षीरान्नभोजनम् ॥ १,१५.६०२ ॥
वृद्धोऽपि तरुणो भूयाद्वर्षात्सर्वगदोज्झितः ।
एवं द्वादशवर्षाणि सेवेतालस्यवर्जितः ॥ १,१५.६०३ ॥
जीवेत्षट्शतवर्षं च वलीपलितवर्जितः ।
वृद्धदारुकचूर्णं च शुद्धं शतपलोन्मितम् ॥ १,१५.६०४ ॥
वाजिगन्धाकन्दचूर्णं शतत्रयपलं घृतैः ।
आलोड्य भक्षयेत्कर्षं स जीवेच्छरदां शतम् ॥ १,१५.६०५ ॥
तुरंगमसमो वेगे बले दन्ताबलोपमः ।
कान्त्या हिमांशुसदृशस्तेजसा भास्करोपमः ॥ १,१५.६०६ ॥
शतावर्याश्वगन्धा च गोक्षुरो वृद्धदारुकः ।
समांशमखिलं सर्पिर्युक्तं कर्षं च खादयेत् ॥ १,१५.६०७ ॥
सप्ताहात्किन्नरध्वानो वत्सरात्सिद्धिभाग्भवेत् ।
वृद्धदारुकमूलं च वरीस्वरसपेषितम् ॥ १,१५.६०८ ॥
कर्षं पिबेद्वत्सरं यत्स जीवेच्छरदः शतम् ।
वृद्धदारुकचूर्णं च धात्रीस्वरसभावितम् ॥ १,१५.६०९ ॥
एकविंशतिधा प्रातर्मध्वाज्याभ्यां तु कर्षकम् ।
लिहेदब्दं स जीवेच्च वर्षाणि च शतद्वयम् ॥ १,१५.६१० ॥
योवसापस्तधा जीवेन्नीरुजः स महान्भवेत् ।
गोदुग्धेन च तन्मूलं रसं धात्र्याश्च संमितम् ॥ १,१५.६११ ॥
पिबेत्संवत्सरं यस्तु स जीवेच्छरदः शतम् ।
तत्सिद्धं सर्पिरश्नीयात्पूर्ववत्फलमाप्नुयात् ॥ १,१५.६१२ ॥
पुनर्नवा वरी शुण्ठी मागधी रजनीद्वयम् ।
एतत्सर्वं समं वृद्धदारुकं काञ्जिकान्वितम् ॥ १,१५.६१३ ॥
पलं प्रातः पिबेद्धीमान् दच्छदाद्धारमाचरेत् ।
मासात्सर्वामयान् हन्ति वर्षादायुः शतं भवेत् ॥ १,१५.६१४ ॥
द्वीपी शौण्डी वरा विश्वं मुस्तमेला समांशकम् ।
एतत्संयोज्य सिद्धं तच्चूर्णं वेल्लरिकं भवेत् ॥ १,१५.६१५ ॥
क्षौद्राज्यलुलितं खादेत्कर्षं वर्षेण सिध्यति ।
तत्फलं स्वरसं कर्षं घृतं क्षौद्रं च तत्समम् ॥ १,१५.६१६ ॥
पिबेदनु गवां क्षीरं माहिषं वा पलोन्मितम् ।
मासेन सर्वरोगघ्नं वर्षाज्जीवेच्छतायुषम् ॥ १,१५.६१७ ॥
चूर्णं वेल्लरिकामूलं फलं पिप्पलिकाभवम् ।
समवेल्लरिकामूलफलजैश्च रसैस्तथा ॥ १,१५.६१८ ॥
गुडूचीस्वरसेनापि भावयेदेकविंशतिम् ।
शुष्कं घृतप्लुतं भाण्डे स्निग्धे धान्यचये स्थितः ॥ १,१५.६१९ ॥
त्रिसप्ताहात्तदुद्धृत्य कर्षं प्रातर्लिहेन्नरः ।
वर्षाद्वर्षसहस्रायुः सर्वरोगविवर्जितः ॥ १,१५.६२० ॥
[३६. वज्रवल्लीकल्पः]
अथ व्याख्याम्यहं देवि वज्रवल्लीरसायनम् ।
वज्रवल्लीं समूलां च छायाशुष्कां विचूर्णयेत् ॥ १,१५.६२१ ॥

वरा व्रणारिमूलं च प्रत्येकं भास्करं पलम् ।
रोगानशेषान् षण्मासाद्धन्यात्संवत्सराद्भवेत् ॥ १,१५.६२२ ॥
देहसिद्धिश्च षण्मासाच्चूर्णमन्यत्प्रकल्पयेत् ।
[३७. तिलक्षीरिणिकाकल्पः]
तिलक्षीरिणिकाकल्पं कथयिष्यामि शाम्भवि ॥ १,१५.६२३ ॥
तिलक्षीरिणिकामूलं मौनेनोत्पाट्य साधकः ।
कोष्णेन वारिणा पिष्ट्वा प्राङ्मुखोदङ्मुखः पिबेत् ॥ १,१५.६२४ ॥
गिलेद्वा गुलिकां कृत्वा क्षीराज्यानाशयेच्छुचिः ।
क्रमेणार्धद्वित्रिनिष्कं सेवेताब्दं स सिद्धिभाक् ॥ १,१५.६२५ ॥
दशाहाच्छुक्रवृद्धिः स्यात्त्रिमासात्सर्वरोगजित् ।
षण्मासात्सिद्धिमाप्नोति नात्र कार्या विचारणा ॥ १,१५.६२६ ॥
[३८. ब्राह्मीकल्पः]
अथ वक्ष्यामि देवेशि ब्राह्मीकल्पमनुत्तमम् ।
समूलामुद्धरेद्ब्राह्मीं प्रक्षाल्य सलिलेन च ॥ १,१५.६२७ ॥
उलूखले कुट्टयित्वा पात्रे तत्र समाहरेत् ।
जुहुयाच्छारदामन्त्रैस्तद्रसैश्च सहस्रकम् ॥ १,१५.६२८ ॥
अर्चयित्वा गुरून्विप्रान्प्राश्नीत हुतशेषकम् ।
पलमात्रं तद्रसं च जीर्णे क्षीरान्नभोजनम् ॥ १,१५.६२९ ॥
एवं सप्तदिनं सेव्यं ब्रह्मचारी जपे रतः ।
मेधावी ब्रह्मवर्चस्वी वाग्विशुद्धः प्रजायते ॥ १,१५.६३० ॥
ऊर्ध्वं सप्तदिनात्सेव्यं प्रबध्नातीच्छया अपि ।
विस्मृतानपि वेत्त्येव श्रुतं शीघ्रं च धारयेत् ॥ १,१५.६३१ ॥
द्वितीये सप्तमादूर्ध्वं पूर्ववत्तद्रसं पिबेत् ।
सकृच्छ्रुतं श्लोकशतं सहस्रमपि धारयेत् ॥ १,१५.६३२ ॥
एवं त्रिसप्तदिवसं पिबेद्ब्राह्मीरसं शुचिः ।
देहादलक्ष्मीर्निर्याति वाणी विशति शाश्वती ॥ १,१५.६३३ ॥
भवेत्पुंरूपवाग्देवी सर्वशास्त्रार्थवेदिनी ।
वेदवेदान्तविद्धीमाञ्जीवेत्पञ्चशताब्दकम् ॥ १,१५.६३४ ॥

आक्, १, १६
[१. अङ्कोलकल्पः]
अथ ब्रवीम्यहं देवि कल्पमङ्कोलबीजकम् ।
चतुर्भिः साधकैर्धीरैर्विशुद्धैः शुद्धिकाङ्क्षिभिः ॥ १,१६.१ ॥
समवेतः साधकेन्द्रैः पुण्यर्क्षेष्वारभेच्च तत् ।
अङ्कोलमूलं वितृणं कृत्वा संमार्ज्य शोधनम् ॥ १,१६.२ ॥
तत्र लिङ्गं च संस्थाप्य तदग्रे स्थापयेद्घटम् ।
एकसूत्रेण बध्नीयाल्लिङ्गाङ्कोलघटान् प्रिये ॥ १,१६.३ ॥
गन्धपुष्पादिभिः पूजामघोरेण प्रकल्पयेत् ।
प्रतिमासं दिवा नक्तं पुष्पादि फलितावधि ॥ १,१६.४ ॥
गृहीत्वा तत्फलं पक्वं पूरयेत्तद्घटं फलैः ।
योगिनीभैरवीप्रीत्यै महापूजां विधाय च ॥ १,१६.५ ॥
आनीय तद्घटं गेहे शोषयेदातपे फलम् ।
वितुषाणि च बीजानि कुर्यात्तन्मुखघर्षणम् ॥ १,१६.६ ॥
कुर्यात्ततो विशालास्ये पात्रे मृच्चूर्णलेपनम् ।

एकैकशश्चोर्ध्वमुखं रोपयेद्भुजगाकृति ॥ १,१६.७ ॥
ततस्तु टङ्कणं तद्वत्तत्तद्वक्त्रेषु लेपयेत् ।
तत्पात्रं कांस्यपात्रे च स्थापयेत्तदधोमुखम् ॥ १,१६.८ ॥
आतपे धारयेद्धीमान्पललैश्च तिरोदधेत् ।
दिने दिने च्युतं तैलं गृह्णीयाद्दिनपञ्चकम् ॥ १,१६.९ ॥
तत्तैलं काचकूप्यन्तः स्थापयेच्च समन्त्रकम् ।
अर्धमात्राङ्कोलतैलं द्विगुणं तिलतैलकम् ॥ १,१६.१० ॥
नासारन्ध्रद्वये नस्यं जरामृत्युविनाशनम् ।
स जीवेत्त्रिशतं वर्षं सर्वामयविवर्जितः ॥ १,१६.११ ॥
रोगादिजलपाशाद्यैर्भ्रमाद्यैश्च विषेण च ।
गतासूनां नृणां नस्यं कुर्यात्पुंशुक्लमिश्रितम् ॥ १,१६.१२ ॥
मृतसूतं च तैलं ते जीवन्ति च न संशयः ।
मृतसंजीवनी विद्या पूर्वोक्ता कथितानघे ॥ १,१६.१३ ॥
[अन्ये रसायनकल्पाः]
एलाभया वचा काकतुण्डीफलमरुष्करः ।
सहदेवी निम्बपत्रं लाङ्गलीकन्दमेव च ॥ १,१६.१४ ॥
समांशं शोषयेद्यन्त्रे पाताले तैलमाहरेत् ।
तत्तैलं नस्यमादद्यात्सप्ताहान्तरितं प्रिये ॥ १,१६.१५ ॥
एवं वर्षे कृते नस्ये सहस्रायुर्भवेन्नरः ।
नीलिकामूलसंयुक्तं तैलं चार्धपलं पिबेत् ॥ १,१६.१६ ॥
वत्सराज्जायते सिद्धो वलीपलितवर्जितः ।
जीवेद्ब्रह्मदिनं त्र्यब्दाद्वायुवेगो महाबलः ॥ १,१६.१७ ॥
भृङ्गीरसं कृष्णजीरं प्रस्थं प्रस्थं प्रकल्पयेत् ।
नीलोत्पलं च मधुकं प्रस्थार्धं च पृथग्भवेत् ॥ १,१६.१८ ॥
तिलतैलं पञ्चपलं पाचयेत्सर्वमेकतः ।
तैलावशिष्टं तत्तैलं जरा मृत्युश्च नश्यति ॥ १,१६.१९ ॥
अर्धनिष्कं चैकनिष्कं सार्धनिष्कं क्रमेण च ।
तैलप्रमाणमित्युक्तमब्दाज्जीवेच्छतत्रयम् ॥ १,१६.२० ॥
इष्टिकाक्षिपलं क्षिप्त्वा कर्षैकमुदकैः पिबेत् ।
वत्सरात्पलितं हन्ति सहस्रायुर्भवेन्नरः ॥ १,१६.२१ ॥
सर्पाक्षी काकमाची च सहदेवी च भृङ्गराट् ।
काकतुण्डीफलं निम्बं पर्णं वाकुचिबीजकम् ॥ १,१६.२२ ॥
समूलां देवदालीं च ब्राह्मीमूलं फलत्रयम् ।
मूलं च वाजिगन्धाया नीलकोरण्डपत्रकम् ॥ १,१६.२३ ॥
समं समं कन्यकाया द्रवैश्च परिभावयेत् ।
सप्ताहं शोषयेच्चूर्णं छायायां त्रिमधुप्लुतम् ॥ १,१६.२४ ॥
द्विकर्षं प्रत्यहं सेव्यं वत्सरेण जरां जयेत् ।
आ चन्द्रतारकं जीवेन्महाबलयुतः सुखम् ॥ १,१६.२५ ॥
[महाकामेश्वरकल्पः]
चातुर्जातकचोरचन्दनजलद्राक्षातुगारेणुकं कस्तूरीतगरेन्दुकुङ्कुमजटाकुष्ठाश्वगन्धाब्दकम् ।
कङ्कोलामरदारुचित्रकविषं द्वे जीरके सैन्धवं भार्ङ्गीगोक्षुरदेवपुष्पमुसलीयष्टीबलाफेनकम् ॥ १,१६.२६ ॥
रंभाकन्दफलत्रयं त्रिकटुकं जातीफलं वाशकं तालीशं कटुकीफलं गजकणा माषामृताशर्करा ।
पिच्छाभृङ्गविदारिकामदनकं बीजं च कच्छूद्भवं शाल्मल्यङ्घ्रिपुनर्नवागरुशतावर्यप्यथो दीप्यकम् ॥ १,१६.२७ ॥
पादांशं मृतमभ्रकं च विजया तुल्यौषधानां समा सर्वेषां सदृशा सिता च मधुना चाज्येन संयोजिता ।
जातीचम्पककेतकादिकुसुमैः सेवेत संवासितं कर्षार्धं निशि देहसिद्धिदमहाकामेश्वरः कामदः ॥ १,१६.२८ ॥

पुंसां शुक्रविवृद्धिदार्ढ्यकरणे क्षीरानुपानं हितं शाल्मल्यङ्घ्रिजलानुपानमथवाप्यन्यच्च यच्छुक्रलम् ।
प्रौढानां सुदृशां सुखातिसुखदो वश्यो महाद्रावकः सङ्गे भङ्गुरकामकौतुकरसः क्रीडाकलामोददः ॥ १,१६.२९ ॥
संभोगे स्थविराग्नियोषिति मदे यूनां स्मरे दर्पहा नित्यानन्दनिदानमादिपुरुषैरप्याहितास्वादनः ।
वाचां सिद्धिकरः प्रकृष्टकवितासंदर्भसंपादनः सौख्यारोग्यविशेषयौवनकलासामग्र्यसंधायकः ॥ १,१६.३० ॥
वृद्धत्वं हरते बलं च कुरुते मृत्युं निरस्येत्परं व्याधिव्रातमपाकरोति कुरुते कान्तिं नयत्यार्जवम् ।
योगाभ्यासविधौ रतस्य सुलभा सिद्धिं विधत्तेतरामंहः संततिसंहृतिं कलयते स्त्रीणामपत्यप्रदः ॥ १,१६.३१ ॥
रोगाणां निचयं क्षयं क्षपयति क्षिप्रं महारुद्गणं व्याहन्ति श्वसनं लयं गमयते छिन्ते च कासोदयम् ।
दुर्नामानि च षड्भिनत्ति हरते सर्वार्तिरोगोल्बणं मेहौघं च लुनाति शोणितदरं विध्वंसते सेवनात् ॥ १,१६.३२ ॥
क्षीणे पोषमुपादधाति विपुलं पूर्णातिजीर्णोज्ज्वलं मन्दाग्निं ग्रहणीं निकृन्तततितरां दोषानशेषानपि ।
श्रेष्ठः सर्वरसायनेषु विदुषां भोगार्थिनां योगिनां सिद्धिं सम्यगिहातनोति वपुषः संसेवनादन्वहम् ॥ १,१६.३३ ॥
[मूलिकाकल्पेषु रसाभ्रकादिमेलनातिदेशः]
महावृक्षादिकल्पेषु प्रोक्तेष्वेतेषु साधकैः ।
एष साधारणो योगः कर्तव्यः सिद्धिकाङ्क्षिभिः ॥ १,१६.३४ ॥
गुञ्जामात्रं शुद्धसूतं वाभ्रकं वा पणद्वयम् ।
कान्तलोहं तथैवोपयोजयेद्भक्षयेन्नरः ॥ १,१६.३५ ॥
रसाभ्रलोहयोगेन सद्यः सिद्धिमवाप्नुयात् ।
जीवहीनो यथा देहो गन्धहीनं प्रसूनकम् ॥ १,१६.३६ ॥
तथैव मूलिकाकल्पा रसहीना न सिद्धिदाः ।
तस्माद्रसेन सहिताः सद्यः सिद्धिप्रदायकाः ॥ १,१६.३७ ॥
[अभ्यङ्गरसायनम्; महानीलीतैलम्]
महानीलीरसं प्रस्थं प्रस्थं भृङ्गरसं प्रिये ।
धात्रीफलरसं प्रस्थं काकतुण्डीफलोद्भवम् ॥ १,१६.३८ ॥
प्रस्थं कषायतिलजं तैलप्रस्थं च गोपयः ।
आढकं योजयेत्सर्वं काकतुण्डीफलं पलम् ॥ १,१६.३९ ॥
त्रिपलं चामलं भृङ्गनीलीपत्ररजः पलम् ।
पिष्ट्वा तस्मिन् क्षिपेत्सर्वं पचेन्मन्दाग्निना प्रिये ॥ १,१६.४० ॥
तैलावशिष्टं विपचेत्ततो वस्त्रेण शोधयेत् ।
तैलेनानेन चाभ्यज्य शिरोऽभ्यङ्गं समाचरेत् ॥ १,१६.४१ ॥
प्रत्यहं कर्णपूरं च एवं कुर्याद्रसायनम् ।
केशा भ्रमरसङ्काशाः श्रोत्रं दिगन्तपाटवम् ॥ १,१६.४२ ॥
जत्रूर्ध्वरोगा नश्यन्ति तथा पादहितं भवेत् ।
[चन्दनाद्यं तैलम्]
चन्दनागरुकर्पूरकस्तूरीकुङ्कुमं तथा ॥ १,१६.४३ ॥
उशीरद्वयकङ्कोलजातीफललवङ्गकम् ।
नलिकानलदास्पृक्कातुरुष्कस्थाणुलोचनम् ॥ १,१६.४४ ॥
हरेणुस्तगरं लाक्षा नखं स्थौणेयकं मुरा ।
नलदामलकं कुष्ठं चोरकं कटुकीफलम् ॥ १,१६.४५ ॥
प्रपौण्डरीकं खर्जूरं पद्मकं जातिपत्त्रिका ।
शैलेयं धातकीपुष्पं सरलं चैलवालुकम् ॥ १,१६.४६ ॥
पूगीफलं सप्तपर्णं तथा तामलकं प्रिये ।
एकैकं कर्षमात्रं स्यात्प्रस्थं तैलं च गोपयः ॥ १,१६.४७ ॥
आढकं तत्पचेत्सर्वं तैलशेषं समाहरेत् ।
तस्मिन्मृगाण्डं कस्तूरीं कर्पूरं कुङ्कुमं क्षिपेत् ॥ १,१६.४८ ॥
पृथक्कर्षं च जात्यादिकुसुमैर्वासयेद्बुधः ।
तेनाभ्यङ्गमधःकाये कुर्याद्दौर्गन्ध्यनाशनम् ॥ १,१६.४९ ॥

अशीतिवर्षदेशीयोऽप्यसौ स्यात्षोडशाब्दकः ।
कामिनीलोककन्ददर्पः सुभगः शुक्लवृद्धिमान् ॥ १,१६.५० ॥
योषिच्छतं च रमते स जीवेच्छरदः शतम् ।
[उद्वर्तनरसायनम्]
अथोद्वर्तनमाख्यामि वलीपलितभञ्जनम् ॥ १,१६.५१ ॥
सूतं गन्धं समं मर्द्यं स्तनदुग्धेन योषितः ।
मुण्डिका मेघनादश्च विष्णुक्रान्ता मुनिस्तथा ॥ १,१६.५२ ॥
सर्पाक्षी च द्रवैरासां दिनमेकं विमर्दयेत् ।
एतद्दशगुणं क्षारस्तिलस्य च यवस्य च ॥ १,१६.५३ ॥
एतत्सर्वं समध्वाज्यमनेनोद्वर्तनं वपुः ।
वलीपलितनाशः स्याद्वर्षात्त्रिशतवत्सरः ॥ १,१६.५४ ॥
जीवेद्दिव्यवपुर्भूत्वा साधको नात्र संशयः ।
सनालमुत्पलं सूतं सप्ताहं परिमर्दयेत् ॥ १,१६.५५ ॥
आत्मीयशिवतोयेन ततश्चाङ्गं विमर्दयेत् ।
वत्सराज्जायते सिद्धिः पूर्ववद्दिव्यविग्रहः ॥ १,१६.५६ ॥
शिवांभसा च सूतेन्द्रं ब्रह्मदण्डीयमूलकम् ।
मर्दयेत्सप्तदिवसं सम्यग्देवि विमर्दयेत् ॥ १,१६.५७ ॥
वत्सराज्जायते सिद्धिः पूर्ववद्दिव्यविग्रहः ।
कटुतैलेन सुरभिं भावयेद्दिनसप्तकम् ॥ १,१६.५८ ॥
पलार्धं भक्षयेन्नित्यं वर्षाद्वज्रवपुर्भवेत् ।
त्रिशतायुःस्वर्णवर्णो वलीपलितवर्जितः ॥ १,१६.५९ ॥
समध्वाज्यं कुष्ठचूर्णं कर्षं प्रातर्लिहेन्नरः ।
शतपुष्पसुगन्धाङ्गो जीवेद्वलिविवर्जितः ॥ १,१६.६० ॥
[केशरञ्जनकल्पाः]
काकतुण्डीफलं कान्तचूर्णमाम्राण्डतैलकम् ।
आलोड्य भाण्डे निक्षिप्य मासं धान्यमये क्षिपेत् ॥ १,१६.६१ ॥
उद्धृत्य लेपयेच्छीर्षं नस्यकर्मामुना भवेत् ।
त्र्यहात्केशाः सुनीलाः स्युः षण्मासात्केशरञ्जनम् ॥ १,१६.६२ ॥
हरीतकी निष्कमेकं द्विपलं कान्तचूर्णकम् ।
पलमेकं नागचूर्णमम्लदध्ना प्रमर्दयेत् ॥ १,१६.६३ ॥
अभ्यक्तो निक्षिपेन्मूर्ध्नि मर्दयेन्नाडिकार्धकम् ।
एरण्डपत्रैः संवेष्ट्य पुनर्वस्त्रेण बन्धयेत् ॥ १,१६.६४ ॥
स्नायात्पुनश्च त्रिदिनं पूर्ववत्केशरञ्जनम् ।
समूलौ नीलिकाभृङ्गावयश्चूर्णं वरासमम् ॥ १,१६.६५ ॥
चूर्णमेडकमूत्रेण दिनमेकं च भावयेत् ।
स्नानादि पूर्ववत्कृत्वा पूर्ववत्केशरञ्जनम् ॥ १,१६.६६ ॥
निस्त्वग्गुञ्जाफलं चैला देवदारु च कुष्ठकम् ।
समं चूर्णं भृङ्गरसैर्भाव्यमेकदिनं प्रिये ॥ १,१६.६७ ॥
अन्यच्चूर्णं तैलं पचेन्मृद्वग्निना बुधः ।
यस्य तैलघृताभ्यङ्गात्केशा भ्रमरसन्निभाः ॥ १,१६.६८ ॥
हस्तिदन्तस्य दग्धस्य समभागं रसाञ्जनम् ।
छागीदुग्धेन संपेष्य लेपनात्केशरञ्जनम् ॥ १,१६.६९ ॥
कृष्णमृत्त्रिफलाभृङ्गरसायश्चूर्णकं समम् ।
आलोड्यैनं समं भाण्डे मासमेकं निरोधयेत् ॥ १,१६.७० ॥
तल्लेपाच्चिकुराः कृष्णा भवेयुः पञ्चमासतः ।

धात्रीफलं जपापुष्पं किट्टं पिष्ट्वा च मूर्धनि ॥ १,१६.७१ ॥
लेपयेत्त्रिदिनं तेन केशाः स्युर्भ्रमरोपमाः ।
चूर्णं सिन्दूरसदृशं तयोस्तुल्या च सांब्रणिः ॥ १,१६.७२ ॥
पिष्ट्वांभसा प्रलेपेन तत्क्षणात्केशरञ्जनम् ।
गोरोचनं कृष्णतिलान् शतपुष्पां शिवांबुना ॥ १,१६.७३ ॥
काकमाचीमिदं सर्वमयःपात्रे विमर्दयेत् ।
तेनैव दिवसादूर्ध्वं केशरञ्जनमुत्तमम् ॥ १,१६.७४ ॥
चूर्णं सिद्धार्थकं सर्जो यवक्षारं च काञ्जिकैः ।
नागपुष्परसैः पेष्यं लेपनं केशरञ्जनम् ॥ १,१६.७५ ॥
कदलीकन्दचूर्णं च सिन्दूराङ्गारकौ तथा ।
रसैर्जम्बीरजैर्लोहमुष्ट्यायःपात्रके पिषेत् ॥ १,१६.७६ ॥
दिनैकलेपनात्तेन केशानां रञ्जनं भवेत् ।
कासीसं नीलिकापत्रं दधिभृङ्गरसस्तथा ॥ १,१६.७७ ॥
समांशं लोहचूर्णं च लेपनात्केशरञ्जनम् ।
नागदण्डेन पत्राणि कोरण्टस्य च मर्दयेत् ॥ १,१६.७८ ॥
दिनत्रयं च तल्लेपात्केशाः स्युर्भ्रमरोपमाः ।
वरा भृङ्गी चूतबीजं मृणालं च प्रियङ्गुकम् ॥ १,१६.७९ ॥
नीली निशा लोहनागौ चूर्णिता निंबतैलकैः ।
कान्तपात्रे लोडयित्वा मासमेकं विभावयेत् ॥ १,१६.८० ॥
तेन लिप्ताः कचाः कृष्णा रञ्जिता भ्रमरोपमाः ।
तिलाः कृष्णाः काकमाचीबीजानि समभागतः ॥ १,१६.८१ ॥
तत्तैलयन्त्रतो ग्राह्यं तेन स्यात्केशरञ्जनम् ।
कर्षं जपारसः क्षौद्रं सप्ताहं नस्यमाचरेत् ॥ १,१६.८२ ॥
तदूर्ध्वं रञ्जयेत्केशान् सर्वनस्योत्तमो ह्ययम् ।
भृङ्गराजरसैः पिष्ट्वा त्रिफलां लोहचूर्णकम् ॥ १,१६.८३ ॥
तैलमेतत्समं योज्यं तथा भृङ्गरसैः पुनः ।
मृद्वग्निना पचेत्सर्वं तैलशेषं यथा भवेत् ॥ १,१६.८४ ॥
स्निग्धभाण्डे च तत्तैलं मासं भूमौ विनिक्षिपेत् ।
तैलेन लेपयेच्छीर्षं कारवल्लीदलैः पुरा ॥ १,१६.८५ ॥
वेष्टयेत्तत्तु वस्त्रेण निवाते क्षीरभोजनम् ।
क्षालयेत्त्रिफलाक्वाथैः कुर्यात्सप्तदिनं प्रिये ॥ १,१६.८६ ॥
कपालरञ्जनं कुर्याद्यावज्जीवं न संशयः ।
श्रियालीकाकतुण्ड्याश्च बीजं निर्गुण्डिकारसैः ॥ १,१६.८७ ॥
जपापुष्परसैर्भाव्यं पृथक्दिनचतुष्टयम् ।
पातालयन्त्रे तत्तैलं पातयेत्तेन लेपनम् ॥ १,१६.८८ ॥
कुर्यान्मूर्ध्नि च गन्धर्वपत्रैश्च परिवेष्टयेत् ।
वस्त्रेण च ततो वातशून्यदेशे वसन्सुधीः ॥ १,१६.८९ ॥
क्षीराशी काञ्जिके स्नानं कुर्यात्सप्तदिनं त्विति ।
केशा भ्रमरसङ्काशा यावज्जीवं न संशयः ॥ १,१६.९० ॥
जलमण्डनिकाकाकमाचीभृङ्गाः समाः समाः ।
पिष्ट्वा तैलं पचेत्सूपं पुनस्तैलेन लेपयेत् ॥ १,१६.९१ ॥
मूर्धानं लेपयेत्तेन सप्ताहं केशरञ्जनम् ।
स्नानभोजनशय्यां च पूर्ववत्परिकल्पयेत् ॥ १,१६.९२ ॥
वराभृङ्गरसैः पिष्ट्वा कान्तपात्रे विलेपयेत् ।
अवाङ्मुखं विनिष्ठाप्य प्रातस्तं भृङ्गराड्रसैः ॥ १,१६.९३ ॥

पुनः पिष्ट्वा लिहेच्छीर्षं क्षालयेत्त्रिफलांबुना ।
एकविंशद्दिनं कुर्यात्पूर्ववत्फलमाप्नुयात् ॥ १,१६.९४ ॥
गरलं कृष्णजीरं च पिष्ट्वा रुद्ध्वा च तन्मुखम् ।
गृहाङ्गणे पङ्किले च खनित्वा स्थापयेत्सुधीः ॥ १,१६.९५ ॥
षण्मासात्तद्द्रवीभूतं कृष्णं साधु समुद्धरेत् ।
शिरोमध्ये क्षिपेत्कर्षं पूर्ववद्वेष्टनादिकम् ॥ १,१६.९६ ॥
आ जन्म रञ्जयेत्केशांस्तच्च कापालरञ्जनम् ।
भृङ्गी नीली वरा कृष्णायसं मदनबीजकम् ॥ १,१६.९७ ॥
कोरण्टकुसुमं चूर्णमर्जुनस्य त्वचोद्भवम् ।
अम्भोजमूलं जम्ब्वाश्च तत्सर्वं च समांशकम् ॥ १,१६.९८ ॥
लोहभाण्डगतं कुर्यात्पक्षं भूमौ विनिक्षिपेत् ।
हरेद्भाण्डगतं कल्कं कल्कात्तैलं चतुर्गुणम् ॥ १,१६.९९ ॥
तैलाच्चतुर्गुणं भृङ्गरसस्तस्माच्चतुर्गुणः ।
वराक्वाथः सर्वमिदं मन्दवह्नौ विपाचयेत् ॥ १,१६.१०० ॥
तैलावशिष्टं विपचेत्तत्पिष्ट्वायसपात्रके ।
निक्षिपेच्च परीक्षार्थं काकपक्षं विलेपयेत् ॥ १,१६.१०१ ॥
तैलेन यदि कृष्णं तदौषधं सिद्धिदं भवेत् ।
साधको मासमेकं तु तस्मिन्पात्रे विपाचितम् ॥ १,१६.१०२ ॥
तेन लिप्ताः कचास्तस्य षण्मासाद्भ्रमरोपमाः ।
चिञ्चाश्वत्थपलाशानां वासायाश्च द्रवैर्मुहुः ॥ १,१६.१०३ ॥
द्रुतं पात्रगतं नागं चालयेद्भस्मतां व्रजेत् ।
तावत्पचेन्नागभस्म पलं लोहस्य चूर्णकम् ॥ १,१६.१०४ ॥
द्विपलं च वराचूर्णं त्रिपलं दाडिमत्वचः ।
पलं चैतत्सर्वसमं काञ्जिकं लोहभाजने ॥ १,१६.१०५ ॥
लोडयेत्पाचयेत्किंचित्क्षणं तल्लोहपात्रके ।
आतपे धारयेद्भृङ्गकोरण्टरसभावितम् ॥ १,१६.१०६ ॥
एकविंशद्दिनं भाव्यं भूयो भूयो द्रवं द्रवम् ।
तेनैव लिप्ताश्चिकुराः पिञ्छतापिञ्छसन्निभाः ॥ १,१६.१०७ ॥
कचरञ्जनयोगेषु कथिताकथितेषु च ।
निशि लेपं तथैरण्डपत्रैश्च परिवेष्टनम् ॥ १,१६.१०८ ॥
प्रातः स्नानमिदं कर्म सर्वसाधारणं स्मृतम् ।
[दिव्यौषधिग्रहणयोग्यस्थलनिर्देशः]
श्मशाने सलिले मार्गे गृहे देवालये तथा ॥ १,१६.१०९ ॥
मलमूत्रयुतस्थाने ग्रामे गोष्ठे तरोरधः ।
छायायां च विषप्राये कुशीते चान्यबाधिते ॥ १,१६.११० ॥
एवंप्रायेषु देशेषु न ग्राह्या सिद्धमूलिका ।
अरण्ये पर्वते तीरे नद्या तपवने शुचौ ॥ १,१६.१११ ॥
शिलासङ्गिशुचिक्षेत्रे सिद्धक्षेत्रेऽब्धिरोधसि ।
श्रीपर्वते हिमगिरौ तटाके विजने ह्रदे ॥ १,१६.११२ ॥
गृह्णीयान्मूलिका जाता देहसिद्धिप्रदायिकाः ।
[दिव्यौषधिग्रहणविधिः]
सर्वेषां सिद्धमूलानां रक्षाबन्धनकर्मणि ॥ १,१६.११३ ॥
खननेषूत्पाटनेषु ग्रहणेषु क्रमेण वै ।
कथ्यन्ते मनवो दिव्याः सर्वसाधारणाः स्मृताः ॥ १,१६.११४ ॥
पूर्वेद्युरेव सुस्नातः कृतदन्तविशोधनः ।

अनुलिप्तः शुद्धवस्त्रो हृष्टः संयतमानसः ॥ १,१६.११५ ॥
मौनी गन्धाक्षतोपेतो रक्षाबन्धनसूत्रिताम् ।
पूर्वमन्वेषितां गत्वा मूलिकां स्वेष्टदायिकाम् ॥ १,१६.११६ ॥
वितृणं परितः कृत्वा खात्वाम्बु परिषेचयेत् ।
गन्धपुष्पाक्षतैः पूजां कृत्वा सूत्रेण बन्धयेत् ॥ १,१६.११७ ॥
समन्त्रकं साधकेन्द्रः सोपवासो जितेन्द्रियः ।
अत्रैव तिष्ठ कल्याणि मम कार्यकरी भव ॥ १,१६.११८ ॥
मम कार्यकरी सिद्धा ततः स्वर्गं गमिष्यसि ।
ओं ह्रीं नमस्तेऽमृतसम्भूते बलवीर्यविवर्धिनि बलमायुश्च मे देहि पापं मे जहि दूरतः ।
ह्रीं फट् ।
अनेनैव तु मन्त्रेण त्रिधा सूत्रेण वेष्टितम् ॥ १,१६.११९ ॥
रक्षां बध्नीत तां स्पृष्ट्वा जपेदष्टोत्तरं शतम् ।
ततः प्रातः समुत्थाय कृत्वा नित्यविधिं शुचिः ॥ १,१६.१२० ॥
मूलिकां तां समासाद्य गन्धपुष्पाक्षतादिभिः ।
सर्वोपचारैः सम्पूज्य बलिं दद्यात्सहेतुकाम् ॥ १,१६.१२१ ॥
समन्त्रकं खनेद्धीमान्मन्त्रोऽयमपि कथ्यते ।
येन त्वां खनते ब्रह्मा येन त्वां खनते भृगुः ॥ १,१६.१२२ ॥
येनेन्द्रो वरुणो विष्णुस्तेन त्वामुपचक्रमे ।
त्वामेवाहं खनिष्यामि मन्त्रपूतेन पाणिना ॥ १,१६.१२३ ॥
एवं सम्प्रार्थयित्वादौ पश्चान्मन्त्रं समुच्चरेत् ।
ओं श्रीं ह्रीं तममृतेश्वरि एहि एहि मम सकलसिद्धिं कुरु हुं फट् ।
अनेनैव तु मन्त्रेण निखनेत्सिद्धिमूलिकाम् ॥ १,१६.१२४ ॥
अथ तूत्पाटयेत्तां तु प्राञ्जलिः प्रार्थयेदिति ।
मा उत्पते मा निपते मा च ते चान्यथा भवेत् ।
ओं ह्रीं चण्ड हुं फट्स्वाहा ।
उत्पाटयेदनेनैव मन्त्रेण परमेश्वरि ।
अच्छिन्नमूलामादाय शुद्धवस्त्राभिवेष्टिताम् ॥ १,१६.१२५ ॥
क्षिप्त्वा पटलिकायां च स्ववेश्मनि शुचिस्थले ।
निचये हृष्टमनसा निदध्यात्पारणं ततः ॥ १,१६.१२६ ॥
ओं नमो भैरवाय महासिद्धिप्रदायकाय आपदुत्तरणाय हुं फट् ।
अनेनैव तु मन्त्रेण गृहीत्वा गृहमानयेत् ॥ १,१६.१२७ ॥

आक्, १, १७
[उषःपानरसायनम्]
अथ प्रीतमना देवी पप्रच्छ परमेश्वरी ।
श्रीभैरवी ।
आदिभैरव देवेश सृष्टिस्थित्यन्तकारण ॥ १,१७.१ ॥
सर्वज्ञ शिव लोकेश त्वत्प्रसादान्मया विभो ।
रसायनानि दिव्यानि श्रुतानि विविधानि च ॥ १,१७.२ ॥
सुसाध्यं सुलभं दिव्यं सद्यः प्रत्ययकारणम् ।
बालस्त्रीषण्ढवृद्धानां रोगार्तानां विशेषतः ॥ १,१७.३ ॥
योग्यं रसायनार्हाणां ब्रूहि देव कृपानिधे ।
ततः स्मेराननाम्भोजो भैरवो भवभैरवः ॥ १,१७.४ ॥
श्रीभैरवः ।

शृणु देवि प्रवक्ष्यामि सर्वयोग्यं सुखङ्करम् ।
पावनं सुलभं चान्तर्बहिरंहोविनाशनम् ॥ १,१७.५ ॥
यस्माज्जगन्ति जातानि प्राणाः प्राणभृतामपि ।
त्रायते विश्वमखिलं सर्वदेवात्मकं प्रिये ॥ १,१७.६ ॥
त्रिदोषशमनं सौख्यं पथ्यं सर्वरसाधिकम् ।
षड्जीवनादिगुणयुग्रसयुक्तं बलप्रदम् ॥ १,१७.७ ॥
जीवनं च बलं प्रायः प्राणिनामग्निमूलकम् ।
तस्याग्निरिन्धनं तोयं तस्मात्तोयं पिबेद्बुधः ॥ १,१७.८ ॥
वैद्युतो बाडवो वह्निर्जाठरश्च त्रयोऽग्नयः ।
अबिन्धनाः स्युरन्येषां काष्ठादीनीन्धनानि हि ॥ १,१७.९ ॥
तस्माद्देवि शिवं वच्मि शृणु तोयरसायनम् ।
पूरयेन्नूतनघटे प्रातः शोध्यैश्च वारिभिः ॥ १,१७.१० ॥
गाङ्गेयैर्वाथ नादेयैस्ताटाकैर्वापि सारसैः ।
कौपैर्वा चापि वै घर्मैर्वार्षिकैर्वा यथाभवैः ॥ १,१७.११ ॥
तद्घटं स्थापयेन्मञ्चे दिव्यभास्कररश्मिभिः ।
नष्टदोषं निशायां च चन्द्रामृतकराप्लुतम् ॥ १,१७.१२ ॥
एलोशीरककर्पूरचन्दनैरधिवासितम् ।
पाटलीकेतकीजातिमल्लिकोत्पलवासितम् ॥ १,१७.१३ ॥
उशीरतालवृन्तेन तोयसिक्तेन मन्द्रतः ।
मुहुर्मुहुर्वीजितं तु हंसोदकमुदाहृतम् ॥ १,१७.१४ ॥
अनुराधोदयात्पूर्वं नास्पृष्टमलमूत्रकम् ।
पिबेत्तोयं ततः कुर्यान्मलमूत्रविसर्जनम् ॥ १,१७.१५ ॥
सन्ध्यावन्दनकर्मादि कुर्वन्स्वेच्छाशनो भवेत् ।
एकाब्दबालको नित्यं पिबेत्तोयं पलं पलम् ॥ १,१७.१६ ॥
एवं षोडशवर्षान्तं प्रत्यब्दं च पलं पलम् ।
वर्धयेत्क्रमशो धीमान्पलषोडशिकावधि ॥ १,१७.१७ ॥
षोडशाब्दात्परं सेव्यं षोडशप्रसृतं जलम् ।
एवं विंशतिवर्षान्तं नित्यं सेवेत सादरम् ॥ १,१७.१८ ॥
अनेन व्याधयः सर्वे विनश्यन्ति न संशयः ।
जीवेद्वर्षशतं बुद्धिबलेन्द्रियसुखान्वितः ॥ १,१७.१९ ॥
प्रसृतं च पिबेदष्टपलं दीर्घायुषाय च ।
यथा वह्निबलं तोयं त्र्यहाद्वा पञ्चवासरात् ॥ १,१७.२० ॥
सप्ताहाद्वा क्रमात्प्राज्ञः प्रसृतं प्रसृतं तथा ।
पुनस्तु कुडवं वापि वर्धयेत्तच्छनैः शनैः ॥ १,१७.२१ ॥
षोडशप्रसृतं यावत्तावत्सेव्यं ततः परम् ।
यथा यथाम्बुनो वृद्धिस्तथा दोषः प्रशाम्यति ॥ १,१७.२२ ॥
षण्मासं वा वत्सरं वा वाद्यन्तं वा पिबेज्जलम् ।
यथा वृद्धिस्तथा ह्रासो यावच्चुलुकमात्रकम् ॥ १,१७.२३ ॥
उपवासं दिवा रात्रौ पथ्याशी तत्परित्यजेत् ।
आत्यन्तिके च व्यायामे सति वाञ्जलिमात्रकम् ॥ १,१७.२४ ॥
पादमर्धं त्रिपादं वा यथा सेवाञ्जलिं पिबेत् ।
मध्वाज्यतैलदुग्धाज्यजलाद्यन्यतमैर्युतम् ॥ १,१७.२५ ॥
हन्याच्छीघ्रं वातरोगमथवास्यस्थभेषजैः ।
तत्तद्रोगोपशमनं भक्षयित्वा च भेषजम् ॥ १,१७.२६ ॥
ततो जलं वा प्रपिबेन्मुहूर्ते वा गते सति ।

जीर्णे वा सलिले सेव्यं भोजनान्तेऽथवा निशि ॥ १,१७.२७ ॥
ज्वरादिरोगे संजात उपवासो भवेद्यदि ।
पिबेदर्धं च पूर्वस्माल्लघ्वाहारी यथासुखम् ॥ १,१७.२८ ॥
उपवासो व्रतार्थं चेत्तत्क्षीरं वा पलं निशि ।
रात्रावभोजनं देवि जठरे वारि शुष्यति ॥ १,१७.२९ ॥
अर्धं वा प्राञ्जलिं वारि पिबेन्नित्यं प्रयत्नतः ।
सर्वत्राहारसत्वाग्निसाम्यं वारि पिबेत्सुधीः ॥ १,१७.३० ॥
विण्मूत्रोत्सर्जनं ब्राह्मान्मुहूर्तात्पूर्वतो यदि ।
ततः पीत्वैव सलिलं विण्मूत्रं च विसर्जयेत् ॥ १,१७.३१ ॥
वारि पूतं विषं त्वल्पं विण्मूत्रोत्सर्जनात्परम् ।
अज्ञातवेले रात्रौ चेत्पिबेत्तोयं पुनः प्रगे ॥ १,१७.३२ ॥
पादं वाथ चतुर्थांशमञ्जलिं वा पिबेज्जलम् ।
[जलपानकल्पे पथ्यमपथ्यञ्च]
गोधूमषष्टिशाल्यन्नं यवजाङ्गलजामिषम् ॥ १,१७.३३ ॥
गव्यं सर्पिर्दधि क्षीरमुदश्विन्नवनीतकम् ।
मध्विक्षुदाडिमद्राक्षामोचखर्जूरशर्कराः ॥ १,१७.३४ ॥
सहकारफलं धात्री नालिकेरजलं नवम् ।
कूष्माण्डालाबुरुनिम्बपत्रफलानि च ॥ १,१७.३५ ॥
पत्रपुष्पफलं शिग्रोर्मुद्गयूषरसौ कृतौ ।
सुनिषण्णकगोरण्टी जीवन्तीद्वयकं तथा ॥ १,१७.३६ ॥
राजवृक्षकशोथघ्नी चिल्ली वापि लघुच्छदा ।
शतावरी तण्डुली च मत्स्याक्षी च विदारिका ॥ १,१७.३७ ॥
उपोदकी च वार्त्ताकी कारवल्लीफलानि च ।
लघुकोशातकी लक्ष्मी पटोलं तालमूलकम् ॥ १,१७.३८ ॥
मोचायाः कुसुमं दण्डफलानि क्षुद्रदन्तिका ।
सदाफलं च मत्स्याण्डी शृङ्गवेरं च सैन्धवम् ॥ १,१७.३९ ॥
फलपूराम्लकं पक्वधात्रीफलमलर्ककः ।
वायसी कुन्तली चैव वसुकन्यालिका तथा ॥ १,१७.४० ॥
कुस्तुम्बरी च सरसी शार्ङ्गेरी चक्रमर्दकः ।
मण्डूकपर्णी पालक्याः पत्रं गाङ्गेरुकं तथा ॥ १,१७.४१ ॥
आखुकर्णी कासमर्दपत्रं गाङ्गेरुकं तथा ।
संस्कारार्थं च कैडर्यसैन्धवोषणजारकाः ॥ १,१७.४२ ॥
सर्वेऽपि मधुरप्रायाः स्वादुशीताः सुखप्रदाः ।
कतकस्य च पथ्यायाः शलाटुं लवणाक्तकम् ॥ १,१७.४३ ॥
नीलोत्पलाब्जयोर्नालपुष्पशालूककेसराः ।
स्नेहयुक्तं भजेत्स्नानं श्वेताम्बरधरः शुचिः ॥ १,१७.४४ ॥
कस्तूरीचन्दनहिमकर्पूरैरनुलेपनम् ।
मन्दानिलं पुष्पमाल्यं कौमुदीरत्नभूषणम् ॥ १,१७.४५ ॥
पथ्यं रुच्यं जलीयं च स्वादुप्रायं च सद्रवम् ।
घृतक्षीरयुतं भक्तं भुञ्जीतोदकसेवकः ॥ १,१७.४६ ॥
ताम्बूलचर्वणं कुर्यात्सकर्पूरं सुखासनम् ।
नारिकेलजलं सायं निशि क्षीरं सशर्करम् ॥ १,१७.४७ ॥
शाल्मली तूलशय्या च निशि निद्रा यथासुखम् ।
ऊनातिमात्रविष्टम्भिविबन्ध्युष्णखराणि च ॥ १,१७.४८ ॥
रूक्षाहृद्यस्थिरगुरुपिच्छिलाकालभोजनम् ।

कुल्माषबृहतीचोषद्वयालाबुनिरूढकम् ॥ १,१७.४९ ॥
कुलुत्थयूषकालिङ्गगुञ्जावृक्षफलं तथा ।
पलाण्डु लशुनं सर्वकन्दं सिद्धार्थकं तथा ॥ १,१७.५० ॥
अजाङ्गलं पलं मत्स्यं किंचित्क्षीरान्नभोजनम् ।
अनुक्तशाकमन्नं च फलं क्षीरयुतं पलम् ॥ १,१७.५१ ॥
सर्वक्षीरयुतान्सर्वान्रसानमधुरानपि ।
तिलतैलं च तत्कल्कमेतैः संयुक्तमौषधम् ॥ १,१७.५२ ॥
बहुभाष्यातपच्छायासमचिन्ताध्वरोषणम् ।
शोकवाहनभीतिश्चालस्यात्यन्तरतं तथा ॥ १,१७.५३ ॥
मूर्ध्नि भारवहश्चांभस्तरणं चोपवासकम् ।
व्यायामेर्ष्यादिवास्वापो निशि जागरणं तथा ॥ १,१७.५४ ॥
पुरोवातो हिमं धूलिर्वातप्रायस्थलं तथा ।
धूमप्रायगृहं तल्पं कार्पासपरिकल्पितम् ॥ १,१७.५५ ॥
अग्निः श्रमाम्बुजननं तथोष्णाम्बरधारणम् ।
कौशेयधारणं तूर्वोस्ताडनं कठिनासनम् ॥ १,१७.५६ ॥
उष्णालयक्षारकूपसलिलं कटुतिक्तकौ ।
अम्लः कषायतिक्तश्च रामठं च विरूक्षकम् ॥ १,१७.५७ ॥
मदिरा च वसा मज्जा मूत्रं दुष्टजलानि च ।
मदं शीतमनारोग्यं भोजनं तैलवर्जितम् ॥ १,१७.५८ ॥
अभ्यङ्गं काञ्जिकं शीतं रोगाभावे कषायकम् ।
विदाहि शोषणं मूर्ध्नि स्नानमप्युष्णवारिभिः ॥ १,१७.५९ ॥
कारणं दोषकोपानां निन्द्यमन्यद्विवर्जयेत् ।
[पीतजलजीर्णलक्षणम्]
स्वस्थः पीत्वा सुखासीनः सलिलं वाग्यतः शुचिः ॥ १,१७.६० ॥
विसर्जयेन्मलं मूत्रं ताम्बूलादींश्च वर्जयेत् ।
यावज्जलं पिबेत्तावन्मूत्रं निर्याति चेत्तदा ॥ १,१७.६१ ॥
जलं जीर्णं विजानीयादौषधेन विना यदा ।
निर्गच्छेत्सलिलं पीतं तदा स्वस्थतरो मतः ॥ १,१७.६२ ॥
निर्गते पीतसलिले निःशेषे क्षुत्प्रजायते ।
तैलाभ्यङ्गं ततः कुर्याद्विहितं पथ्यमाचरेत् ॥ १,१७.६३ ॥
[जलाजीर्णलक्षणं तत्परिहारश्च]
परिहारं विना रोगा जायन्ते नाविचारतः ।
श्रमः क्लमश्च वमनं शिरस्तोदः शिरोभ्रमः ॥ १,१७.६४ ॥
सलिलस्तम्भशोषौ चाभिष्यन्दो वेगरोधनम् ।
गुल्मोदावर्तकौ वह्निसदनं गात्रभञ्जनम् ॥ १,१७.६५ ॥
तोदो बस्तौ मेहने च वक्षणे हृदि लोचने ।
जङ्घोद्वेष्टनकं श्वासो भुक्तिद्वेषस्त्वरोचकः ॥ १,१७.६६ ॥
अश्मरी पीनसः कासस्त्वतिसारश्च दुस्तरः ।
सकृदम्भोविशोषश्चेद्रूक्षायासादिकर्मभिः ॥ १,१७.६७ ॥
स दोषो न तु विज्ञेयो दोषस्तंभोऽसकृद्यदि ।
प्रपीते सलिले स्तब्धे चिकित्सात्र विधीयते ॥ १,१७.६८ ॥
कूष्माण्डपत्रैरुदरं बस्तिं चाच्छादयेत्सुधीः ।
मूत्रमोचनकृल्लेपं विदध्याज्जलमुक्तये ॥ १,१७.६९ ॥
यद्वाज्यधात्रीलिप्ताङ्गस्नानं कुर्याद्रसायनम् ।
सगुडं वा पिबेत्क्षीरं तक्रं वा शर्करान्वितम् ॥ १,१७.७० ॥

नालिकेरोदकैर्वापि ससितोर्वारुबीजकम् ।
कष्टाज्जीर्णं जलं यस्य भुक्तेः प्राक्सर्पिराददेत् ॥ १,१७.७१ ॥
यद्वा तिष्ठेच्चिरं चाप्सु स्नायाद्धात्र्यादिभिर्हिमैः ।
यद्वा स्तब्धे जले पीते स्वादुशीतैर्विशोधयेत् ॥ १,१७.७२ ॥
कृष्णामदनसिन्धूत्थैः कल्कैर्मधुयुतैर्वमेत् ।
पथ्याचूर्णं नालिकेरजलैः पीत्वा विरेचयेत् ॥ १,१७.७३ ॥
यद्वा त्रिजातकव्योषक्रिमिघ्नामलकाब्दकैः ।
त्रिवृत्सर्वसमा योज्या ह्येतत्सर्वसमा सिता ॥ १,१७.७४ ॥
सक्षौद्रगुलिकां कृत्वा लिहेदम्भोविमुक्तये ।
रात्रौ वरा सेविता चेत्सर्वदोषविनाशिनी ॥ १,१७.७५ ॥
नाभेरधश्चार्द्रपटं क्षणमात्रं निधापयेत् ।
अवगाहेन शीताम्भो मूर्ध्नि वा शीतवारि च ॥ १,१७.७६ ॥
निक्षिपेदथवा सार्द्रसिकतातल्पशोभिते ।
धारागृहे वा चासीत त्रपुसोर्वारुबीजकम् ॥ १,१७.७७ ॥
वरीद्राक्षाम्बुना पेयं वा तु काश्मीरजं वृषम् ।
द्राक्षारसेन वा पेयं कर्कटीबीजकानि च ॥ १,१७.७८ ॥
तण्डुलक्षालनजलैर्मधुकं वाथ शर्कराम् ।
सद्राक्षं च गुडं दार्वीं तण्डुलोदकयोगतः ॥ १,१७.७९ ॥
यद्वा धात्रीफलरसैर्गोस्तनीं शर्करान्विताम् ।
वरीं वा शर्करायुक्तां द्राक्षां वा मस्तुना सह ॥ १,१७.८० ॥
जलेन वा गुडं पेयं नालिकेरजलेन वा ।
तुगाक्षीरीभवं कल्कं वापि कर्कारुबीजकम् ॥ १,१७.८१ ॥
कल्पं वा तामलक्याश्च मूलं वा यष्टिकल्ककम् ।
पिशाचकदलीपक्वफलं क्षौद्रसितान्वितम् ॥ १,१७.८२ ॥
नालिकेरजलैर्वापि तक्रैर्वा मस्तुनापि वा ।
रम्भाकन्दजलैर्वापि क्षीरैर्वामलकीरसैः ॥ १,१७.८३ ॥
यद्वामृतारसैर्वापि कूष्माण्डस्वरसेन वा ।
दाडिमस्य रसैर्वापि त्वभीरोश्च रसैस्तथा ॥ १,१७.८४ ॥
अलाबोश्च रसैर्वापि पिबेदेलां सशर्कराम् ।
कदलीकन्दयष्ट्याह्वश्वदंष्ट्राश्च कशेरुकाः ॥ १,१७.८५ ॥
तृणपञ्चकमूलानि शुक्रा चैव शतावरी ।
एतेषां कदलीकन्दप्रमुखानां कषायकम् ॥ १,१७.८६ ॥
सक्षौद्रं ससितं वापि पेयं जलविमुक्तये ।
[उषःपानगुणाः]
एवं ब्राह्मे मुहूर्ते यत्पीतं वारि रसायनम् ॥ १,१७.८७ ॥
दोषानशेषान् शमयेद्रोगानपि विनाशयेत् ।
रक्तवातं च वातांश्च हृद्रोगं श्वासकासकम् ॥ १,१७.८८ ॥
रक्तपित्तं च पित्तानि ग्रहणीछर्द्यरोचकान् ।
क्षयमूर्च्छाकुष्ठमेहमोहगण्डार्बुदान् गदान् ॥ १,१७.८९ ॥
गुल्मप्लीहाश्मरीशूलानाहाजीर्णविषूचिकाः ।
क्रिमिं पाण्डुं कामिलां च हलीमकविसर्पकाः ॥ १,१७.९० ॥
व्रणं च श्वयथुं श्वित्रमग्निसादं त्रिधा विषम् ।
जत्रूर्ध्वगुह्यकान् रोगानपस्मारं च विभ्रमम् ॥ १,१७.९१ ॥
ज्वरानाध्मानजठरमूत्राघातगुदाङ्कुरान् ।
वलीपलितनिर्मुक्तो जीवेत्त्रिशतवत्सरम् ॥ १,१७.९२ ॥

स्थिरधीर्बलवान्धीरः कान्तः कान्तामनोभवः ।
[नासापानरसायनम्]
नासापुटाभ्यां सलिलं यस्तु प्रातः पिबेन्नरः ॥ १,१७.९३ ॥
शुक्तिमात्रं प्रतिदिनं पथ्याशी विजितेन्द्रियः ।
इन्द्रियाणां पटुत्वं च वलीपलितनाशनम् ॥ १,१७.९४ ॥
शतायुष्यमवाप्नोति नासारन्ध्ररसायनम् ॥ १,१७.९५ ॥

आक्, १, १९
[ऋतुचर्या, कालविभागः]
श्रीभैरवी ।
भगवन् त्वत्प्रसादेन नित्याचारक्रमः श्रुतः ।
स्वामिन्नैमित्तिकाचारं श्रोतुं वाञ्छास्ति मे वद ॥ १,१९.१ ॥
श्रीभैरवः ।
तच्छृणु त्वं महादेवि ब्रूमि नैमित्तिकीं विधिम् ।
कालाधीनः स तु भवेदनपायोऽमितः सदा ॥ १,१९.२ ॥
अनादिनिधनः सूक्ष्मः स्थूलो व्याप्तः सदातनः ।
ब्रह्मादयश्च सूर्याद्या महाभूतादयः परे ॥ १,१९.३ ॥
कालानुसारिणः सर्वे प्रयत्ने कालरूपिणः ।
कालादेव हि जायन्ते लीयन्ते तत्र सर्वदा ॥ १,१९.४ ॥
यः कालः सोऽहमेवेति त्वं च कालप्रवर्तिनी ।
तस्माज्जन्मभृतां जन्मनिधनाय निवेद्यते ॥ १,१९.५ ॥
अविभाज्यो हि कालोऽयं तथापि प्रविभज्यते ।
तीक्ष्णसूच्याब्दपत्रं तु यावत्कालेन भिद्यते ॥ १,१९.६ ॥
स कालो लव इत्युक्तस्त्रुटी त्रिंशल्लवैर्भवेत् ।
तद्योऽयं स्यात्त्रुटिः कालो मात्रा स्यात्तद्द्वयान्विता ॥ १,१९.७ ॥
दृक्पक्ष्मणोः परिक्षेपः स तु मात्रा प्रशस्यते ।
मात्राष्टादशभिः काष्ठा काष्ठात्रिंशद्युता कला ॥ १,१९.८ ॥
कलात्रिंशत्क्षणः प्रोक्तः क्षणैः षड्भिश्च नाडिका ।
नाडीद्वयं मुहूर्तः स्यात्तैश्चतुर्भिश्च यामकः ॥ १,१९.९ ॥
यामैश्चतुर्भिर्दिवसस्तथा रात्रिर्भवेत्प्रिये ।
एवं दिवानिशं किं तु पूर्वाह्णो दश नाडिकाः ॥ १,१९.१० ॥
मध्याह्ने दश नाडी स्यादपराह्णस्तथैव च ।
पूर्वरात्रं चार्धरात्रं तथैवापररात्रकम् ॥ १,१९.११ ॥
दिवसैः पञ्चदशभिः पक्षः स्याच्छुक्लसंज्ञकः ।
द्वितीयः कृष्णपक्षः स्याद्द्वाभ्यां मासस्तु जायते ॥ १,१९.१२ ॥
मासाभ्यामृतुसंज्ञा स्यादृतुभ्यां कालसंज्ञकः ।
ऋतुत्रयं स्यादयनं द्वाभ्यां संवत्सरो भवेत् ॥ १,१९.१३ ॥
अष्टादशप्रकारेण कालस्तस्माद्विभज्यते ।
माघादिमासाः क्रमशो भवन्ति शिशिरादयः ॥ १,१९.१४ ॥
शिशिरश्च वसन्तश्च ग्रीष्मो वर्षा शरद्धिमः ।
ऋतवो दक्षिणं तेषां कथयामि शृणु प्रिये ॥ १,१९.१५ ॥
[हेमन्तर्तुस्वरूपम्]
तत्र सूर्यो दिशश्चैव हिमानीकलुषीकृताः ।
धूमधूम्ररजोमन्दो वायुः शीतप्रबोधनः ॥ १,१९.१६ ॥

रोमाञ्चकारी कौबेरो लवल्यः पुष्पितास्तदा ।
पुंनागलोध्रफलिनीपुष्पामोदितषट्पदाः ॥ १,१९.१७ ॥
गजवाजीगोमहिषीकाकाजाद्याश्च गर्विताः ।
सरित्प्रालेयपटलसंछन्नशकुनादयः ॥ १,१९.१८ ॥
सोष्णबाष्पजलाः कूपाः पश्य हैमन्तिके ऋतौ ।
[शिशिरर्तुस्वरूपम्]
एवं हि शिशिरे काले चयं याति कफः स्वतः ॥ १,१९.१९ ॥
[वसन्तर्तुस्वरूपम्]
वसन्ते विमला दिक्काः सूर्यश्चारुणदीधितः ।
मलयानिलसञ्चारो नवपल्लवशोभिताः ॥ १,१९.२० ॥
नवीनत्वक्पलाशाढ्या वृक्षाः सर्वत्र पुष्पिताः ।
सहकाशोकबकुलमाधवीचम्पकोद्भवैः ॥ १,१९.२१ ॥
पलाशकादिमैः पुष्पैः प्रविभाति वनस्थली ।
भ्रमद्भ्रमरनिध्वानकोकिलालापसंकुला ॥ १,१९.२२ ॥
श्लेष्मकोपश्च भवति कालः सर्वोत्तमो ह्ययम् ।
[ग्रीष्मर्तुस्वरूपम्]
ग्रीष्मे तीक्ष्णकरश्चण्डोऽतसीकुसुमसन्निभः ॥ १,१९.२३ ॥
संतापितमहीदिक्कः शोषिताशेषभूरसः ।
दावाग्निनातिज्वलिता दिशो भूमिश्च धूसराः ॥ १,१९.२४ ॥
नैरृतो वायुरत्युग्रो वात्या चोग्रासुखा भवेत् ।
आतपस्वेदपवनैः प्राणिनो ज्वरिता इव ॥ १,१९.२५ ॥
संतप्तक्रोडमहिषमातङ्गैराकुलीकृताः ।
चण्डाशुकिरणोत्तप्तशुष्कस्वल्पजलान्विताः ॥ १,१९.२६ ॥
कल्लोलितास्तटाकाद्याः संतप्तजलजन्तवः ।
जीर्णशुष्कविशीर्णैश्च पर्णैश्च पतितैर्द्रुमाः ॥ १,१९.२७ ॥
सोष्माश्छायाविहीनाश्च वायुव्याकुलिता भृशम् ।
शुष्कपत्रलतागुल्माः शिरीषाः कुसुमोज्ज्वलाः ॥ १,१९.२८ ॥
श्लेष्मक्षयश्चानुदिनं तस्माद्वायोश्चयो भवेत् ।
[वर्षर्तुस्वरूपम्]
वर्षर्तौ पश्चिमो वायुर्मही नवतृणावृता ॥ १,१९.२९ ॥
भिन्नैस्तथाञ्जनाभैश्च जलदैश्छादिताखिला ।
शक्रगोपावृता पृथ्वी सर्वसस्यमनोहरा ॥ १,१९.३० ॥
भूलतानिवहच्छन्ना जलक्लिन्ना च पङ्किला ।
मत्तकेकिकुलक्रीडानृत्तविस्तीर्णपिञ्छका ॥ १,१९.३१ ॥
भेकभीकरनिध्वानबधिरीकृतदिङ्मुखा ।
कदम्बकदलीजातिकुटजामोदमेदुरा ॥ १,१९.३२ ॥
धाराधराम्बुधाराभिघातनष्टसरोरुहा ।
प्रभूतसलिलापूर्णसोपाना दीर्घिका भृशम् ॥ १,१९.३३ ॥
पतिसंयोगसदृशमहाकारा महाजलाः ।
पूर्णोभयतटान्ताश्च नद्यः सकलुषोदकाः ॥ १,१९.३४ ॥
नभः स्तनितजीमूतप्रोद्यद्विद्युत्प्रदीपितम् ।
अन्योन्याम्बुदसंघट्टजातनिर्घोषभीकरम् ॥ १,१९.३५ ॥
इन्द्रचापलसन्मेघच्छादितार्केन्दुमण्डलम् ।
वनं हृष्टाजमहिषकिटिचातकसङ्कुलम् ॥ १,१९.३६ ॥
श्लेष्मा क्षीणतरो वायोः कोपः पित्तचयस्तदा ।

[शरदृतुस्वरूपम्]
शरदि स्फुरिताभाश्च भानोस्तीक्ष्णा मरीचयः ॥ १,१९.३७ ॥
प्रक्षीणवारिविमलवारिदोन्मुक्तमार्गकाः ।
ज्योत्स्नामृतरसासिक्तमोदिताखिलजन्तवः ॥ १,१९.३८ ॥
स्फुरितोडुकुलाकीर्णा रात्रयश्च मनोहराः ।
विमलाकाशरुचिराः कामलीलोत्सवप्रदाः ॥ १,१९.३९ ॥
मही चाश्यानपङ्का च कणिकापूर्णशालिका ।
सदस्यः फुल्लकमलकुमुदोत्पलमण्डिताः ॥ १,१९.४० ॥
प्रहृष्टमीनहंसालीलीलालोलतरङ्गिकाः ।
अमलाम्बुसराकीर्णाः स्नानपानहितप्रदाः ॥ १,१९.४१ ॥
दिशः प्रफुल्लरुचिरकाशचामरशोभिताः ।
विमलामोदितक्रोञ्चमल्लिकापरिमण्डिताः ॥ १,१९.४२ ॥
सप्तच्छदरजोयोगदृप्तदन्तिकुलं वनम् ।
प्रक्षीयते तदा वायुः पित्तं कुप्यति पार्वति ॥ १,१९.४३ ॥
[आदानविसर्गकालस्वरूपम्]
दिवानिशादिमध्यान्ते श्लेष्मपित्तसमीरणाः ।
कुप्यन्ति ऋतवः सर्वे प्रवर्तन्ते क्रमाच्छिवे ॥ १,१९.४४ ॥
दिनमाग्नेयरूपं स्याद्रात्रिः सौम्यमयी भवेत् ।
द्वौ च पक्षौ तदा देवि ऋतू हेमन्तशैशिरौ ॥ १,१९.४५ ॥
तौ ऋतू हिमकालः स्यादुष्णौ मधुनिदाघकौ ।
प्रावृट्शरदृतू ज्ञेयौ वर्षाकालः स उच्यते ॥ १,१९.४६ ॥
ऋतुभिः शिशिराद्यैस्तत्त्रिभिः स्यादुत्तरायणम् ।
तदा ज्ञेयमिति ज्ञेयमादानं तद्धवेत्प्रिये ॥ १,१९.४७ ॥
सूर्यानिलौ स्वभावेन भूमिसौम्यरसापहौ ।
किंतु मार्गवशादेतावत्युष्णखररूक्षकौ ॥ १,१९.४८ ॥
आददाते बलं तेजः प्राणिनां प्रतिवासरम् ।
तिक्तः कषायकटुकौ प्रबलाः स्युर्यथोत्तरम् ॥ १,१९.४९ ॥
प्रावृडाद्यैश्च ऋतुभिस्त्रिभिः स्याद्दक्षिणायनम् ।
एतत्सोमात्मकं विद्धि विसर्गाख्यमिति स्मृतम् ॥ १,१९.५० ॥
प्रकृत्या शीतला वृष्ट्या वायुसोमाम्बुदाः परम् ।
बलिनः स्युर्यतस्तस्मात्सूर्यः क्षीणरुचिर्भवेत् ॥ १,१९.५१ ॥
गते भूतलतापेऽस्मिन् प्राणिनां प्रतिवासरम् ।
कालो बलं विसृजति प्रबलाः स्युर्यथोत्तरम् ॥ १,१९.५२ ॥
अत्राम्ललवणौ स्वादू रसाः स्निग्धा भवन्ति हि ।
हेमन्ते शिशिरे पूर्णं मधौ शरदि मध्यमम् ॥ १,१९.५३ ॥
ग्रीष्मे प्रावृषि शीतं स्यात्सर्वेषां प्राणिनां बलम् ।
[हेमन्तर्तुचर्या]
रसस्य बलिनः शीतसंवृतत्वाद्धिमागमे ॥ १,१९.५४ ॥
कोष्ठाग्नेश्चाविकीर्णत्वात्पिण्डितो जठरे यतः ।
ततो बलीयान् कोष्ठाग्निस्तस्मिन् स्वल्पाशनो यदि ॥ १,१९.५५ ॥
वायुना दीप्यते वह्निः पचेद्धातून् रसादिकान् ।
तस्माद्धिमागमे सेव्यो मधुरो लवणाम्लकः ॥ १,१९.५६ ॥
अथ दैर्घ्यान्निशानां तु क्षुधा प्रातस्तरां भवेत् ।
दिनचर्याप्रकारेण विसृजन्मलमूत्रकम् ॥ १,१९.५७ ॥
दन्तकाष्ठादिकं सर्वं विदध्यात्परमेश्वरि ।

ततो मूर्धार्हवातघ्नतैलेनाभ्यङ्गमाचरेत् ॥ १,१९.५८ ॥
गात्राभ्यङ्गं मर्दनं च यावच्छक्यं च यथासुखम् ।
कुशलैर्बाहुयुद्धं च यावच्छक्यं भजेत्ततः ॥ १,१९.५९ ॥
गोधूमचणकैर्मुद्गैर्हृततैलो यथाविधि ।
स्नात्वा कौशेयके रक्ते लघुन्युष्णे सुसान्द्रके ॥ १,१९.६० ॥
वाससी परिधायैव कस्तूर्या कुङ्कुमेन च ।
कालागरुद्रवेणैव चर्चां कुर्वीत विग्रहे ॥ १,१९.६१ ॥
धूपयेद्देहचिकुरान्कालागरुजधूपतः ।
चम्पकं बकुलं पुष्पं शतपत्रं च कैतकम् ॥ १,१९.६२ ॥
जवाद्यैरुपलिप्तानि कृत्वा शिरसि धारयेत् ।
गुडासवं मद्यमण्डं मद्यं मांसं च मेदुरम् ॥ १,१९.६३ ॥
स्निग्धं मांसरसं सोष्णं माषगोधूमपिष्टजान् ।
इक्षुक्षीरविकारांश्च सोष्णमन्नं तिलोद्भवम् ॥ १,१९.६४ ॥
शौचे सुखोष्णं सलिलं सोष्मलं चारु मन्दिरम् ।
शयनं कौथकश्लक्ष्णमृदुलाजिनकम्बलैः ॥ १,१९.६५ ॥
प्रावारैः शुभकौशेयैः क्रमेणास्तृतमुज्ज्वलम् ।
भजेदवृद्धसूर्यांशून् पृष्ठभागेन शाम्भवि ॥ १,१९.६६ ॥
स्वेदं चोपानहं नित्यं हसन्तीतीव्रतापिते ।
गर्भगेहे निवासं च वृत्तपीनोन्नतस्तनीः ॥ १,१९.६७ ॥
रथाङ्गवृत्तसुश्रोण्यो रम्भास्तम्भोरुमण्डिताः ।
मद्यपानमदोन्मत्ता वस्त्रस्रग्गन्धशोभिताः ॥ १,१९.६८ ॥
प्रियाः प्रीताः समाश्लिष्येन्न बाधा शीतदोषजा ।
कस्तूरी कुङ्कुमं चन्द्रं लवङ्गं जातिकाफलम् ॥ १,१९.६९ ॥
प्रत्येकं निष्कमेकं स्यात्सारः खदिरसम्भवः ।
युञ्ज्यात्षोडशनिष्कं च सर्वं पेष्यं हिमाम्बुना ॥ १,१९.७० ॥
गुलिकां मरिचाकारां कुर्याद्दौर्गन्ध्यनाशिनीम् ।
वातश्लेष्महरा रुच्या गुटिकैषा प्रकीर्तिता ॥ १,१९.७१ ॥
गुट्यन्वितं च ताम्बूलं यथेष्टं भक्षयेत्सदा ।
एवं हेमन्तचर्या स्यात्शिशिरेऽप्यमुमाचरेत् ॥ १,१९.७२ ॥
श्लेष्मा चितः स्यान्नितरां भजेद्धैमन्तिकं विधिम् ।
अत्रादानभवं रूक्षं भवेच्छीतो महत्तरः ॥ १,१९.७३ ॥
[वसन्तर्तुचर्या]
शिशिरे तु चितः श्लेष्मा वसन्तेऽर्कांशुविद्रुतः ।
नाशयेज्जाठरं वह्निं स्वयं तोयस्वभावतः ॥ १,१९.७४ ॥
जनयेद्रोगमखिलं तस्माच्छीघ्रं कफं जयेत् ।
अथ वासन्तिकां चर्यां कथयामि मम प्रिये ॥ १,१९.७५ ॥
तीक्ष्णाञ्जनच्छर्दिनस्यैर्व्यायामोद्वर्तनैरपि ।
पादाभ्यां मर्दनेनोष्मवारिस्नानेन तं हरेत् ॥ १,१९.७६ ॥
काषायरक्तकौसुम्भकौशेयवसनानि च ।
परिधाय सकर्पूरागरुणाङ्गानि धूपयेत् ॥ १,१९.७७ ॥
कस्तूरीकुङ्कुमहिमैश्चन्दनैर्लेपयेत्तनुम् ।
चूतचम्पकपुन्नागपूगकेसरपाटलम् ॥ १,१९.७८ ॥
माधवीकेतकीमल्लिकाशोकनवमालिकाः ।
जवाद्यैर्लेपिताः कृत्वा वहेत्कल्हारमुत्पलम् ॥ १,१९.७९ ॥
मद्यं पञ्चविधं प्रोक्तं सर्वव्याधिहरं परम् ।

माधवारिष्टमार्द्वीकासवशीथुरितीरिताः ॥ १,१९.८० ॥
क्षौद्रैर्मदकरद्रव्यै रचितो माधवः स्मृतः ।
चिरं मदकरद्रव्यं खनित्वा स्थापितं भुवि ॥ १,१९.८१ ॥
अरिष्टोऽयमिति ज्ञेयो मार्द्वीको गोस्तनीभवः ।
आसवो मदकृद्द्रव्यसवनाद्वा समुद्भवः ॥ १,१९.८२ ॥
शीथुरिक्षुरसाज्जातः सेव्याः पञ्च मया मताः ।
कामिनीवदनाम्भोजवासिताश्चित्तहारिणः ॥ १,१९.८३ ॥
पुष्पादिवासिता हृद्याः कान्तानयनरञ्जिताः ।
पुराणाः कटुकास्तिक्ताः कषायाः श्लेष्महारिणः ॥ १,१९.८४ ॥
मातुलुङ्गाम्रजम्बूनां पत्रपुष्पफलान्विताः ।
सुहृद्भिः सह जंबीररसार्द्रकपलाण्डुकम् ॥ १,१९.८५ ॥
जाङ्गलं पललं शूल्यं तद्रसं च कृतं नवम् ।
पुराणक्षौद्रगोधूमयवषष्टिकशालिकान् ॥ १,१९.८६ ॥
भजेत्कफघ्नं शाकं च व्यञ्जनं पानकं तथा ।
अमद्यपस्तु शुण्ठ्यम्बु मुस्ताम्बु क्षौद्रवारि वा ॥ १,१९.८७ ॥
खदिरासनसारोत्थक्वथितं वारि वा पिबेत् ।
उद्याने सौधकाचाद्यैर्मणिनीकाशरोचिभिः ॥ १,१९.८८ ॥
कुट्टिमैर्मण्डिते चारुमण्डपे सुरतोचिते ।
कोकिलालापरुचिरे सुगन्धिकुसुमोज्ज्वले ॥ १,१९.८९ ॥
बहुपादपसच्छायावारितोष्णाशुदीधितौ ।
समन्तात्सलिलापूर्णकुल्याभिः शीतलीकृते ॥ १,१९.९० ॥
मलयानिलसञ्चारशमितश्रमवारिणि ।
नानाप्रसूनसुभगशाखिनीनालनन्दिते ॥ १,१९.९१ ॥
लम्बमानसुगन्धस्रङ्मकरन्दाभिषेचिते ।
उशीरपाटलीपङ्क्तिशोभिते बिसविस्तृते ॥ १,१९.९२ ॥
पुष्पैराकीर्णिते मन्दतालवृन्तानिलोज्ज्वले ।
समासीनः प्रियालापचतुराः कामलोलुपाः ॥ १,१९.९३ ॥
कन्दर्पदर्पसर्वस्वाः सूक्ष्मस्वच्छांबराः प्रियाः ।
तरुणी रमयन् गोष्ठीः कुर्वंस्ताभिर्मनोहराः ॥ १,१९.९४ ॥
सुहृद्भिराप्तैः सहितो मध्याह्नं गमयेत्सुखी ।
अतिशीतगुरुस्निग्धस्वाद्वम्ललवणानि च ॥ १,१९.९५ ॥
तिलेक्षुक्षीरविकृतिदिवास्वप्नातिपिच्छिलम् ।
मत्स्यं क्षारोदकं पूपं श्लेष्मलं वर्जयेन्मधौ ॥ १,१९.९६ ॥
[ग्रीष्मर्तुचर्या]
ग्रीष्मे ह्यत्यर्थतीक्ष्णः स्याद्घर्मभानुर्भुवो रसान् ।
स्निग्धान् गुणांश्च क्षपयेत्कफस्तस्मात्क्षयं व्रजेत् ॥ १,१९.९७ ॥
तेन वायुश्चितः स्याच्च पूरितैः शीतलैर्जलैः ।
चन्दनागरुकस्तूरीकुङ्कुमैश्च सुगन्धिभिः ॥ १,१९.९८ ॥
प्रसूनैर्विविधैः फुल्लैर्वासिते मल्लिकादिभिः ।
कामिनीपीनवक्षोजदघ्नाम्बुनि सुशोधिते ॥ १,१९.९९ ॥
ह्रदे वा दीर्घिकायां वा संस्कृतायां यथाविधि ।
आ कर्णपूर्णनयनविराजितमुखेन्दुभिः ॥ १,१९.१०० ॥
मृणालभूषणोद्भासिशिरीषमृदुबाहुभिः ।
कर्पूरमुक्ताकुसुममालामलयजोज्ज्वलैः ॥ १,१९.१०१ ॥
सूक्ष्मकौसुम्भवसनबद्धमध्यनितम्बिभिः ।

स्वनूपुररवाकृष्टसारसारावरञ्जितैः ॥ १,१९.१०२ ॥
जलक्रीडातिचतुरैः संयुक्तः कामिनीजनैः ।
संक्रीडेत करोन्मुक्तवारिसिक्ताङ्गनामुखः ॥ १,१९.१०३ ॥
दृतिशृङ्गमुखोत्सृष्टवारिसेचितविग्रहः ।
ताभिर्भुजान्तरं श्लिष्यन् कुर्वन् लीलां मुहुर्मुहुः ॥ १,१९.१०४ ॥
उत्तीर्य च वपुर्वस्त्रैरुद्वर्त्य चिकुरान्सुखम् ।
स्वच्छे सूक्ष्मे कषाये च वसने धारयेत्ततः ॥ १,१९.१०५ ॥
चन्दनागरुकर्पूरैर्धूपयेत्केशविग्रहौ ।
श्रीखण्डचन्द्रकस्तूरीपङ्कचर्चितविग्रहः ॥ १,१९.१०६ ॥
नेपालमालतीमल्लीपाटलीशतपत्रकाः ।
सौगन्धिकं मरुवकं ह्रीवेरं च मृगाण्डजैः ॥ १,१९.१०७ ॥
सुगन्धतैलैर्लिप्तानि धारयेत्कुसुमानि च ।
अत्र मद्यं न पेयं स्यादथवा मद्यसात्म्यकैः ॥ १,१९.१०८ ॥
स्वल्पं पेयं तु तेनेषन्न तृप्तिश्चेत्तदा जलैः ।
स्वादुभिर्बहुभिर्युक्तं पिबेन्मद्यं यथासुखम् ॥ १,१९.१०९ ॥
तथा नोचेद्भवेद्धातुशोषोऽन्तर्दाहमोहभाक् ।
शिथिलावयवक्षीणप्राणबुद्धिबलः प्रिये ॥ १,१९.११० ॥
मधुरं शीतलं स्निग्धं द्रवं लघु हितं भजेत् ।
सद्यः सशर्करं लिह्याच्छालेयं जाङ्गलं पलम् ॥ १,१९.१११ ॥
अमेदुरं मांसरसं रसालां पानकं पिबेत् ।
पञ्चसारं च रागं च षाडवं चाथवा हितम् ॥ १,१९.११२ ॥
[रसालापानके]
शर्करामरिचोपेतं दधि हस्तविलोडितम् ।
एतद्रसाला विख्याता रम्भापनसचूतजैः ॥ १,१९.११३ ॥
फलैः सशर्कराम्भोभिर्नवमृत्पात्रगं कृतम् ।
ईषदम्लमिति ख्यातं पानकं तद्धितंकरम् ॥ १,१९.११४ ॥
[पञ्चसारः]
मृद्वीकाराजखर्जूरमधूककुसुमानि च ।
श्रीपर्णीक्षुद्रखर्जूरीपरिपक्वफलानि च ॥ १,१९.११५ ॥
सशर्कराम्बु निक्षिप्य दृढं हस्तेन पेषयेत् ।
संस्थाप्य नवमृद्भाण्डे ह्यन्येद्युर्वस्त्रशोधितम् ॥ १,१९.११६ ॥
पञ्चसार इति ख्यातो हृद्यो वातकफापहः ।
[रागषाडवौ]
सिताक्षौद्रादिमधुरद्रव्ययुक्तं फलं च यत् ॥ १,१९.११७ ॥
स्वच्छं राग इति ज्ञेयः सर्वसन्तापनाशनः ।
अयमेव तु सान्द्रश्चेल्लेह्यं षाडव ईरितः ॥ १,१९.११८ ॥
स च वस्त्रेण संशुद्धः पेयषाडव उच्यते ।
एतत्पञ्चविधं पानं पाटलीचम्पकादिभिः ॥ १,१९.११९ ॥
एलया वासितं शुद्धं मृद्भाण्डे स्थापिते नवे ।
उशीरतालवृन्तस्य वायुना शीतलीकृतम् ॥ १,१९.१२० ॥
मोचचोचदलोपेतमेषा सामान्यसंस्कृतिः ।
अथ नूतनभाण्डान्तः पूरितं स्वादु निर्मलम् ॥ १,१९.१२१ ॥
पाटलीकेतकीपुष्पकर्पूरसुरभीकृतम् ।
सान्द्रांबरेण संवीतं तालवृन्तैः सुशीतलम् ॥ १,१९.१२२ ॥
पिबेज्जलं तालसालपूगखर्जूरपादपैः ।

नालिकेराम्रपनसजम्बूपुन्नागचम्पकैः ॥ १,१९.१२३ ॥
करप्रचेयव्यालम्बिफलपुष्पकगुच्छकैः ।
द्राक्षास्तबकसंछन्नशाखान्तरितराजितैः ॥ १,१९.१२४ ॥
माधवीस्तबकालीनभृङ्गगीताभिनन्दितैः ।
नानासुगन्धितरुभिर्वार्यमाणार्कदीधितौ ॥ १,१९.१२५ ॥
हंससारसकारण्डशोभमानसरोवरे ।
परितः प्रवहत्कुल्यातरङ्गानिलशीतले ॥ १,१९.१२६ ॥
नृत्यत्केकिकलाकीर्णकोकिलालापशोभिते ।
शारिकाशुकसंलापमुह्यन्मानवतीजने ॥ १,१९.१२७ ॥
उद्याने बालकोशीरवृतौ सलिलसेचिते ।
मृणालपद्मकल्हारोत्पलपल्लवनिर्मिते ॥ १,१९.१२८ ॥
सुगन्धिपुष्पमालाभिर्लम्बमाने सुशीतले ।
आर्द्राम्बरैश्च रचितच्छायानवपटालिके ॥ १,१९.१२९ ॥
माधवीमण्डपे रम्ये सर्वसन्तापहारिणि ।
कदलीमृणालकुसुमपल्लवैः परिकल्पिताम् ॥ १,१९.१३० ॥
चारूत्तमच्छदपटां हिमाम्बुपरिषेचिताम् ।
शय्यामत्यन्तमृदुलां सन्तापश्रमहारिणीम् ॥ १,१९.१३१ ॥
तुषारशीतलतरैश्चर्मवस्त्राभिपूरितैः ।
सूक्ष्मैर्जललवैः सिक्तः सवयोभिः समन्वितः ॥ १,१९.१३२ ॥
मध्याह्नं गमयेदेवं तथा धारागृहेऽथवा ।
दीव्यन् पुस्तमयीकान्तास्तनहस्तमुखच्युतैः ॥ १,१९.१३३ ॥
बालोशीराम्बुभिः शीते स्वच्छस्फटिकपट्टके ।
कर्पूरचन्दनालिप्ते लुठंस्तापप्रशान्तये ॥ १,१९.१३४ ॥
प्रत्यग्रस्नानशीताङ्ग्यो मुक्ताभरणभूषिताः ।
मृणालचन्दनालेपा मृणालवलयान्विताः ॥ १,१९.१३५ ॥
स्वच्छाम्बरातिरुचिराः प्रमदास्तापहारिणीः ।
चुम्बनालिङ्गनस्पर्शैस्तोषयन् परिहासयन् ॥ १,१९.१३६ ॥
पुष्पमालाविरचितवितानपरिशोभिते ।
शीतांशुकिरणस्पर्शद्रवच्चन्द्रोपलोज्ज्वले ॥ १,१९.१३७ ॥
चन्द्रिकाकान्तिलसिते मन्दानिलविराजिते ।
सौधस्थले समासीनः शशाङ्ककिरणाह्वयान् ॥ १,१९.१३८ ॥
भक्षानश्नीत तारेन्दुकिरणैः शीतलीकृतम् ।
सशर्करं पिबेत्क्षीरं माहिषं बलकृद्धितम् ॥ १,१९.१३९ ॥
निदाघहं शरीरस्य मालाचन्दनधारिणः ।
स्वच्छांशुकावृताङ्गस्य समाप्तरतिकर्मणः ॥ १,१९.१४० ॥
जलार्द्रांशुकवातेन तालवृन्तानिलेन च ।
विस्तारिताब्जपत्रस्य वीजनैश्चाम्बुवर्षिभिः ॥ १,१९.१४१ ॥
मयूरतालवृन्तैश्च तथा च हरिचन्दनैः ।
कर्पूरमल्लिकामुक्तामालाभिर्मधुरैः प्रिये ॥ १,१९.१४२ ॥
शारिकाशुकबालानामालापैर्बिसभूषणैः ।
फुल्लकल्हारकमलनीलोत्पलविराजितैः ॥ १,१९.१४३ ॥
कर्पूरचन्दनालेपैः कान्तैश्च प्रमदाजनैः ।
तापः संह्रियते चास्य चादानोष्णाभितापिनः ॥ १,१९.१४४ ॥
सक्तुकट्वम्ललवणरूक्षायासातपांस्त्यजेत् ।
[वर्षर्तुचर्या]

अथातो वार्षिकीं चर्यां शृणु वक्ष्यामि भैरवि ॥ १,१९.१४५ ॥
आदानक्षीणधातूनां नराणां जठरानलः ।
क्षीणोऽपि वर्षासमये दोषैः सीदति सत्वरम् ॥ १,१९.१४६ ॥
सवारिवारिदव्राततिरोहितदिवाकरे ।
व्योम्नि झञ्झासमीरेण शीतलेन तुषारिणा ॥ १,१९.१४७ ॥
वातः स्यात्कुपितोऽत्यन्तं प्रतप्ताया निदाघतः ।
भूमेर्मेघादिसिक्ताया बाष्पैः कालस्वभावतः ॥ १,१९.१४८ ॥
अम्लपाकैश्च लूतादिमलिनैः सलिलैस्तथा ।
पित्तं कुप्यति चात्यर्थं दुर्दिनत्वाच्च जाठरः ॥ १,१९.१४९ ॥
वह्निः सीदति तेनैव श्लेष्मा कुप्यति दुस्तरः ।
एवमन्योन्यदुष्टाः स्युर्दोषाः साधारणं ततः ॥ १,१९.१५० ॥
मर्दनं च शिरोऽभ्यङ्गं तैलैर्नारायणैर्भजेत् ।
उष्णोदकैश्च बहुभिः स्नात्वा संमार्जयेत्तनुम् ॥ १,१९.१५१ ॥
रक्तं चाप्यथवा शुक्लं माञ्जिष्ठं वाथ धारयेत् ।
सान्द्रेणागरुधूपेन शरीरं धूपयेच्छिवे ॥ १,१९.१५२ ॥
कस्तूरीं कुङ्कुमं चारु भजेत्कालागरुद्रवम् ।
कुटजं केतकीं जातिं मरुवं करवीरकम् ॥ १,१९.१५३ ॥
स्निग्धजाङ्गलमांसानि संस्कृतांस्तद्रसानपि ।
मुद्गाढककुलुत्थानां पिबेद्यूषं च संस्कृतम् ॥ १,१९.१५४ ॥
अरिष्टाख्यं च मैरेयं पुराणमथवा पिबेत् ।
सौवर्चलयुतं मस्तु पञ्चकोलरजोयुतम् ॥ १,१९.१५५ ॥
भजेदुष्णकरं सर्वं शुद्धकोष्ठो भवेन्नरः ।
कुर्यात्कषायबस्तिं च जीर्णधान्याशनं भजेत् ॥ १,१९.१५६ ॥
दिव्यं वा कौपमुदकं शृतं पेयं सुखावहम् ।
अत्यन्तवातवर्षेऽह्नि प्रायेण लवणाम्लकम् ॥ १,१९.१५७ ॥
मधुरं लघु सक्षौद्रं शुष्कनिस्तालितानि च ।
व्यञ्जनानि च तैलं च वटकान्पर्पटान्भजेत् ॥ १,१९.१५८ ॥
यथासुखं च ताम्बूलं कस्तूरीफलसंयुतम् ।
नेतेवनीस्यादगरुधूपिताम्बरमावहेत् ॥ १,१९.१५९ ॥
सुगन्धावयवस्तिष्ठेत्सौधे भूबाष्पवर्जिते ।
तुषारशीतरहिते सुरम्येऽगरुधूपिते ॥ १,१९.१६० ॥
दिवासुप्तिं नदीतोयं सक्तुं जलघृताप्लुतम् ।
व्यायाममर्ककिरणान् संगमात्यन्तिकं त्यजेत् ॥ १,१९.१६१ ॥
[शरदृतुचर्या]
अथातः शारदीं चर्यां वक्ष्यामि शृणु वाङ्मयि ।
वर्षर्तौ शीतवृष्टिभ्यां सहसैव रवेः करैः ॥ १,१९.१६२ ॥
तप्ताङ्गानां नृणां पित्तं चितं वृष्टौ तु शारदे ।
सुतरां कुप्यति तदा तस्मात्पित्तापनुत्तये ॥ १,१९.१६३ ॥
पित्तघ्नतैलेनाभ्यङ्गं मर्दनं मृदु कल्पयेत् ।
सुखोष्णवारिणा स्नानं शुक्लकाषायमम्बरम् ॥ १,१९.१६४ ॥
धृत्वा चागरुकर्पूरधूमेनाङ्गानि लेपयेत् ।
भद्रश्रीहिमलिप्ताङ्गः केतकीभल्लकानि च ॥ १,१९.१६५ ॥
चम्पकाम्बुजपत्राणि वहेन्मृगमदान्वितम् ।
विरेचनं सिरामोक्षं तिक्ताज्यास्वादनं भजेत् ॥ १,१९.१६६ ॥
शालिगोधूममुद्गं च पटोलक्षौद्रशर्कराः ।

जाङ्गलं पिशितं तिक्तं कषायं मधुरान् भजेत् ॥ १,१९.१६७ ॥
बुभुक्षितस्तु लघ्वन्नं धात्रीं शीधुं घृतं पयः ।
पानकं यावसं चेक्षुनालिकेरोदकं नवम् ॥ १,१९.१६८ ॥
अगस्त्योदयसंशुद्धनिर्विषं लघु शीतलम् ।
अर्केन्दुकिरणोत्तप्तशीतं हंसोदकं पिबेत् ॥ १,१९.१६९ ॥
मौद्गयूषं प्रदोषे तु हिमचन्दनचर्चितः ।
सुगन्धमालानिर्धौतवसनालंकृतः सुखी ॥ १,१९.१७० ॥
मुक्तामालापरिष्कारः सुगन्धोशीरलेपितः ।
रम्यारामापरिवृते हर्म्ये ज्योत्स्नातिसुन्दरे ॥ १,१९.१७१ ॥
समासीनश्चन्द्रपादान् सेवेत तरुणीयुतः ।
स्वादन् स्वादंश्चेक्षुदण्डान् पित्तघ्नमदिरामपि ॥ १,१९.१७२ ॥
पायं पायं सुखं तिष्ठन्क्रीडयन्कामिनीजनम् ।
यवक्षारादिकान् क्षारान् हिममातृप्ति भोजनम् ॥ १,१९.१७३ ॥
तिलतैलं रविकरान्दिवा निद्रां वसां दधि ।
तीक्ष्णं मद्यं त्यजेद्वस्तु प्राचीवायुं च पित्तकृत् ॥ १,१९.१७४ ॥
[सर्वर्तुसाधारणी चर्या]
अथ साधारणी चर्या संक्षेपाद्वक्ष्यते शिवे ।
स्वाद्वम्ललवणान्प्रायो हिमवर्षागमे भजेत् ॥ १,१९.१७५ ॥
तिक्तोषणकषायांश्च वसन्ते नितरां भजेत् ।
निदाघे मधुरप्रायं भजेद्वर्षात्यये पुनः ॥ १,१९.१७६ ॥
तिक्तस्वादुकषायांश्च वर्षर्तौ च भजेत्क्रमात् ।
मधौ रूक्षोष्णमश्नीयाद्ग्रीष्मे स्निग्धं च शीतलम् ॥ १,१९.१७७ ॥
प्रावृट्शिशिरहेमन्ते स्निग्धं चोष्णतरं भजेत् ।
मेघात्यये रूक्षशीतं विधिनानेन सेवयेत् ॥ १,१९.१७८ ॥
तत्तद्दतूक्तानधिकान् रसान् सेवेत चान्वहम् ।
अन्यानपि रसान्सर्वानल्पमात्रं यथारुचि ॥ १,१९.१७९ ॥
एकस्यान्त्यं च सप्ताहमन्यस्य दिनसप्तकम् ।
एवं चतुर्दशदिनमृतुसंधिरिति स्मृतः ॥ १,१९.१८० ॥
वर्तमानामृतोश्चर्यां मन्दं मन्दं समुत्सृजेत् ।
आगामिन ॠतोश्चर्यामृतुसंधौ भजेत्क्रमात् ॥ १,१९.१८१ ॥
सात्म्यद्रव्यविसर्गाच्च ह्यसात्म्यद्रव्यसेवनात् ।
रोगा भवन्ति तस्मात्तच्छीलत्यागौ शनैर्व्रजेत् ॥ १,१९.१८२ ॥
ॠतुचर्यामिति भजन्नायुरारोग्यमाप्नुयात् ।
[अन्नपाकक्रमो धातुमलाद्युत्पत्तिक्रमश्च]
अन्नपाकक्रमं वक्ष्ये समासेन सुरार्चिते ॥ १,१९.१८३ ॥
भुक्तमन्नं च सकलं कोष्ठकं प्राणवायुना ।
आहृतं तद्द्रवैर्भिन्नसंघातं मार्दवं पुनः ॥ १,१९.१८४ ॥
स्नेहेन नीतं कोष्ठाग्निरामाशयगतं पचेत् ।
समानवायुनोद्दीप्तो जाठरस्तु यथा बहिः ॥ १,१९.१८५ ॥
स्थालीस्थं तण्डुलं तोयं पचेदन्नं च पावकः ।
भुक्तमात्रेण तत्सर्वं षड्रसं मधुरायते ॥ १,१९.१८६ ॥
पच्यमानं कफोत्पाद्यैः फेनः स्यान्मधुरादिभिः ।
फेनस्तु कफतत्त्वं यात्यम्लतां च विदाहतः ॥ १,१९.१८७ ॥
आमाशयाच्च्युतं तच्च पित्तं भवति निर्मलम् ।
पक्वाशयमनुप्राप्तमग्निना परिशोषितम् ॥ १,१९.१८८ ॥

पिण्डितं परिपक्वं स्यान्महतः पाकतः कटुः ।
पार्थिवश्चाप्य आग्नेयो वायव्यश्चेति नाभसः ॥ १,१९.१८९ ॥
पञ्चोष्माणः पार्थिवादीनन्नाननु पचन्ति च ।
पञ्चाहारगुणान् पक्वांस्तथा भूतगुणानपि ॥ १,१९.१९० ॥
पृथक्पृथक्यथास्वं च पुष्णन्त्येते यथासुखम् ।
भौमो भौमांस्तथैवान्यानन्ये देहगतान्क्रमात् ॥ १,१९.१९१ ॥
पक्वं तदन्नं द्विविधं किट्टसारप्रभेदतः ।
किट्टं तु द्विविधं चाच्छं मूत्रं सान्द्रं शकृद्भवेत् ॥ १,१९.१९२ ॥
पुनः सारं पचन्त्येव यथास्वं सप्त वह्नयः ।
धातुगास्तु ततो देवि रसाद्रक्तं भवेत्ततः ॥ १,१९.१९३ ॥
मांसं मांसाद्भवेन्मेदस्तस्मादस्थि प्रजायते ।
अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भो भवेत्प्रिये ॥ १,१९.१९४ ॥
प्रसादशेषजान्वक्ष्ये रसात्स्तन्यमसृक्ततः ।
सिराश्च कण्डरा मांसात्षट्त्वचश्च वसा भवेत् ॥ १,१९.१९५ ॥
मेदसः स्नायुसन्धी च शेषं नश्यत्यतः परम् ।
रसस्य किट्टं श्लेष्मा स्यादसृजः पित्तमेव च ॥ १,१९.१९६ ॥
मांसस्य किट्टं खमला मेदसो घर्मवारि च ।
अस्थ्नो रोमाणि केशाः स्युर्मज्जायास्त्वक्षिविट्त्वचाम् ॥ १,१९.१९७ ॥
स्नेहः शुक्लस्य चौजः स्यात्क्रमाद्धातुमलाः स्मृताः ।
किट्टं प्रसादो भवति धातूनां परिपाकतः ॥ १,१९.१९८ ॥
इतरेतरसंस्तम्भा धातुस्नेहपरम्परा ।
आहारात्साधु जीर्णाद्यो जातः सारो रसो हि सः ॥ १,१९.१९९ ॥
तस्माद्रसस्तु धातूनां रक्तादीनां च वर्धनः ।
नराणां धातवः सप्त सन्ति स्त्रीणां यथा तथा ॥ १,१९.२०० ॥
पुंसां शुक्लं च शिरसि नारीणां हृष्टमानसे ।
पतिसङ्गे तु तच्छुक्लं स्रवन्ति स्मरमन्दिरे ॥ १,१९.२०१ ॥
तच्चाम्बुसदृशं स्वच्छं सौम्यं गर्भाय नो भवेत् ।
भुक्तमन्नं दिवारात्रं शुक्लवृद्धिं करोति तत् ॥ १,१९.२०२ ॥
सप्ताहादच्छशुक्लं स्यान्मासाद्गर्भक्षमं हि तत् ।
एवं पाकक्रमेणैव भवेत्षाण्मातुरांबिके ॥ १,१९.२०३ ॥
वृष्यौषधप्रभावेण सद्यः शुक्लादि जायते ।
चङ्क्रमद्भोज्यधातूनां परिवृत्तिः सदा भवेत् ॥ १,१९.२०४ ॥
[पाचकाग्निस्वरूपम्]
जाठरो भौतिकश्चैव धातवीयोऽग्नयः स्मृताः ।
एतेषु जाठरः श्रेष्ठो येनान्नं परिपच्यते ॥ १,१९.२०५ ॥
स एव मूलं सर्वेषामग्नीनां तत्क्षये क्षयः ।
तद्वृद्धौ च भवेद्वृद्धिस्तन्मूलं जीवितं बलम् ॥ १,१९.२०६ ॥
देवि तस्माद्धितैः सात्म्यैरन्नपानाख्यदारुभिः ।
पालयेत्तं प्रयत्नेन तदायत्ता ह्यरोगता ॥ १,१९.२०७ ॥
चतुर्विधः स एवाग्निस्तीक्ष्णो मन्दः समोऽसमः ।
पित्ताभिमूर्छिते वायौ समाने तीक्ष्णपावकः ॥ १,१९.२०८ ॥
असम्यग्बहु वा भुक्तं पचेच्छीघ्रं तु पित्तजान् ।
रोगान्कुर्यात्तु मन्दाग्निः समाने कफपीडिते ॥ १,१९.२०९ ॥
सम्यग्भुक्तं मितं वापि हितं चान्नं चिरात्पचेत् ।
वक्त्रशोषाध्मानताश्च गौरवं चान्त्रकूजनम् ॥ १,१९.२१० ॥

आटोपमसकृत्कुर्याच्छ्लेष्मजानामयानपि ।
स्वस्थानस्थे समाने तु समोऽग्निरभिधीयते ॥ १,१९.२११ ॥
सम्यग्भुक्तं पचेत्काले त्वारोग्यफलदो भवेत् ।
असमोऽग्निरमार्गस्थे समाने स्यात्सुभोजनम् ॥ १,१९.२१२ ॥
चिरात्पचेत्तु दुर्भुक्तमचिराद्वातजान् गदान् ।
कुर्यात्तस्मादप्रमत्तः समाग्निं रक्षयेत्प्रिये ॥ १,१९.२१३ ॥
यामद्वये पचेत्तीक्ष्णः षड्यामान्मन्दपावकः ।
कृच्छ्रादन्नं समाग्निस्तु चतुर्यामात्पचेत्सुखम् ॥ १,१९.२१४ ॥
असमाग्निः कदाचित्तु शीघ्रं वा मन्दमेव वा ।
नाभिस्थाने स्थितो वह्निः सर्वेषां प्राणिनामपि ॥ १,१९.२१५ ॥
गजोष्ट्रतुरगादीनां वह्निरङ्गुष्ठमात्रकः ।
पशुमर्त्यमृगाणां च यवमात्रानलो भवेत् ॥ १,१९.२१६ ॥
गृध्रोलूकबकादीनां जाठराग्निस्तिलोन्मितः ।
कृमिकीटादिजन्तूनां केशमात्रो हुताशनः ॥ १,१९.२१७ ॥
प्रदीप्तो जाठरो वह्निरादावन्नं पचेत्ततः ।
अन्नाभावे पचेद्दोषान्दोषे क्षीणे पचेत्ततः ॥ १,१९.२१८ ॥
धातून्धातुक्षये प्राणान्संहरेत्प्राणिनां परम् ॥ १,१९.२१९ ॥

आक्, १, २०
[योगरसायनम्]
श्रीभैरवी ।
देवदेव कृपाम्भोधे कालकन्दर्पनाशन ।
अष्टमूर्ते महामूर्ते पञ्चकृत्यपरायण ॥ १,२०.१ ॥
प्रपञ्चितं जगत्सर्वं त्र्यम्बक त्रिपुरान्तक ।
जटाकलितभोगीन्द्रफूत्कारक्लान्तचन्द्रमः ॥ १,२०.२ ॥
सूर्येन्दुवह्निनयन स्मेरपञ्चानन प्रभो ।
कुण्डलाहिफणारत्नद्योतमानकपोलभूः ॥ १,२०.३ ॥
कुन्दाग्रदन्तसुभगपल्लवाधरशोभित ।
हालाहलासितगल सप्तभोगीन्द्रभूषण ॥ १,२०.४ ॥
महाहिवलयप्रोद्यदष्टादशभुजोज्ज्वल ।
सर्वदिव्यायुधोपेत वरव्याघ्राजिनांबर ॥ १,२०.५ ॥
नमत्सुरासुराधीशमकुटोत्पलरश्मिभिः ।
नीराजितपदद्वन्द्व योगिजन्मजरापह ॥ १,२०.६ ॥
सच्चिदानन्दविभव प्रसन्न करुणाम्बुधे ।
ओङ्कारगम्य विमलातर्क्याचिन्त्याप्रमेय भोः ॥ १,२०.७ ॥
स्तोता स्तुत्यः स्तुतिस्त्वं हि कर्ता कार्यं च कारकः ।
सर्वोऽपि हि त्वमेवासि प्रसीद परमेश्वर ॥ १,२०.८ ॥
त्वन्मायया जगत्सर्वं सृष्टं त्रातं हतं तथा ।
त्वं भूस्त्वमापस्त्वं वह्निस्त्वं वायुस्त्वं नभः शशी ॥ १,२०.९ ॥
रविस्त्वं परमात्मा त्वं गुणास्त्वं प्रकृतिस्तथा ।
पुरुषस्त्वं मनस्त्वं च बुद्धिश्चित्तमहंकृतिः ॥ १,२०.१० ॥
रसायनं च सकलमाख्यातुं च सविस्तरम् ।
आज्ञापयाहं यदि ते हृद्या प्राणप्रिया विभो ॥ १,२०.११ ॥
जीवन्मुक्तिः कथं नाथ योगरूपं च कीदृशम् ।

अनुगृह्णीष्व देवेश सुखोपायं भवापहम् ॥ १,२०.१२ ॥
श्रुत्वा स्तुतिं स्मितमुखो भैरवः परया मुदा ।
उवाच देवीं कल्याणीं पर्वताधिपनन्दिनीम् ॥ १,२०.१३ ॥
श्रीभैरवः ।
साधु साधु महामाये सर्वं वेत्सि सनातने ।
तथापि पृच्छसीशानि लोकानां हितकाम्यया ॥ १,२०.१४ ॥
प्रवक्ष्यामि समासेन सावधानं शृणु प्रिये ।
त्वत्तोऽन्या वल्लभा का मे रहस्यार्थविभाषणे ॥ १,२०.१५ ॥
[जीवन्मुक्तलक्षणम्]
शृणु वक्ष्यामि देवेशि जीवन्मुक्तस्य लक्षणम् ।
कामं क्रोधं भयं लोभं मदं मोहं च मत्सरम् ॥ १,२०.१६ ॥
मानं लज्जां कुलं शीलं कुत्सां दम्भं च वञ्चनाम् ।
अविद्यां जडतां गर्वं शीतमुष्णं तथातपम् ॥ १,२०.१७ ॥
वातं सुखं च दुःखं च पापं पुण्यं हिताहितम् ।
तापत्रयं पुत्रमित्रकलत्रादीनि यस्त्यजेत् ॥ १,२०.१८ ॥
न सक्तः सर्वविषये तत्त्वचिन्तापरायणः ।
पद्मपत्रमिवाम्भोभिर्निर्लिप्तहृदयो भवेत् ॥ १,२०.१९ ॥
मैत्रीकृतातटोपेक्षामदैतैर्मण्डिताशयः ।
ऐहिकामुष्मिकसुखप्राप्तिकार्याविरक्तधीः ॥ १,२०.२० ॥
नित्यानित्यविवेकज्ञो ह्यन्तःकरणनिग्रहः ।
जरामरणहीनश्च शिवसामरसात्मवान् ॥ १,२०.२१ ॥
जीवन्मुक्तः स विज्ञेयस्तीर्णसंसारसागरः ।
देवदैत्यादिभिर्वन्द्यः स सेव्यः स गुरुः शिवः ॥ १,२०.२२ ॥
यथाहं सर्वलोकेषु पूजनीयो महेश्वरि ।
तथासौ सर्वलोकेषु सर्वैः सम्पूज्यते सदा ॥ १,२०.२३ ॥
देहान्तेषु तु मुक्तिर्या प्राणिनां साप्रयोजना ।
देहान्ते देहिनः सर्वे मुक्तिं यान्ति न संशयः ॥ १,२०.२४ ॥
भगसंद्रावणान्मुक्तिर्भवेच्चेद्गर्दभादयः ।
पक्षिणो वृषभा मेषाः किं मुक्तास्त्रिपुराम्बिके ॥ १,२०.२५ ॥
रेतोविण्मूत्रसेवायां यदि मुक्तिर्भवेत्प्रिये ।
कपिश्च सूकराद्याश्च कथं मुक्ता भवन्ति ते ॥ १,२०.२६ ॥
न केवलामरत्वाच्च न शिवत्वाद्भवेत्तथा ।
तद्द्वयोर्मेलनाच्च स्याज्जीवन्मुक्तिरियं स्मृता ॥ १,२०.२७ ॥
सर्वस्मिन्समये शास्त्रे मुक्तिरस्त्यन्तकालजा ।
न दृश्यते करान्तस्थमणिवत्सा च शाम्भवि ॥ १,२०.२८ ॥
अतिगोप्यमवाच्यं यद्देवानामपि दुर्लभम् ।
कथयिष्यामि देवेशि देहस्थैर्यं सदातनम् ॥ १,२०.२९ ॥
[जीवन्मुक्तिसाधकशरीरस्थैर्यसंपादनोपायः; योगसिद्धिः]
शिवत्वं खेचरत्वं च सर्वसिद्धिप्रदं शुभम् ।
देहं विना न किंचित्स्याद्देहोऽयं सर्वसाधनम् ॥ १,२०.३० ॥
तस्माद्देहं प्रयत्नेन रक्षयेत्सर्वतः सदा ।
देहपाते धर्मनाशो धर्मनाशे क्रियाच्युतिः ॥ १,२०.३१ ॥
क्रियाच्युतौ कुतो योगो योगभ्रंशे न चिद्भवेत् ।
चिदभावे कुतो मोक्षो मोक्षे भ्रष्टे न किंचन ॥ १,२०.३२ ॥
अन्योपायशतेनापि न देहो धार्यते सदा ।

पारदः पवनश्च स्यात्सर्वसिद्धिद उत्तमः ॥ १,२०.३३ ॥
संमूर्छितौ मृतौ बद्धावुभौ पवनपारदौ ।
क्रमाद्रोगहरौ नित्यं मृत्युघ्नौ खेचरप्रदौ ॥ १,२०.३४ ॥
रसः पूर्वं मया ख्यातोऽधुना वायुः प्रशस्यते ।
वायोः संधारणाज्ज्ञानं ज्ञानान्मोक्षः प्रजायते ॥ १,२०.३५ ॥
सर्वेषां देहमूलं स्यात्तत्स्थैर्ये पवनः प्रभुः ।
परस्मादक्षरात्तस्मादाकाशं समभूत्ततः ॥ १,२०.३६ ॥
वायुस्तस्माच्च दहनस्तस्मादापस्ततो मही ।
एतेषां पञ्चभूतानामक्षरं कारणं परम् ॥ १,२०.३७ ॥
व्योम शब्दात्मकं वायुः शब्दस्पर्शात्मको भवेत् ।
वह्निः शब्दस्पर्शरूपमयः सलिलमुच्यते ॥ १,२०.३८ ॥
शब्दरूपस्पर्शरसात्मकं भूमिर्विशेषतः ।
शब्दरूपरसस्पर्शगन्धरूपा भवेत्प्रिये ॥ १,२०.३९ ॥
भूवाय्वग्न्यनिलाकाशाधिष्ठात्र्यश्चैव देवताः ।
ब्रह्मा विष्णुश्च रुद्रश्च महेश्वरसदाशिवौ ॥ १,२०.४० ॥
भूमिर्नष्टाम्बुसंमग्ना ताश्च ग्रस्ता महाग्निना ।
स च चण्डसमीरेण शमितः सोऽपि पार्वति ॥ १,२०.४१ ॥
व्योम्नि लीनः क्रमात्तस्मादाकाशादुद्भवन्ति ते ।
अन्तर्बहिः स्थितं व्याप्तं निराधारं निराश्रयम् ॥ १,२०.४२ ॥
आकाशं चेतसा ध्यायन् प्रच्छिन्द्याद्भवबन्धनम् ।
जगत्प्राणमयं वायुं चिदानन्दप्रदं जलम् ॥ १,२०.४३ ॥
निश्चलीकुरुते युक्त्या वायुवत्स्यात्स खेचरः ।
अनन्तार्काग्निसंदीप्तं दहन्तं जगतां त्रयम् ॥ १,२०.४४ ॥
तेजो ध्यात्वा स्वहृदये नाग्निना स तु बाध्यते ।
सुधातरङ्गनिकरप्लाव्यमानमहीतलम् ॥ १,२०.४५ ॥
अप्तत्त्वं भावयन् स्वान्ते वारि तं न हि बाधते ।
अभूतलचराक्रान्तं भूतलं भूतसंप्लवम् ॥ १,२०.४६ ॥
हृदये भावयन्नित्यं तस्य नो पार्थिवं भयम् ।
यद्यद्भावयते चित्ते तत्तद्रूपमवाप्नुयात् ॥ १,२०.४७ ॥
यथाग्नित्वं व्रजेत्काष्ठः कीटो भ्रमरतां यथा ।
[योगाङ्गानि]
आसनं प्राणनियमः प्रत्याहारश्च धारणा ॥ १,२०.४८ ॥
ध्यानं समाधिः षोढा स्युर्योगाङ्गानि क्रमेण च ।
[१. आसनविधिः]
चतुरशीतिलक्षाणि ह्यासनानि भवन्ति हि ॥ १,२०.४९ ॥
तेषु मुख्यासने द्वे च सिद्धपद्मासने स्मृते ।
[सिद्धासनम्]
स्वयोनिं पादमूलेन चैकेन घटयेद्दृढम् ॥ १,२०.५० ॥
अन्यच्चरणमूलं च मेहनोपरि विन्यसेत् ।
अवक्राङ्गः समासीनो वशीभूतेन्द्रियः प्रिये ॥ १,२०.५१ ॥
निश्चलाक्षो भ्रुवोर्मध्यं पश्यन्निश्चलमानसः ।
सिद्धासनमिदं ज्ञेयं मुक्तिमार्गप्रदायकम् ॥ १,२०.५२ ॥
[पद्मासनम्]
दक्षिणोरौ पदं वामं वामोरौ दक्षिणं पदम् ।
विन्यस्य करयुग्मेन पृष्ठभागगतेन च ॥ १,२०.५३ ॥

विपरीतेन चाङ्गुष्ठं वामं वामकरेण च ।
दक्षिणं दक्षिणेनैव दृढं धृत्वा निजोरसि ॥ १,२०.५४ ॥
विन्यस्य चुबुकं ध्यायेन्नासाग्रं संयतेन्द्रियः ।
एतत्पद्मासनं ख्यातं सर्वरोगनिबर्हणम् ॥ १,२०.५५ ॥
[२. प्राणायामः; अजपामुद्रा]
आधारं तु गुदस्थाने चतुर्दलसरोरुहम् ।
वादिसान्ताक्षरोपेतं बालारुणसमप्रभम् ॥ १,२०.५६ ॥
स्वाधिष्ठानं षड्दलाब्जं बादिलान्ताक्षरान्वितम् ।
विद्युत्प्रभं ततो देवि रत्नाभं मणिपूरकम् ॥ १,२०.५७ ॥
डादिफान्तार्णसंयुक्तं नाभौ दलशतात्मकम् ।
अनाहतं सुवर्णाभं द्वादशच्छदपङ्कजम् ॥ १,२०.५८ ॥
हृदये कादिठान्तार्णं विशुद्धिस्तु प्रशस्यते ।
षोडशारं महापद्मं षोडशस्वरभूषितम् ॥ १,२०.५९ ॥
आज्ञाचक्रं द्वयदलं पद्महस्तविराजितम् ।
श्वेतमेवं क्रमाद्देवि षट्चक्रं समुदाहृतम् ॥ १,२०.६० ॥
नाभेरधस्तान्मेढ्रस्योपरिष्टात्कन्द उच्यते ।
विहंगमाण्डसङ्काशस्तत्र नाडीसमुद्भवः ॥ १,२०.६१ ॥
सप्ततिद्विसहस्राः स्युस्तासु मुख्या दश स्मृताः ।
इडा च प्रथमा नाडी पिङ्गला च द्वितीयका ॥ १,२०.६२ ॥
सुषुम्ना च तृतीया स्याद्गान्धारी च चतुर्थिका ।
पञ्चमी हस्तिजिह्वा स्यात्षष्ठी पूषा तरस्विनी ॥ १,२०.६३ ॥
सप्तम्यलम्बुषा नाडी चाष्टमी च कुहूः स्मृता ।
नवमी शङ्खिनी चैव दशमी च क्रमेण हि ॥ १,२०.६४ ॥
एतास्तु प्राणवाहिन्यो वायवस्तु जपाः स्मृताः ।
प्राणापानौ तथा व्यानोदानौ चैव समानकः ॥ १,२०.६५ ॥
नागः कूर्मश्च कृकलो देवदत्तो धनञ्जयः ।
सर्वेषु नाडीचक्रेषु वर्तन्ते दश वायवः ॥ १,२०.६६ ॥
वामदक्षिणमार्गाभ्यामध ऊर्ध्वं च चञ्चलाः ।
प्राणापानवशो जीवः प्रधावति न दृश्यते ॥ १,२०.६७ ॥
हस्ताभ्यामाहतो भूमौ कन्दुको न स्थिरो यथा ।
प्राणापानपरिक्षिप्तस्तथा जीवोऽपि न स्थिरः ॥ १,२०.६८ ॥
प्राणापानसमाकर्षे तथा प्राणमपानतः ।
बहिर्गच्छद्धकारेण सकारेणान्तराविशेत् ॥ १,२०.६९ ॥
हंसः सोऽहं मनुममुं सदा जीवो जपेत्प्रिये ।
एकविंशत्सहस्रं च षट्शताधिकमीश्वरि ॥ १,२०.७० ॥
हंसमन्त्रस्य संख्या स्यादहोरात्रेण सर्वदा ।
हंसाख्योऽयं महामन्त्रो ह्यजपेति प्रकीर्तितः ॥ १,२०.७१ ॥
जपाख्येयं च गायत्री यमिकैवल्यदायिनी ।
एतत्समं तपो ज्ञानं जपः पुण्यं न किंचन ॥ १,२०.७२ ॥
अनुच्चार्या ह्यवर्णा च कुण्डलिन्याः समुद्भवा ।
प्राणसंचारिणी ह्येषा ज्ञातव्या योगिभिः सदा ॥ १,२०.७३ ॥
माता कुण्डलिनी शक्तिः कन्दादूर्ध्वं प्रतिष्ठिता ।
अष्टधा परिवृत्ता च प्रसुप्तभुजगाकृतिः ॥ १,२०.७४ ॥
ब्रह्मद्वारमुखं सा तु स्वमुखेन पिधाय च ।
तां च प्रबोधयेदादौ वह्नियोगेन पार्वति ॥ १,२०.७५ ॥

वायुना मनसा सार्धं मध्यनाड्या व्रजेच्छिवे ।
हठादाकुञ्चनाद्ब्रह्मद्वारमुद्घाटयेत्तु सा ॥ १,२०.७६ ॥
यथा नयेद्गुणं सूची तद्वद्ब्रह्मबिलं तु सा ।
सुखं पद्मासनासीनः पाणी चोत्तानितौ प्रिये ॥ १,२०.७७ ॥
अङ्कमध्ये निधायैव चुबुकं वक्षसि न्यसेत् ।
दृढं गुदमुखं गाढमाकुञ्च्यापानरन्ध्रकम् ॥ १,२०.७८ ॥
मुहुर्मुहुर्वायुमूर्ध्वं चालयेत्त्वरितं प्रिये ।
प्राणं मुञ्चन्कुण्डलिन्याः प्रभावान्मोक्षवर्त्मजम् ॥ १,२०.७९ ॥
उपैति सत्प्रबोधं च देवानामपि दुर्लभम् ।
तदोद्भूतैः श्रमजलैः स्वाङ्गानि परिमार्जयेत् ॥ १,२०.८० ॥
क्षीराहारी मितान्नाशी कट्वम्ललवणं त्यजेत् ।
जितेन्द्रियो ब्रह्मचारी कुटीस्थः कर्मवर्जितः ॥ १,२०.८१ ॥
एवमभ्यासनिरतो वत्सरात्सिद्धिमेति सः ।
[प्राणायामे मुद्राः]
जालन्धरं मूलबन्धमोड्डीयाणं च खेचरीम् ॥ १,२०.८२ ॥
महामुद्रां च यः कुर्यात्स भवेद्देहसिद्धिभाक् ।
एषां वक्ष्ये लक्षणानि गोप्यानि तव शाम्भवि ॥ १,२०.८३ ॥
[जालन्धरबन्धः]
जालन्धरं कण्ठसिरासमूहानां च बन्धनम् ।
कृत्वाधो नमयित्वा कं तदा स्यन्दति मूर्धतः ॥ १,२०.८४ ॥
नभस्तः स्यन्दमाना च सुधा दोग्धौ पतेन्न च ।
न धावति मरुत्तत्र कर्णसंकोचने कृते ॥ १,२०.८५ ॥
कर्णामयसमूहघ्नं मृत्युघ्नं तत्परं भवेत् ।
[मूलबन्धः]
मूलबन्धं पार्ष्णिभागाद्योनिस्थानं प्रपीडयेत् ॥ १,२०.८६ ॥
गुदमाकुञ्चयेद्योगी नयेदूर्ध्वमपानकम् ।
एवं कृते मूलबन्धे क्षीयते मलमूलकम् ॥ १,२०.८७ ॥
प्राणापानौ च संयुक्तौ स्यातां वृद्धोऽपि यौवनम् ।
प्राप्नुयान्मूलबन्धेन मृत्युथोपि विवस्वताम् ॥ १,२०.८८ ॥
[ओड्याणबन्धः]
ओड्डियाणे नाभिविवरमूर्ध्वं जठरे दृढम् ।
आकृष्य पश्चिमं तानं बन्धयेत्पवनस्तदा ॥ १,२०.८९ ॥
विश्रान्तः स्यान्महामाये चोड्याणोऽयं प्रकीर्तितः ।
मृत्युदावानलो दीप्तो जरारोगाब्धिवाडबः ॥ १,२०.९० ॥
[खेचरीमुद्रा]
आस्यान्तर्विवरे जिह्वां तालुरन्ध्रे प्रवेशयेत् ।
विपरीतां भ्रुवोर्मध्ये पश्येन्निश्चलया दृशा ॥ १,२०.९१ ॥
एषा हि खेचरी मुद्रा गोपनीयातिदुर्लभा ।
जिह्वा तु खगता यस्मान्मनश्चरति खे ततः ॥ १,२०.९२ ॥
खेचरीति प्रसिद्धेयं मृत्युरोगजरापहा ।
निद्रा क्षुधा तृषा नास्ति खेचर्या मुद्रितस्य च ॥ १,२०.९३ ॥
मूर्च्छा भवति साध्वी च कर्मबन्धभयं न हि ।
रमण्या संगतस्यापि रेतो न पतति ध्रुवम् ॥ १,२०.९४ ॥
यावच्छुक्रं स्थिरं देहे तावत्कालभयं न हि ।
येन बद्धा नभोमुद्रा बीजस्तस्य न गच्छति ॥ १,२०.९५ ॥

यदि गच्छेत्तस्य बीजो हुताशनमुपैति हि ।
स बीजश्चोर्ध्वमायाति शक्त्या प्रतिहतः स्वयम् ॥ १,२०.९६ ॥
योनिमुद्रानिबद्धः सन्सा मुद्रा तेन दुर्लभा ।
बीजस्तु द्विविधः प्रोक्तः शुक्रं चैव महारजः ॥ १,२०.९७ ॥
शिरःस्थानगतं शुक्रं योनिस्थानगतं रजः ।
शुक्रं तु श्वेतवर्णं स्यात्प्रवालाभं रजः स्मृतम् ॥ १,२०.९८ ॥
शुक्रं चन्द्रगतं नित्यं रजः सूर्येण सङ्गतम् ।
शुक्रं शिवो रजः शक्तिस्तया योगः सुदुर्लभः ॥ १,२०.९९ ॥
मरुता शक्तिचारेण रजश्चोर्ध्वं प्रणीयते ।
ऐक्यं तद्बिन्दुना याति तदा दिव्यं वपुर्भवेत् ॥ १,२०.१०० ॥
[महामुद्रा]
वामाङ्घ्रिमूलभागेन योनिस्थानं प्रपीडयेत् ।
दक्षिणाङ्घ्रिं च विततं हस्ताभ्यामभिधारयेत् ॥ १,२०.१०१ ॥
हनुं वक्षसि निक्षिप्य वायुना जठरं ततः ।
आपूर्य रेचयेद्देवि स्थित्वा बद्धासनो यमी ॥ १,२०.१०२ ॥
एषा ख्याता महामुद्रा मलसंशोधनी वरा ।
सूर्येन्दू घटयेज्जिह्वाशोषणी पापनाशिनी ॥ १,२०.१०३ ॥
तथा दक्षिणपादेन योनिस्थानं प्रपीडयेत् ।
वितत्य वामपादं च कराभ्यां धारयेत्प्रिये ॥ १,२०.१०४ ॥
शेषं पूर्वोक्तवत्कुर्यादेवं सव्यापसव्ययोः ।
भागयोः समकालः स्यादभ्यासस्तां विवर्जयेत् ॥ १,२०.१०५ ॥
तस्य पथ्यमपथ्यं च षड्रसा नीरसा अपि ।
घोरं विषं वातिसुखं पीयूषमिव जीर्यते ॥ १,२०.१०६ ॥
गुल्मोदावर्तकुष्ठाद्या रोगा नश्यन्त्यसंशयम् ।
सिद्धिदेयं महामुद्रा कालं हन्ति जराभयम् ॥ १,२०.१०७ ॥
न प्रकाश्या न देया च यस्मै कस्मैचन प्रिये ।
[३. प्रत्याहारः]
मुक्तासनस्थितो योगी ऋज्वङ्गग्रीवमस्तकः ॥ १,२०.१०८ ॥
घोणाग्रलोचनः स्वस्थः कुटीस्थः प्रणवं जपेत् ।
त्रिलोकश्च त्रिकालश्च त्रिदेवास्त्रीश्वरा अपि ॥ १,२०.१०९ ॥
त्रिज्योतींषीन्दुमुख्यानि त्रिवेदाश्चाग्नयस्त्रयः ।
शक्तित्रयं त्रिपदवी ब्राह्मी चैन्द्री च वैष्णवी ॥ १,२०.११० ॥
वर्णत्रयं च भासन्ते यत्र तज्ज्योतिरोमिति ।
तमोंकारं च मनसा वचसा कर्मणा तु यः ॥ १,२०.१११ ॥
ध्यायेज्जपेदभ्यसेच्च स मुक्तो भवबन्धनात् ।
गच्छंस्तिष्ठञ्जपञ्जाग्रच्छुचिर्वाप्यशुचिर्यदि ॥ १,२०.११२ ॥
न कर्मणा च लिप्तः स्याज्जलेनाब्जदलं यथा ।
वायौ चलति सर्वेऽपि चलन्तीन्द्रियधातवः ॥ १,२०.११३ ॥
स्थिते वायौ स्थिरे सर्वं वपुःप्रभृति शाम्भवि ।
तस्माद्वायुं निबध्नीयात्स्थिरे वाते स्थिरं मनः ॥ १,२०.११४ ॥
स्थिरे मनसि जीवश्च स्थिरो भवति भैरवि ।
यावत्संयमितो वायुर्यावच्चेतोऽपि सुस्थिरम् ॥ १,२०.११५ ॥
बीजं यावद्भ्रुवोर्मध्ये तावत्कालभयं न हि ।
षट्त्रिंशद्व्यङ्गुलं नित्यं ततः प्राणः प्रकीर्तितः ॥ १,२०.११६ ॥
बद्धपद्मासने स्थित्वा ऋज्वङ्गः स्थिरमानसः ।

वामनासापुटेनैव पूरयेत्प्राणमारुतम् ॥ १,२०.११७ ॥
यावत्षोडशमात्रं च कुम्भयेद्द्वादश प्रिये ।
रेचयेद्दशमात्रं च दक्षनासापुटेन च ॥ १,२०.११८ ॥
पुनश्च सूर्यमार्गेण पूरयेत्पूर्ववत्प्रिये ।
कुम्भयित्वा रेचयेच्च वामनासापुटेन च ॥ १,२०.११९ ॥
प्राणायामविधिः प्रोक्तस्त्रिविधो योगिवन्दिते ।
अधमो मध्यमो देवि ह्युत्तमोऽपि यथाक्रमम् ॥ १,२०.१२० ॥
प्रोक्तोऽयमधमस्तस्माद्द्विगुणो मध्यमः स्मृतः ।
उत्तमस्त्रिगुणः प्रोक्तः प्राणायामोऽयमीश्वरि ॥ १,२०.१२१ ॥
यदा तु वामनासायां पूरयेच्चन्द्रमक्षरम् ।
ध्यायेदमृतवारीशमध्यस्थं क्षीरसन्निभम् ॥ १,२०.१२२ ॥
यदा तु दक्षनासायां पूरयेत्सूर्यमक्षरम् ।
ज्वलज्ज्वलनसङ्काशं नाभिस्थं चिन्तयेत्सदा ॥ १,२०.१२३ ॥
एवं बीजद्वयं ध्यात्वा नासारन्ध्रद्वयेन च ।
पूरयेद्यस्तु मतिमान्नाडीशुद्धिरतो भवेत् ॥ १,२०.१२४ ॥
एवं मासत्रयाभ्यासाद्यथेष्टं वायुधारणम् ।
प्रदीप्तो जाठरो वह्निर्नादव्यक्तिश्च जायते ॥ १,२०.१२५ ॥
आरोग्यं प्राप्नुयाद्देवि नित्यमभ्यासयोगतः ।
प्रथमेयं न धर्मः स्याद्द्वितीये कम्पते वपुः ॥ १,२०.१२६ ॥
उत्तिष्ठति तृतीये तु बद्धपद्मासनस्थितेः ।
प्राणायामादिषट्केन प्रत्याहारो भवेच्छिवे ॥ १,२०.१२७ ॥
तद्द्विषट्केन विधिना धारणा तु प्रशस्यते ।
धारणाद्वादशेन स्याद्ध्यानं तद्द्वादशात्मकः ॥ १,२०.१२८ ॥
समाधिः कथ्यते देवि तेन दृश्यं परात्परम् ।
तस्मिन्परापरे धाम्नि क्षीयते कर्मसंचयः ॥ १,२०.१२९ ॥
जन्ममृत्यू न भवतो जरारोगश्च नश्यति ।
युक्तियुक्तेन योगेन चिरायुश्च सुखी भवेत् ॥ १,२०.१३० ॥
अयुक्त्याभ्यासनाद्धिक्काकर्णरोगशिरोव्यथा ।
श्वासकासादयो रोगा दोषाः स्युर्बहवस्तथा ॥ १,२०.१३१ ॥
[विपरीतकरणीमुद्रा]
सौम्यस्थानात्समायाता द्वाभ्यां चैका तु भुज्यते ।
ततस्तृतीयो यः कश्चित्स स्याज्जन्मजरोज्झितः ॥ १,२०.१३२ ॥
प्रज्वलज्ज्वलनाकारो नाभिमध्ये स्थितो रविः ।
तालुमध्ये शशी भाति सुधां वर्षत्यधोमुखः ॥ १,२०.१३३ ॥
तां ग्रसत्यूर्ध्ववदनो भास्करः किरणत्विषा ।
एतस्य विपरीतं यत्करणं विपरीतकम् ॥ १,२०.१३४ ॥
काकचञ्चुवदास्यं च कृत्वा वायुं ससूत्कृतम् ।
आदाय नासारन्ध्रेण पुनस्तं श्वसनं त्यजेत् ॥ १,२०.१३५ ॥
शीतलीकरणाख्योऽयं योगस्तु ज्वरपित्तहृत् ।
अमृतं शीतलं तस्य पिबतश्च जरा न हि ॥ १,२०.१३६ ॥
जिह्वया तालुमूलेन प्राणं यः पिबति प्रिये ।
तस्य षण्मासतः सर्वे रोगा नश्यन्ति योगिनः ॥ १,२०.१३७ ॥
रसनामूर्ध्वतः कृत्वा सोमं पिबति यः प्रिये ।
सिद्धिर्मासार्धं आयाति रोगास्तस्य न सन्ति हि ॥ १,२०.१३८ ॥
जिह्वाग्रेण च संपीड्य रसनान्तर्बिलं महत् ।

ध्यात्वामृतझरीमम्बामर्धाब्देन भवेत्कविः ॥ १,२०.१३९ ॥
अमृताप्लावितनोर्योगिनो वत्सरत्रयात् ।
रेतश्चोर्ध्वं प्रयात्येव सिध्यन्ति ह्यणिमादयः ॥ १,२०.१४० ॥
त्रिविधं गरलं तस्य शरीरे च न संक्रमेत् ।
जरा च मरणं नास्ति दुष्टसत्त्वभयं तथा ॥ १,२०.१४१ ॥
[४. धारणम्]
उक्तासनसमारूढः प्राणायामरतः सदा ।
प्रत्याहारप्रसन्नः सन्नभ्यसेद्धारणं ततः ॥ १,२०.१४२ ॥
चेतसो निश्चलत्वं यद्धारणा सा स्मृता शिवे ।
पृथ्व्यादिपञ्चभूतानां या पृथग्धारणा हृदि ॥ १,२०.१४३ ॥
चतुरश्रा सुवर्णा सलकारा च हृदि स्थिता ।
ब्रह्मणा सहिता भूमिर्ध्यातव्या पञ्च नाडिकाः ॥ १,२०.१४४ ॥
प्राणं तत्रैव मनसा धारयेत्सह शांभवि ।
एषा स्तम्भकरी विद्या पृथ्वीजयमवाप्नुयात् ॥ १,२०.१४५ ॥
अर्धचन्द्रप्रतीकाशं कर्पूरहिमनिर्मलम् ।
कण्ठस्थानगतं नित्यं सुधाप्लुतवकारयुक् ॥ १,२०.१४६ ॥
जलतत्त्वं च संयुक्तं विष्णुना तत्र धारयेत् ।
प्राणं चित्तेन सहितं ध्यातव्यं पञ्चनाडिकाः ॥ १,२०.१४७ ॥
एषा हि वारुणी विद्या विषपित्तज्वरापहा ।
ग्रसने कालकूटस्य मयैव परिकल्पिता ॥ १,२०.१४८ ॥
त्रिकोणं तप्तहेमाभं सरेफं रुद्रदैवतम् ।
तालुस्थानगतं ध्यायेद्वह्नितत्त्वं ज्वलत्प्रभम् ॥ १,२०.१४९ ॥
तत्रैव पञ्चघटिकाः प्राणं च मनसा सह ।
धारयेन्निहितं योगी ह्येषा वैश्वानरी परा ॥ १,२०.१५० ॥
विषाग्निभीतिसंहर्त्री वातश्लेष्मादिरोगहृत् ।
वर्तुलं नीलमेघाभं भ्रुवोर्मध्ये प्रतिष्ठितम् ॥ १,२०.१५१ ॥
सयकारं वायुतत्त्वं नित्यमीश्वरदैवतम् ।
तत्रैव नाडिकाः पञ्च प्राणं च मनसा सह ॥ १,२०.१५२ ॥
धारयेद्वायवीयैषा विद्या खगतिदायिनी ।
मृगतृष्णाम्बुसङ्काशं हकारेण समन्वितम् ॥ १,२०.१५३ ॥
सदाशिवादिदैवं च ब्रह्मरन्ध्रगतं सदा ।
व्योमतत्त्वं निराकाशं शान्तं सर्वगतं प्रिये ॥ १,२०.१५४ ॥
तत्र प्राणं च संयम्य मनसा सह धारयेत् ।
यावत्स्युः पञ्च घटिका नभोविद्येयमीश्वरि ॥ १,२०.१५५ ॥
कथिता मोक्षदा देवि योगिनां दुःखहारिणी ।
स्तम्भनी पार्थिवी विद्या प्लावनी वारुणी मता ॥ १,२०.१५६ ॥
ततो वैश्वानरी विद्या दाहिनीति प्रकीर्तिता ।
वायवी भ्रामणी प्रोक्ता शमनी व्योमरूपिणी ॥ १,२०.१५७ ॥
क्रमशः पञ्चविद्याश्च धारणीयाः पृथक्पृथक् ।
स्वनामकर्मसदृशं फलं ददति योगिनाम् ॥ १,२०.१५८ ॥
एषा पञ्चविधा देवि धारणा भुवि दुर्लभा ।
[५. ध्यानम्]
तत्त्वेषु निश्चला चिन्ता या तद्ध्यानं प्रकीर्त्यते ॥ १,२०.१५९ ॥
ध्यानं द्विधेति विख्यातं सगुणं निर्गुणं प्रिये ।
सगुणं वर्णसहितं निर्गुणं वर्णवर्जितम् ॥ १,२०.१६० ॥

लक्षं च वाजपेयानामश्वमेधसहस्रकम् ।
सकृद्ध्यानस्य योगस्य कलां नार्हन्ति षोडशीम् ॥ १,२०.१६१ ॥
प्रत्यङ्मना बहिर्दृष्टिरृजुः पद्मासनस्थितः ।
ध्यानयोगः स विज्ञेयः सद्यः सिद्धिप्रदः शुभः ॥ १,२०.१६२ ॥
मूलाधारे सुवर्णाभे चक्रेऽस्मिन्प्रथमे प्रिये ।
ध्यात्वात्मानं च नासाग्रे लक्षयेद्धन्ति किल्बिषम् ॥ १,२०.१६३ ॥
स्वाधिष्ठाने च रत्नाभे ह्यात्मानं परिचिन्तयेत् ।
नासाग्रलक्षो दुःखेभ्यो मुच्यते योगिसत्तमः ॥ १,२०.१६४ ॥
बालारुणाभे चात्मानं चक्रेऽस्मिन्मणिपूरके ।
स्मृत्वा नासाग्रदृष्टिः संस्त्रिजगत्क्षोभयेद्यमी ॥ १,२०.१६५ ॥
विद्युन्मालानिभे चक्रेऽनाहते हृदयस्थले ।
प्राणायामेन बहुधा साधिते परमेश्वरि ॥ १,२०.१६६ ॥
आत्मानं चिन्तयेद्यस्तु नासाग्रगतलोचनः ।
भवेद्ब्रह्मसमो योगी वशीकृतमनाः प्रिये ॥ १,२०.१६७ ॥
घण्टिकायां विशुद्धाख्ये स्वर्णचम्पकसन्निभे ।
घ्राणाग्रदृष्टिरात्मानं ध्यात्वानन्दमयो भवेत् ॥ १,२०.१६८ ॥
लम्बिकायां सुधापूर्णे चन्द्रमण्डलमण्डिते ।
नासाग्रदृष्टिरात्मानं ध्यात्वानन्दमयो भवेत् ॥ १,२०.१६९ ॥
भ्रुवोर्मध्येऽञ्जनाकारे ध्यायेदात्मानमीश्वरि ।
जितप्राणो भवेद्योगी योगानन्दमयो भवेत् ॥ १,२०.१७० ॥
निर्गुणं निरपायं च शिवं शान्तं परात्परम् ।
विश्वतैजसमात्मानं ध्यायेद्भ्रूमध्यलोचनः ॥ १,२०.१७१ ॥
ब्रह्मानन्दमयो योगी भवत्येव न संशयः ।
आज्ञाचक्रमिति ख्यातं परे व्योम्नि निरामये ॥ १,२०.१७२ ॥
शिवमात्मानमाचिन्त्य भवेज्ज्ञानमयो वशी ।
गगनाकारममलं मृगतृष्णाम्बुसन्निभम् ॥ १,२०.१७३ ॥
ध्यात्वात्मानं सर्वगतं मोक्षं व्रजति संयमी ।
अपानमेढ्रौ नाभिश्च हृदयं घण्टिका तथा ॥ १,२०.१७४ ॥
लम्बिका च भ्रुवोर्मध्यं नभश्च ब्रह्मरन्ध्रकम् ।
तव चक्रमिति ख्यातं देयं स्थानं च योगिनाम् ॥ १,२०.१७५ ॥
धारणा पञ्चघटिका षण्णाडी ध्यानमुच्यते ।
समाधिर्द्वादशाहं स्यात्प्राणसंयमनात्प्रिये ॥ १,२०.१७६ ॥
[६. समाधिः]
जलसैन्धवयोर्योगादेकत्वं च यथा भवेत् ।
चित्तात्मनोः सामरस्यं समाधिः स तु कथ्यते ॥ १,२०.१७७ ॥
मनः प्रलीयते चान्ते यदा प्राणक्षयो भवेत् ।
सामरस्यं तदा स्याच्च समाधिः स तु कथ्यते ॥ १,२०.१७८ ॥
प्रणष्टाखिलसङ्कल्पो जीवात्मा परमात्मना ।
यदेकत्वं भजेद्देवि समाधिः स तु कथ्यते ॥ १,२०.१७९ ॥
परापेक्षोज्झितं चित्तमिन्द्रियेषु प्रवर्तते ।
यदा जीवो गतश्चैक्यं तदा नैवेन्द्रियं मनः ॥ १,२०.१८० ॥
शब्दं स्पर्शं च रूपं च रसं गन्धं परं तथा ।
आत्मानं च सुखं दुःखं मानामानं प्रियाप्रिये ॥ १,२०.१८१ ॥
शीताशीतं तथा वातमातपं यो न वेत्ति च ।
न बाध्यते स्वकर्मौघैर्न कैश्चिदपि बाध्यते ॥ १,२०.१८२ ॥

न शस्त्रैर्बाध्यते मन्त्रैर्यन्त्रैस्तन्त्रैर्न गृह्यते ।
नाग्निना न जलेनापि वायुना न च पीड्यते ॥ १,२०.१८३ ॥
अवध्यो देहिभिः सर्वैर्माननीयः सुरैरपि ।
आहारे च विहारे च निद्रायामवबोधने ॥ १,२०.१८४ ॥
सर्वकर्मसु युक्तः सन्स तत्त्वं वेत्ति योगिनि ।
निरालम्बं निराकारमनाद्यन्तं निराश्रयम् ॥ १,२०.१८५ ॥
अनालयं निष्प्रपञ्चं निष्क्रियं निर्मलं महत् ।
निश्चलं निर्मलं नित्यं निर्गुणं व्योम चिन्मयम् ॥ १,२०.१८६ ॥
सदानन्दमनन्तं च सर्वगं विभु संततम् ।
एतद्ब्रह्मपदं तत्त्वं विद्धि त्वं विन्ध्यवासिनि ॥ १,२०.१८७ ॥
अनामये निरालम्बे निरातङ्के महाद्युतौ ।
निराभासे परे तत्त्वे योगयुक्तः प्रलीयते ॥ १,२०.१८८ ॥
दुग्धे दुग्धं घृते चाज्यमग्नावग्निर्जले जलम् ।
क्षिप्तं व्रजेत्तन्मयत्वं तथा ब्रह्मणि लीयते ॥ १,२०.१८९ ॥
[योगाभ्यासफलम्]
मयोदितमिदं सर्वं दिव्यवायुरसायनम् ।
यः सेवेत स पुण्यात्मा कृतकृत्यो जगत्त्रये ॥ १,२०.१९० ॥
सर्वयज्ञफलोपेतः स स्नातः सर्वतीर्थके ।
स यशस्वी स योगीन्द्रः स एवामरवन्दितः ॥ १,२०.१९१ ॥
स एव सिद्धः शुद्धश्च मम तुल्यो वरानने ।
तस्मिन्स्निह्यति मे चेतस्तच्चित्तं मे निवासभूः ॥ १,२०.१९२ ॥
सफलं जीवितं तस्य पूतं तदुभयं कुलम् ।
तत्पदन्यासमात्रेण धरित्री पावनीकृता ॥ १,२०.१९३ ॥
यत्रोषितं क्षणं तेन पुण्यक्षेत्रं हि सा मही ।
धन्या तज्जनयित्री च पुण्यस्तज्जनकः प्रिये ॥ १,२०.१९४ ॥
तद्दर्शनात्सजीवाः स्युः शूलप्रोतादयः शवाः ।
तद्वाक्येनैव सर्वेऽपि लभन्तेऽपि शुभाशुभम् ॥ १,२०.१९५ ॥
तन्मूत्रमलसंस्पर्शाल्लोहा यान्ति सुवर्णताम् ।
किं पुनः कथ्यते देवि मम तुल्यपराक्रमः ॥ १,२०.१९६ ॥

आक्, १, २१
[योगसिद्धिदकुटीनिर्माणविधिः]
श्रीभैरवी ।
कुटी प्रोक्ता त्वया पूर्वं कथं कार्या च कीदृशी ।
तत्र कालं कियच्छंभो वस्तव्यं ब्रूहि मे प्रभो ॥ १,२१.१ ॥
श्रीभैरवः ।
वक्ष्यामि तां कुटीं सम्यक्शृणु त्रिपुरसुन्दरि ।
मेदिनीमुन्नतीकृत्य पुनस्तां सुदृढं प्रिये ॥ १,२१.२ ॥
स्तंभांश्च क्रमशः षट्षट्पङ्क्तिशः स्थापयेदृजून् ।
तुला उपरि चारोप्य दारूणि सुदृढानि च ॥ १,२१.३ ॥
स्थापयेदिष्टकाः पश्चात्सुधया सान्द्रमालिपेत् ।
परितो वलभिं कृत्वा भित्तिं त्रिवलयां शुभाम् ॥ १,२१.४ ॥
कुर्यात्कुटीं च तन्मध्ये तृतीयावरणैः पुनः ।
निखनेच्चतुरश्रं च दशप्रादेशमात्रकम् ॥ १,२१.५ ॥

पञ्चप्रादेशमात्रे च त्वधोनिम्नं तथोर्ध्वतः ।
एवं दशवितस्त्याभिरचिन्त्यां तां मनोहराम् ॥ १,२१.६ ॥
प्राग्द्वारं बाह्यवलये द्वितीये वलये शिवे ।
याम्यद्वारं तृतीये तु प्रत्यग्द्वारं विधीयते ॥ १,२१.७ ॥
द्वाराणां च प्रमाणं हि वितस्तिद्वयमुच्यते ।
सकवाटं प्रतिद्वारमच्छिद्रं चार्गलान्वितम् ॥ १,२१.८ ॥
सुधाप्रलेपितं कुर्याद्भित्तिं श्लक्ष्णतरं स्थलम् ।
दक्षिणे चोत्तरे चैव कुट्यन्तर्वेदिकाद्वयम् ॥ १,२१.९ ॥
सार्धत्रयं वितस्तीनां विशालं चायतं दश ।
प्रादेशमात्रमुत्सेधं मध्यं प्रादेशिकत्रयम् ॥ १,२१.१० ॥
तत्र गोमयसम्भूतं भस्म वस्त्रेण गालितम् ।
पूरयेच्च कुटीभित्तौ चित्रं बहु सुविस्तरम् ॥ १,२१.११ ॥
भैरवं कालमेघाभं ज्वलदूर्ध्वशिरोरुहम् ।
फालाक्षं वक्रदंष्ट्रं च नागकुण्डलमण्डितम् ॥ १,२१.१२ ॥
नागयज्ञोपवीतं च किङ्किणीमुण्डमालिनम् ।
दिगम्बरं तु काकोटीभूषिताङ्घ्रिशिरोरुहम् ॥ १,२१.१३ ॥
हारकेयूरकटकमुद्रिकादिविभूषितम् ।
दशहस्तं च डमरुमङ्कुशं खड्गशूलकम् ॥ १,२१.१४ ॥
वरदं सव्यहस्ताब्जैर्नागं पाशं च घण्टिकाम् ।
मधुपत्रं भयहरं बिभ्राणं वामबाहुभिः ॥ १,२१.१५ ॥
कृष्णाङ्गरागमालाढ्यं सर्वव्याधिविनाशनम् ।
व्याधिभूताहिशत्रुघ्नं क्ष्वेलादिभयनाशनम् ॥ १,२१.१६ ॥
ततो मृत्युञ्जयं शान्तं वटुकं विलिखेत्प्रिये ।
पारदेन्दुहिमश्वेतं बालं द्विभुजशोभितम् ॥ १,२१.१७ ॥
किङ्किणीमालया बद्धकर्णनूपुरशोभितम् ।
बालं कुण्डलसच्छोभं त्रिनेत्रं नग्नरूपिणम् ॥ १,२१.१८ ॥
श्वेतमाल्यानुलेपं च पूर्णपात्रं च वामतः ।
दण्डं दक्षिणहस्तेन दधानं मृत्युनाशनम् ॥ १,२१.१९ ॥
मायाबीजं च वटुकं ह्येनं प्रथममुच्चरेत् ।
आपदुद्धारणायेति लिखेत्पञ्चाक्षरद्वयम् ॥ १,२१.२० ॥
वटुकायेति मायां च वटुकस्य मनुः स्मृतः ।
मूर्तिद्वयोरयं मन्त्रः कथितः सुरवन्दिते ॥ १,२१.२१ ॥
मन्त्रस्यास्य च यद्यन्त्रं तद्यन्त्रं तत्र संलिखेत् ।
रमां च भुवनेशीं च कामं चिन्तामणिं क्रमात् ॥ १,२१.२२ ॥
कर्णिकायां लिखेत्पूर्वं वटुकायेति वीप्सितम् ।
अष्टपत्रे लिखेच्छेषाण्यक्षराण्यष्टपत्रके ॥ १,२१.२३ ॥
बहिः षोडशपत्रेषु विलिखेत्षोडश स्वरान् ।
द्वात्रिंशद्दलके कादिसान्तद्वात्रिंशदक्षरान् ॥ १,२१.२४ ॥
अन्ये दले हलक्षांश्च विलिखेद्भूपुरं बहिः ।
आपदुद्धारणं यन्त्रमपमृत्युनिवारणम् ॥ १,२१.२५ ॥
रक्षाकरं ग्रहार्तानां सर्वेषां प्राणिनामपि ।
स्त्रीवश्यं राजवश्यं च पुंवश्यं पशुवश्यकम् ॥ १,२१.२६ ॥
नानासिद्धिप्रदं नित्यं सर्वरोगविषापहम् ।
हारकेयूररुचिरं कान्त्या विश्वविमोहनम् ॥ १,२१.२७ ॥
महामृत्युञ्जयं देवं भावयेन्मृत्युजिद्भवेत् ।

एवं द्वितीयवर्गस्य तृतीयं पञ्चमेन च ॥ १,२१.२८ ॥
स्वरेण बिन्दुना युक्तं सोन्तं साध्यपदं ततः ।
रक्षशब्दयुगं पश्चात्पूर्वं बीजत्रयं पुनः ॥ १,२१.२९ ॥
प्रतिलोमं समुच्चार्य मन्त्रं मृत्युञ्जयं जपेत् ।
तारं मध्ये ससाध्याख्यं दिग्दले भं समालिखेत् ॥ १,२१.३० ॥
आग्नेयादिदलेष्वन्त्यमक्षरं क्रमशो लिखेत् ।
बाह्ये भूपुरमालिख्य दिक्षु सान्द्रं समालिखेत् ॥ १,२१.३१ ॥
चतुष्कोणे ठकारं च यन्त्रं मृत्युञ्जयात्मकम् ।
अपमृत्युज्वरव्याधिक्ष्वेलमोहविनाशनम् ॥ १,२१.३२ ॥
तत्र चिन्तामणिं देवं चिन्तितार्थप्रदं लिखेत् ।
नीलप्रवालरुचिरं त्रिणेत्रं रुचिराननम् ॥ १,२१.३३ ॥
पाशारुणोत्पलं वामे दक्षे शूलकपालकौ ।
दधानमिन्दुमकुटं ध्यायेदर्धाम्बिकेश्वरम् ॥ १,२१.३४ ॥
वह्निप्रथमवर्गादिषमरेफाः क्रमात्ततः ।
प्राणसद्यान्तसहितः षष्ठस्वरसबिन्दुकः ॥ १,२१.३५ ॥
इदं चिन्तामणेर्मन्त्रं चिन्तितार्थप्रदं शुभम् ।
षोडशस्वरसंवीतं चिन्तामणिमभीष्टदम् ॥ १,२१.३६ ॥
ठकारावेष्टितं कुर्याज्ज्वरापस्मृतिमृत्युहम् ।
ततश्च शारदादेवीमालिखेत्सिद्धिदायिनीम् ॥ १,२१.३७ ॥
शङ्खकुन्देन्दुधवलां मकुटेन्दुकलाधराम् ।
सुधाकुम्भं वराक्षस्रक्संविन्मुद्रां करांबुजैः ॥ १,२१.३८ ॥
बिभ्राणां श्वेतवसनां मौक्तिकाभरणोज्ज्वलाम् ।
वाग्बीजं भुवनेशीं च वदवाक्यद्वयं ततः ॥ १,२१.३९ ॥
वाग्वादिनीं ससम्बुद्धिमग्निपत्नीं समुच्चरेत् ।
एष श्रीमातृकामन्त्रः प्रोक्तः सारस्वतप्रदः ॥ १,२१.४० ॥
आदिबीजद्वयं हित्वा शेषं पूर्ववदुच्चरेत् ।
दशार्णशारदामन्त्रो वाग्विलासप्रदायकः ॥ १,२१.४१ ॥
वियद्वर्णसुकारं च सद्यान्तं सविसर्गकम् ।
कर्णिकायां लिखेत्पूर्वं किञ्जल्केषु स्वरानपि ॥ १,२१.४२ ॥
अष्टच्छदेष्वष्टवर्गान्यशहाद्यैः परैस्त्रिभिः ।
काद्यैश्च पञ्चभिर्वर्णैरष्टवर्गाः समीरिताः ॥ १,२१.४३ ॥
लिखेद्भूपुरकोणेषु ठकारान्दिक्षु विन्यसेत् ।
इदं हि मातृकायन्त्रं विषमृत्युगदापहम् ॥ १,२१.४४ ॥
अघोरं विलिखेद्देवि नीलजीमूतसन्निभम् ।
क्रूरदंष्ट्रं त्रिणेत्रं च नागेन्द्राष्टविभूषितम् ॥ १,२१.४५ ॥
रक्ताङ्गरागवसनं रक्तमालाविराजितम् ।
परश्वथुं च डमरुं खड्गं खेटमिषुं धनुः ॥ १,२१.४६ ॥
त्रिशूलं पूर्णपात्रं च बिभ्राणं चाष्टबाहुभिः ।
भुवनेशीं स्फुरद्वन्द्वं ततः प्रस्फुरवीप्सितम् ॥ १,२१.४७ ॥
घोरं ततोऽघोरतरं तनुरूपं चटद्वयम् ।
प्रकटद्विगुणं चैव कहशब्दयुगं ततः ॥ १,२१.४८ ॥
वमशब्दद्वयं देवि बन्धशब्दं च वीप्सितम् ।
घातयद्वितयं देवि कवचं च फडन्तकम् ॥ १,२१.४९ ॥
एकोत्तरोऽयं पञ्चाशदर्णोऽघोरः स्मृतो मनुः ।
वश्यार्थं तप्तहेमाभं पूर्वोक्ताकृतिसंयुतम् ॥ १,२१.५० ॥

मुक्तौ मृत्युञ्जयार्थे तु श्वेतं पूर्वोक्तविग्रहम् ।
सर्वार्थसिद्धिदं शान्तमघोरास्त्रं लिखेत्प्रिये ॥ १,२१.५१ ॥
मायाबीजं ससाध्यं स्यान्मध्ये च स्वरसंयुतम् ।
तद्बहिःकेसरेष्वेवं विलिखेदष्टवर्गकम् ॥ १,२१.५२ ॥
ततस्त्वष्टदले मन्त्रवर्णान्गुणमितान् लिखेत् ।
अग्रशेषेषु तद्वत्तत्षट्कोणे कवचास्त्रकौ ॥ १,२१.५३ ॥
तद्बहिर्भूपुरं लेख्यमेनदाघोरयन्त्रकम् ।
स्फुरद्वयावृतं मध्ये शक्तिबीजं लिखेत्ततः ॥ १,२१.५४ ॥
षट्कोणे प्रस्फुरयुगं ततश्चाष्टदले क्रमात् ।
षड्भिश्चतुर्भिर्वेदैश्च रसैर्वस्त्रैश्च गोपदैः ॥ १,२१.५५ ॥
ऋतुभिः शिष्टमन्त्रार्णैरमीभिर्विलिखेत्ततः ।
षट्कोणे वह्निचास्त्राभ्यामुद्धृतं वीतकोणकम् ॥ १,२१.५६ ॥
भूपुरेणावृतं यन्त्रमघोरं विलिखेत्प्रिये ।
व्यालारिचोरक्षुद्रापस्मारभूतग्रहापहम् ॥ १,२१.५७ ॥
अथो महागणपतिं लिखेद्विद्रुमसन्निभम् ।
कोटीरचन्द्रशकलं गजास्यं लोचनत्रयम् ॥ १,२१.५८ ॥
तुन्दिलं रक्तवसनं रक्तमालानुलेपनम् ।
दशदोर्दण्डसुभगं वामोरुस्थितयोषितम् ॥ १,२१.५९ ॥
हारकेयूरकटकमुद्रिकाकुण्डलोज्ज्वलम् ।
फलपूरं गदामिक्षुकोदण्डं च त्रिशूलकम् ॥ १,२१.६० ॥
चक्रं सरसिजं पाशमुत्पलं शालिमञ्जरीम् ।
स्वदन्ततुण्डया रत्नकलशं दशभिः करैः ॥ १,२१.६१ ॥
बिभ्राणं पद्मकरया वामोरुस्थितया श्रिया ।
आलिङ्गितं भक्तलोकचिन्तितार्थसुरद्रुमम् ॥ १,२१.६२ ॥
प्रणवं कमलां मायां कामराजं वसुंधराम् ।
क्रमाद्गणपतेर्बीजं महागणपतिं ततः ॥ १,२१.६३ ॥
चतुर्थ्यन्तं ससंबुद्धिं वरं च वरदं तथा ।
ततः सर्वजनं मे च वशमानय शब्दकम् ॥ १,२१.६४ ॥
अग्निपत्नीं समालिख्य चाष्टाविंशतिवर्णकम् ।
मन्त्रं महागणपतेर्मृत्युदारिद्र्यनाशनम् ॥ १,२१.६५ ॥
त्रिकोणे बीजमालिख्य सतारे च गणेशितुः ।
दिक्षु श्रीशक्तिमदनभूबीजानि बहिर्लिखेत् ॥ १,२१.६६ ॥
षट्कोणे बीजषट्कं च तत्संधिष्वङ्गमन्त्रकम् ।
ततोऽष्टदलमध्येषु मन्त्राणि गणशो लिखेत् ॥ १,२१.६७ ॥
अन्त्याक्षरे चान्त्यदले मातृकामनुलोमतः ।
लेखे च प्रतिलोमेनाङ्कुशपाशावृतं ततः ॥ १,२१.६८ ॥
भूमन्दिरेण सुभगं यन्त्रं गणपतेः शुभम् ।
गजान्तं श्रीपदं दिव्यमायुष्यारोग्यवर्धनम् ॥ १,२१.६९ ॥
एतानि यन्त्रजालानि कुट्यन्तर्देवता लिखेत् ।
कुटीभित्तिबहिर्भागे भैरवं वर्णमालिखेत् ॥ १,२१.७० ॥
असिताङ्गं रुरुं चण्डं क्रोधमुन्मत्तभैरवम् ।
कपालिनं भीषणं च संहारं भैरवं क्रमात् ॥ १,२१.७१ ॥
द्वितीयावरणस्यान्तर्भित्तावेकादश क्रमात् ।
रुद्रांस्त्रिलोचनांश्चन्द्रकलाजूटजटान् लिखेत् ॥ १,२१.७२ ॥
तद्बाह्ये नव नाथांश्च नव सिद्धांश्च षोडश ।

सनत्कुमारसनकसनन्दादीन् लिखेत्ततः ॥ १,२१.७३ ॥
तृतीयावरणस्यान्तर्भित्तौ ब्राह्म्यादिमातरः ।
चतुःषष्टिश्च योगिन्यो लेखनीया यथाविधि ॥ १,२१.७४ ॥
तद्भित्तिबाह्ये देवेन्द्रमुखा दिक्पतयः क्रमात् ।
ग्रहाश्च चन्द्रसूर्याद्या अश्विन्याद्याश्च तारकाः ॥ १,२१.७५ ॥
मेषाद्या राशयो लेख्याः सालङ्काराश्च सायुधाः ।
कुटीद्वारविपार्श्वे च गणेशं भैरवं लिखेत् ॥ १,२१.७६ ॥
द्वितीयावरणद्वारपार्श्वे द्वौ शङ्खपद्मकौ ।
गरुत्मन्तं हनूमन्तं तृतीयावरणस्य च ॥ १,२१.७७ ॥
द्वारस्य पार्श्वयोर्देवि विलिखेद्भयभञ्जनौ ।
यस्मिन्देशे कुटी दिव्या कल्पिता योगिसत्तमैः ॥ १,२१.७८ ॥
देशो धन्यतरः श्लाघ्यः पुण्यक्षेत्रं च पावनम् ।
तत्रत्याश्च प्रजा धन्याः स्फीतार्थाः पुण्यकर्मिणः ॥ १,२१.७९ ॥
राष्ट्रं सुभिक्षमारोग्यमनामयसुखावहम् ।
ईतिहीनं कालवृष्टिसहितं धान्यसङ्कुलम् ॥ १,२१.८० ॥
तस्करोपद्रवव्याघ्रसर्पादिभयवर्जितम् ।
तत्र तीर्थानि सर्वाणि गङ्गादीनि वसन्ति च ॥ १,२१.८१ ॥
इन्द्रादयोऽपि विबुधाः सूर्यचन्द्रादयो ग्रहाः ।
योगिन्यो भैरवाः सिद्धा गणेशगुहमातरः ॥ १,२१.८२ ॥
तत्रस्थस्य महीपस्य जयार्थावाप्तिरायुषः ।
सम्भवेच्चक्रवर्तित्वं पुनर्नित्योत्सवोज्ज्वलम् ॥ १,२१.८३ ॥
वन्ध्यानां पुत्रसम्पत्तिः कुटीसंदर्शनाद्भवेत् ।
कुष्ठापस्मारभूतादिमहाव्याधिविनाशनम् ॥ १,२१.८४ ॥
कुटीगता भवेयुस्ते ये सेवन्ते रसायनम् ।
सिद्धिं यान्ति सुखेनैव देवानामपि दुर्लभाम् ॥ १,२१.८५ ॥
[अमरीकल्पः]
देवि चित्रं प्रवक्ष्यामि दिव्यं गुह्यतमं शिवम् ।
अमरीकल्पमनघं सुलभं निजदेहजम् ॥ १,२१.८६ ॥
अणिमाद्यष्टकैश्वर्यदेहलोहादिसिद्धिदम् ।
वमनादिविशुद्धाङ्गो लवणाम्लविवर्जितः ॥ १,२१.८७ ॥
कुटीगतस्तु देवेशि शिवतोयमुदारधीः ।
स्थूलस्य कतकस्यैव दारुणा पानपात्रकम् ॥ १,२१.८८ ॥
कुर्याच्च त्रिफलां पिष्ट्वा लेपयेच्चषकान्तरे ।
कर्षं शिवाम्बुना रात्रौ पात्रं चाधोमुखं प्रिये ॥ १,२१.८९ ॥
स्थापयित्वा पुनः प्रातराद्यन्तं प्रस्रवं त्यजेत् ।
मध्यधाराश्च तत्पात्रे क्षिपेत्तत्त्रिफलां ततः ॥ १,२१.९० ॥
लोडयेदमरीयुक्तं पिबेत्प्रागाननः सदा ।
इष्टदेवान्गुरून्वृद्धान्नत्वार्चितगणेश्वरः ॥ १,२१.९१ ॥
मिताहारो युक्तचेष्टो वातातपविवर्जितः ।
एकमण्डलमात्रेण बाह्यान्तः शुचिभाग्भवेत् ॥ १,२१.९२ ॥
मण्डलेन द्वितीयेन सर्वकुष्ठविनाशनम् ।
मण्डलेन तृतीयेन चतुर्विधविषापहम् ॥ १,२१.९३ ॥
मण्डलेन चतुर्थेन नालिकेराम्बुवद्भवेत् ।
आत्मतोयं पञ्चमेन मलदौर्गन्ध्यनाशनम् ॥ १,२१.९४ ॥
षष्ठमण्डलयोगेन देहदौर्गन्ध्यनाशनम् ।

सप्तमण्डलयोगेन भवेदिन्द्रियपाटवम् ॥ १,२१.९५ ॥
ततोऽष्टमे मण्डले तु रजनीचूर्णकर्षयुक् ।
सेवेत शिवतोयं च यावद्द्विः सप्तमण्डलम् ॥ १,२१.९६ ॥
वलीपलितहीनः स्यान्महाविषभयोज्झितः ।
मण्डले पञ्चदशके कर्षांशौ शृङ्गगन्धकौ ॥ १,२१.९७ ॥
शिवतोयेन सम्मिश्रं प्रपिबेदेकविंशतिम् ।
मण्डलं च तदन्ते स्यात्सिद्धिभाग्देहलोहयोः ॥ १,२१.९८ ॥
द्वाविंशन्मण्डले देवि चाभ्रकं वरया युतम् ।
एवं भजेद्यमी यावदष्टाविंशतिमण्डलम् ॥ १,२१.९९ ॥
मत्तहस्तिबलोपेतो गृध्रदृष्टिरनामयः ।
एकोनत्रिंशति प्राप्ते मण्डले वरया युताम् ॥ १,२१.१०० ॥
सकान्तचूर्णविमलां गोधामपि पिबेत्प्रिये ।
पञ्चत्रिंशन्मण्डलान्तं वज्रकायो भवेन्नरः ॥ १,२१.१०१ ॥
षट्त्रिंशन्मण्डलादि स्वर्णधात्रीरजोऽन्वितम् ।
आत्मगोधान्वितं पेयं तत्तु यावद्द्व्यधिकम् ॥ १,२१.१०२ ॥
चत्वारिंशन्मण्डलान्तं सशरीरः खगो भवेत् ।
त्रिचत्वारिंशन्मण्डले तु प्राप्ते पारदसंयुतम् ॥ १,२१.१०३ ॥
वरायुतं पिबेदूनपञ्चाशन्मण्डलावधिः ।
अणिमादिगुणोपेतो वज्रकायश्च खेचरः ॥ १,२१.१०४ ॥
सिद्धैर्युक्तो निरातङ्को निरपायो निरञ्जनः ।
यदृच्छया सर्वलोके विहरत्येव सर्वदा ॥ १,२१.१०५ ॥
आरभ्य प्रथमं देवि मण्डलान्नित्यमाचरेत् ।
आत्मतोयेन धुत्तूररसेन परिलोडयेत् ॥ १,२१.१०६ ॥
भस्म तेनैव सर्वाङ्गमसकृत्परिमर्दयेत् ।
अन्यकालसमायातमात्मतोयं विशेषतः ॥ १,२१.१०७ ॥
मूर्ध्नि नासापुटे कर्णे दृशि पादकरद्वये ।
शीलयेत्सततं देवि शुद्धदेहो भवेन्नरः ॥ १,२१.१०८ ॥
कदाचिदप्यात्मगोधां भूमौ न विसृजेत्प्रिये ।
अमरीसेविनः पुंसः शिवतोयेन जायते ॥ १,२१.१०९ ॥
सर्वलोहं च कनकं दिव्यं मनुजदुर्लभम् ।
विजयासहितां गोधां प्रतिवासरमापिबेत् ॥ १,२१.११० ॥

आक्, १, २२
[वन्दाककल्पः]
वन्दाको द्विविधः प्रोक्तः पुरुषस्त्रीविभेदतः ।
खर्जूरीपत्रवत्पत्रः पुरुषः सर्वसिद्धिदः ॥ १,२२.१ ॥
स्त्रीसंज्ञस्तु गुणैरल्पो वृत्तपत्रः प्रतापवान् ।
वन्दाकः पादपरुहः शिखरी तरुरोहिणी ॥ १,२२.२ ॥
वृक्षादनी कामिनी च वृक्षरुग्बन्धबन्धकम् ।
वन्दाकस्तिक्ततुवरः कफपित्तश्रमापहः ॥ १,२२.३ ॥
वश्यादिसिद्धिदो वृष्यो विषघ्नश्च रसायनम् ।
[वन्दाकाहरणविधिः]
कृतोपवासः सुस्नातो रक्तमाल्यानुलेपनः ॥ १,२२.४ ॥
मुक्तकेशाम्बरो भूत्वा रात्रौ संयतमानसः ।

वृक्षं प्रदक्षिणं कृत्वा गन्धपुष्पाक्षतादिभिः ॥ १,२२.५ ॥
पूजाद्रव्यैः समभ्यर्च्य बलिं दध्योदनैः किरेत् ।
चिन्तामणिं नृसिंहं च मनुमष्टोत्तरं शतम् ॥ १,२२.६ ॥
जप्त्वा खड्गेन संछिद्य वन्दाकं विधिनाहरेत् ।
वन्दाकानां तु सर्वेषां विधिरेष उदाहृतः ॥ १,२२.७ ॥
अश्विन्यां शुचिरश्वत्थवन्दाकं विधिनाहृतम् ।
क्षीरेण पिष्टमालोड्य पिबेदश्वबलो भवेत् ॥ १,२२.८ ॥
तथैवाश्वत्थवन्दाकमुपरागेऽर्कचन्द्रयोः ।
नृसिंहमन्त्रं प्रजपन् खड्गेनाच्छिद्य चाहरेत् ॥ १,२२.९ ॥
घृष्ट्वांभसा प्रकोष्ठेण लिप्त्वा गोरोचनान्वितम् ।
विधाय तिलकं पश्येत्सर्ववश्यो भवेद्ध्रुवम् ॥ १,२२.१० ॥
न्यग्रोधस्य तु वन्दाकमश्विन्यां विधिनाहरेत् ।
सूत्रेण बन्धयेद्धस्ते ह्यदृश्यो जायते नरः ॥ १,२२.११ ॥
सर्ववश्यं भवेत्क्षीरैः पिष्ट्वा पाने गदाञ्जयेत् ।
अश्विन्यां तु शिरीषस्य वन्दाकं विधिनाहरेत् ॥ १,२२.१२ ॥
सूत्रेण बन्धयेद्धस्ते वीर्यस्तम्भो भवेद्ध्रुवम् ।
अश्विन्यामाहरेद्धीमान् पलाशस्य तु बन्धकम् ॥ १,२२.१३ ॥
हस्ते बद्ध्वा स्पृशेद्यस्तु सा नारी वशगा भवेत् ।
अङ्कोलबन्धमश्विन्यां करे बद्ध्वा जगत्प्रियः ॥ १,२२.१४ ॥
भरण्यां कुशवन्दाकं गृहीत्वा शुभयोगतः ।
बध्नीयाद्दक्षिणे हस्ते तेनादृश्यो भवेन्नरः ॥ १,२२.१५ ॥
भरण्यां फल्गुवन्दाकं धान्यराशौ विनिक्षिपेत् ।
तेन वै धान्यवृद्धिः स्यान्नात्र कार्या विचारणा ॥ १,२२.१६ ॥
भरण्यां बदरीणां च वन्दाकं विधिनाहरेत् ।
बन्धयेद्दक्षिणे हस्ते संलभेदीप्सितं फलम् ॥ १,२२.१७ ॥
कृत्तिकायां तु कतकवन्दाकं विधिनाहरेत् ।
वर्तिमध्ये क्षिपेत्तं च तेन संगृह्य कज्जलम् ॥ १,२२.१८ ॥
स्त्रीणामञ्जनमात्रेण पतिर्वश्यो भवेद्ध्रुवम् ।
कृत्तिकायां शुचिर्भूत्वा जम्बूवन्दाकमाहरेत् ॥ १,२२.१९ ॥
क्षीरेण पिष्टं तत्कल्कं पीत्वा रोगैर्विमुच्यते ।
रोहिण्यां तिन्त्रिणीकस्य वन्दाकं विधिनाहरेत् ॥ १,२२.२० ॥
बद्ध्वा हस्ते स्पृशेद्यं यं सर्ववश्यो भवेन्नरः ।
तिमिरादिषु शस्तं तदसाध्यं घृतमञ्जनात् ॥ १,२२.२१ ॥
क्षौद्रघृष्टेन तेनैव कृतं चक्षुष्यमञ्जनम् ।
बन्धकमुदुम्बरभवं रोहिण्यां गृह्य वलयकं कुर्यात् ।
तद्वलयोपरि विनिहितभाण्डस्थितमोदकं क्षयं नैति ॥ १,२२.२२ ॥
अश्वत्थस्य तु वन्दाकं रोहिण्यां विधिनाहरेत् ॥ १,२२.२३ ॥
गृहे स्थिते च वन्दाके नित्यैश्वर्यं प्रजायते ।
कतकस्य तु वन्दाकं रोहिण्यां विधिनाहरेत् ॥ १,२२.२४ ॥
अञ्जने नेत्रयुगले निधिं पश्यति निश्चितम् ।
तदेव बन्धयेद्धस्ते सर्ववश्यो भवेद्ध्रुवम् ॥ १,२२.२५ ॥
उदुम्बरस्य वन्दाकं रोहिण्यां विधिनाहरेत् ।
हस्ते बद्ध्वा निहन्त्याशु ज्वरं चातुर्थिकं प्रिये ॥ १,२२.२६ ॥
रोहिण्यां मातुलुङ्गस्य बन्धकं तु समाहरेत् ।
धारयेद्दक्षिणे कर्णे जगद्वश्यकरं परम् ॥ १,२२.२७ ॥

रोहिण्यां बिल्ववन्दाकं करे बद्ध्वा जगत्प्रियः ।
मृगशीर्षे शिरीषस्य वन्दाकं सम्यगाहृतम् ॥ १,२२.२८ ॥
हस्ते बद्ध्वा स्पृशेन्नारीं नरं वा वशयेद्ध्रुवम् ।
मृगशीर्षे तु वन्दाकं तिन्त्रिणीवृक्षसम्भवम् ॥ १,२२.२९ ॥
क्षीरेण पिष्ट्वा प्रपिबेददृश्यो जायते नरः ।
तद्दध्ना यः पिबेत्प्रातः सर्वव्याधिहरो भवेत् ॥ १,२२.३० ॥
महिषीतक्रपिष्टेन तेन सर्वाङ्गलेपनम् ।
कृत्वा वह्निगतो यस्तु वह्निना च न दह्यते ॥ १,२२.३१ ॥
तिन्त्रिणीकस्य वन्दाकं गृहे यस्य प्रतिष्ठितम् ।
तस्य चोरभयं नास्ति करे द्यूतजयो भवेत् ॥ १,२२.३२ ॥
उदुम्बरस्य वन्दाकं मृगशीर्षे समाहरेत् ।
हस्ते बद्ध्वा स्पृशेन्नारीं सा नारी वशगा भवेत् ॥ १,२२.३३ ॥
स्त्रीणां हस्ते तु बध्नीयादन्नमध्ये विनिक्षिपेत् ।
जायते चान्नवृद्धिस्तु नात्र कार्या विचारणा ॥ १,२२.३४ ॥
न्यग्रोधस्य तु वन्दाकं मृगशीर्षे समाहरेत् ।
बध्नीयाद्दक्षिणे हस्ते जनवश्यो भवेद्ध्रुवम् ॥ १,२२.३५ ॥
आदाय माटरूषस्य वन्दाकं समुदाहृतम् ।
बद्ध्वा हस्ते जनैर्दीव्यन् स्याद्द्यूतेष्वपराजितः ॥ १,२२.३६ ॥
आर्द्रायां तौम्बुरं ग्राह्यं वन्दाकं विधिना हरेत् ।
क्षीरेण प्रपिबेद्यस्तु तस्य स्याल्लोहमोटनम् ॥ १,२२.३७ ॥
आर्द्रार्के वा पुष्यरवौ वन्दाकं तुम्बुरोर्हरेत् ।
बध्नीयाद्दक्षिणे हस्ते बाणस्तम्भः प्रजायते ॥ १,२२.३८ ॥
पुनर्वसोर्हृतं वंशवन्दाकं क्षीरपेषितम् ।
पीत्वा स्त्रीपुरुषौ वन्ध्यौ प्रसुवाते सुतान्बहून् ॥ १,२२.३९ ॥
नक्तमालस्य वन्दाकमाहरेच्च पुनर्वसौ ।
क्षीरेण पिष्ट्वा प्रपिबेदखिलामयनाशनम् ॥ १,२२.४० ॥
तच्चूर्णस्य मात्रेण नश्यन्ति ग्रहराक्षसाः ।
पुष्ये बन्धूकवन्दाकं गृहीत्वा तं निधापयेत् ॥ १,२२.४१ ॥
क्षेत्रमध्ये रिपोस्तत्र सस्यनाशश्च जायते ।
आश्लेषायां कर्णिकारवन्दाकं सम्यगाहृतम् ॥ १,२२.४२ ॥
बद्ध्वा हस्ते दृढं तेन स्पृशन् वशति तेजनात् ।
मधूकस्य च वन्दाकमाश्लेषायां समाहरेत् ॥ १,२२.४३ ॥
बन्धयेद्दक्षिणे हस्ते व्याघ्रादिभयनाशनम् ।
मघासु मुचुकुन्दस्य वन्दाकं विधिनाहृतम् ॥ १,२२.४४ ॥
निधापयेद्धान्यमध्ये तद्धान्यं त्वक्षयं भवेत् ।
विभीतकस्य वन्दाकं फल्गुन्योः पूर्वयोर्हृतम् ॥ १,२२.४५ ॥
स्थापयेद्धान्यमध्येन तदक्षय्यं क्षणाद्भवेत् ।
फल्गुन्योरन्ययोर्हस्तेऽप्ययमेव विधिः स्मृतः ॥ १,२२.४६ ॥
शाकवृक्षस्य वन्दाकं मघायां विधिनाहरेत् ।
धान्यसंचयकृद्द्वारे धान्यवृद्धिश्च जायते ॥ १,२२.४७ ॥
मौञ्जीवृक्षस्य वन्दाकं मघार्के विधिनाहरेत् ।
शिरसा धारयेन्नित्यं तस्य श्रीर्वशमाप्नुयात् ॥ १,२२.४८ ॥
पलाशस्य तु वन्दाकं हस्तर्क्षे विधिनाहरेत् ।
करे शिरसि बध्नीयाद्व्याघ्रादिग्रहहृद्भवेत् ॥ १,२२.४९ ॥
तिन्दुकस्य च वन्दाकं चित्रायामाहृतं तथा ।

बद्ध्वा हस्ते समस्तानां सध्वधो भवति द्विषाम् ॥ १,२२.५० ॥
कुटजस्य तु वन्दाकं चित्रायां विधिनाहरेत् ।
बध्नीयाद्दक्षिणे हस्ते दुर्लभं चेप्सितं लभेत् ॥ १,२२.५१ ॥
स्वात्यां लिकुचवन्दाकं गृहीत्वा यत्र वस्तुनि ।
निधापयति तत्सर्वमक्षयं नात्र संशयः ॥ १,२२.५२ ॥
बब्बूलबन्धकं स्वात्यां बदर्यास्त्वनुराधके ।
बध्नन्यो धारयेद्धस्ते तत्स्पृष्टा स्त्री वशा भवेत् ॥ १,२२.५३ ॥
आहृत्य धात्रीवन्दाकं विशाखायां यथाविधि ।
शुक्तकारस्य भवने विरुद्धस्य निधापयेत् ॥ १,२२.५४ ॥
सर्वं मद्यमपेयं स्यान्मोक्षस्तस्मिन्समुद्धृते ।
अनुराधासु विधिना ऐन्द्रीवन्दाकमाहृतम् ॥ १,२२.५५ ॥
धान्यमध्ये विनिक्षिप्तं धान्यमक्षयतां नयेत् ।
ज्येष्ठायामाम्रवन्दाकं हृत्वा वेश्यागृहे खनेत् ॥ १,२२.५६ ॥
सा दुर्भगा भवेत्सत्यमुद्धृते मोक्ष उच्यते ।
मूले खदिरवन्दाकं गृहीत्वा विधिपूर्वकम् ॥ १,२२.५७ ॥
बद्ध्वा हस्ते नरः क्षिप्रं दुर्भगः सुभगो भवेत् ।
तदेव पिष्टं क्षीरेण पीतं कुष्ठादिनाशनम् ॥ १,२२.५८ ॥
मूलार्के गोट्टिकायाश्च वन्दाकं विधिनाहरेत् ।
दक्षिणे बन्धयेद्धस्ते स्त्रीवश्यं भवति ध्रुवम् ॥ १,२२.५९ ॥
तदेव शिरसा धार्यं सर्वसिद्धिर्भवेद्ध्रुवम् ।
करवीरस्य वन्दाकं पूर्वाषाढासु साधितम् ॥ १,२२.६० ॥
धारयेच्छिरसा युद्धे स भवेदपराजितः ।
पूर्वाषाढासु वन्दाकं बदरीवृक्षसम्भवम् ॥ १,२२.६१ ॥
पिबेत्क्षीरेण या वन्ध्या सा बहूंश्च सुतांल्लभेत् ।
कुरवस्य तु वन्दाकं पूर्वाषाढार्कवारके ॥ १,२२.६२ ॥
बन्धयेद्दक्षिणे हस्ते ह्यदृश्यो जायते नरः ।
उत्तराषाढनक्षत्रे ग्राह्यं मन्दारबन्धकम् ॥ १,२२.६३ ॥
पलाशबन्धकं वाथ करे बद्ध्वा वशंकरम् ।
श्रवणे चित्रकोद्भूतं वन्दाकं प्राप्यते न तु ॥ १,२२.६४ ॥
कङ्कुणीतैलघृष्टेन ताम्रपत्रं च लेपयेत् ।
पुटपाकविधानेन तत्स्वर्णं भवति ध्रुवम् ॥ १,२२.६५ ॥
एरण्डस्य तु वन्दाकं श्रवणार्के समाहरेत् ।
बन्धयेद्दक्षिणे हस्ते सदा द्यूतजयो भवेत् ॥ १,२२.६६ ॥
धनिष्ठायां तु बदरीवन्दाकं विधिनाहृतम् ।
बद्ध्वा करे स्पृशेद्यं यं स स दासो भवेद्ध्रुवम् ॥ १,२२.६७ ॥
हृतं पुन्नागवन्दाकं वारुणेषु यथाविधि ।
क्षीरेण पिष्ट्वा प्रपिबन्महानागबलो भवेत् ॥ १,२२.६८ ॥
नक्तमालस्य वन्दाकं मघार्के विधिनाहरेत् ।
विधिना धारयेद्बाहौ पिशाचानां च दर्शनम् ॥ १,२२.६९ ॥
तिन्त्रिणीकस्य वन्दाकं पुन्नर्क्षे विधिनाहरेत् ।
बन्धयेद्दक्षिणे हस्ते नित्यं द्यूतजयो भवेत् ॥ १,२२.७० ॥
पुन्नर्क्षे वंशवन्दाकमदृश्यो जायते करे ।
शिरीषस्य तु वन्दाकमुत्तरे विधिनाहरेत् ॥ १,२२.७१ ॥
करे शिरसि बध्नीयाद्व्याघ्रादिग्रहहृद्भवेत् ।
मघायां स्थापयेत्क्षेत्रे वन्दाकं मधुकोद्भवम् ॥ १,२२.७२ ॥

पक्षिणां मूषिकानां च जायते तुण्डबन्धनम् ।
पलाशस्य तु वन्दाकं हस्तर्क्षे विधिनाहरेत् ॥ १,२२.७३ ॥
लिङ्गलेपं प्रकुर्वीत वीर्यस्तम्भो भवेद्ध्रुवम् ।
क्षीरेणालोड्य वल्लीकं क्षौद्रं पिष्ट्वा निषेचयेत् ॥ १,२२.७४ ॥
वङ्गं तु सप्तधा देवि तद्वङ्गं रजतं भवेत् ।
पलाशस्य तु वन्दाकं हस्तर्क्षे विधिनाहरेत् ॥ १,२२.७५ ॥
क्षीरेण प्रपिबेद्यस्तु ह्यदृश्यो जायते नरः ।
तिन्दुकस्य च वन्दाकं चित्रायामाहृतं तथा ॥ १,२२.७६ ॥
बद्ध्वा हस्ते समस्तानामवध्यो भवति द्विषाम् ।
हरीतक्यास्तु वन्दाकं पूर्वभाद्रपदाहृतम् ॥ १,२२.७७ ॥
क्षीरेण कल्कितं पीत्वा चरेद्वररुचेः समः ।
उत्तरास्वर्कवन्दाकं हृतं भाद्रपदासु तत् ॥ १,२२.७८ ॥
प्रलेपाद्यैः परं हन्याद्विषं स्थावरजङ्गमम् ।
रेवत्यां बोधिवन्दाकलतया कृतकौतुका ॥ १,२२.७९ ॥
वन्ध्यापि लभते गर्भं पीत्वा गोपयसा च तत् ।
रेवत्यां वटवन्दाकं वल्मीकमधुघर्षितम् ॥ १,२२.८० ॥
अक्षिदोषेष्वतिश्रेष्ठमक्षरावरणादिषु ।
रेवत्यां वटवन्दाकं गृहीत्वा धारयेद्भुजे ॥ १,२२.८१ ॥
महानागबलोपेतो महागणश्च जायते ।
समुद्धृतं विशाखायां वन्दाकं राजवृक्षकम् ॥ १,२२.८२ ॥
निवारयति गेहस्थं वैश्वानरभयं गृहे ।
रोहिण्यां वटवन्दाकं कटिस्थं वीर्यवर्धनम् ॥ १,२२.८३ ॥
अश्वत्थभववन्दाकं रेवत्यां गर्भदं स्मृतम् ।
विषवृक्षोत्थवन्दाकं पूर्वाषाढोद्धृतं यदि ॥ १,२२.८४ ॥
प्रलिप्तं तनुते भूतपिशाचादिप्रभाषणम् ।
चुल्लिकान्तर्गतं कुर्यात्सभक्तां पानसन्ततिम् ॥ १,२२.८५ ॥
द्यूते जाम्बववन्दाकं रेवत्यां जयकारकम् ।
कुर्यात्कुरववन्दाकं हस्तस्थं बाणवारणम् ॥ १,२२.८६ ॥
मधूकवृक्षवन्दाकं धान्यस्थं धान्यवृद्धिदम् ।
पलाशतरुवन्दाकं वाक्प्रदं क्षीरसेवितम् ॥ १,२२.८७ ॥
वेश्यायां निम्बवन्दाकं गृहान्तर्निहितं यदि ।
वश्यं करोति साश्चर्यमा जन्ममरणान्तिकम् ॥ १,२२.८८ ॥

आक्, १, २३
[विशिष्टा रससंस्काराः]
श्रीभैरवी ।
श्रुतं सर्वं मया देव दिव्यं सर्वरसायनम् ।
शंभो तव प्रसादेन कृपांभोधे सुरेश्वर ॥ १,२३.१ ॥
विज्ञापयिष्याम्यपरं सर्वलोकहितङ्करम् ।
वृद्धस्त्रीबालषण्ढानामन्येषां रोगिणामपि ॥ १,२३.२ ॥
रसायनेष्वशक्तानां कथं सौख्यं भवेत्प्रभो ।
सर्वानुग्राहक श्रीमन् तदाज्ञापय भैरव ॥ १,२३.३ ॥
श्रुत्वा देव्याः स्तुतिपरं सर्वलोकहितप्रदम् ।
श्रुत्वा मन्दस्मितं देवो जगादेत्थं परं वचः ॥ १,२३.४ ॥

श्रीभैरवः ।
साधु साधु महाभागे लोकानां जननी यतः ।
तस्माल्लोकहितं पृष्टं तद्वक्ष्याम्यहमीश्वरि ॥ १,२३.५ ॥
रसादिसंस्कारविधिं सर्वरोगनिबर्हणम् ।
यथाक्रमं प्रवक्ष्यामि श्रूयतामवधानतः ॥ १,२३.६ ॥
रसेन्द्रो रसराजश्च रसः सूतश्च पारदः ।
शिवबीजं शिवो जैत्रो रसलोहो महारसः ॥ १,२३.७ ॥
रसोत्तमो महातेजाः सूतराट्चपलोऽमृतः ।
धुत्तुरो लोकनाथश्च प्रभुरिन्द्रो भवस्तथा ॥ १,२३.८ ॥
रुद्रतेजाः खेचरश्च रसधातुरचिन्त्यजः ।
अमरो देहदः स्कन्दः स्कन्देशो मृत्युनाशनः ॥ १,२३.९ ॥
देवो रसायनः श्रेष्ठो यशोदः पावनः स्मृतः ।
प्रोक्ता दिव्यरसाश्चैव त्रयस्त्रिंशच्च नाम च ॥ १,२३.१० ॥
दोषयुक्तः सूतराजो विषमेव वरानने ।
दोषहीनो रसः साक्षादमृतं नात्र संशयः ॥ १,२३.११ ॥
तस्मात्पारदसंस्कारं दोषघ्नं शृणु पार्वति ।
रसाचार्यो भिषक्श्रेष्ठो यतात्माघोरमन्त्रवित् ॥ १,२३.१२ ॥
[रसशोधनसंस्काराः; प्रथमः प्रकारः]
शुभर्क्षे शुभलग्नेषु सुमुहूर्ते सुवासरे ।
पूर्वोक्तवत्सूतपूजां कुर्यादादौ शुचिस्थले ॥ १,२३.१३ ॥
शतं पलानां पञ्चाशत्पञ्चविंशति वा पुनः ।
दश वा पञ्च वा देवि नैतस्मादूनमिष्यते ॥ १,२३.१४ ॥
लोहजे वा शिलोत्थे वा खल्वे सूतं विनिक्षिपेत् ।
कलांशं सूतराजस्य चूर्णेष्टकनिशारजः ॥ १,२३.१५ ॥
जम्बीराम्लेन संमर्द्य तप्तखल्वे दिनं प्रिये ।
क्षालयेदुष्णसौवीरैर्नागदोषो विनश्यति ॥ १,२३.१६ ॥
अङ्कोलेनेन्द्रवारुण्या वङ्गदोषो विनश्यति ।
आरग्वधेन च मलं चित्रके नागदूषणम् ॥ १,२३.१७ ॥
कृष्णधूर्तेन चाञ्चल्यं त्रिफलाभिर्विषं हरेत् ।
गिरिदोषं त्रिकटुकैरसह्याग्निस्तु गोक्षुरैः ॥ १,२३.१८ ॥
वङ्गादिसप्तदोषाणां नाशार्थं सप्तवासरम् ।
तत्तच्चूर्णैः कलांशैश्च कुमार्या रससंयुतैः ॥ १,२३.१९ ॥
मर्दयित्वा रसं पश्चात्क्षालयेदुष्णकांजिकैः ।
पारदः सकलैर्दोषैर्मुच्यते सप्तकञ्चुकैः ॥ १,२३.२० ॥
वैद्यकर्मणि योज्यश्चेद्रसः स्यात्सर्वरोगहा ।
[द्वितीयः प्रकारः]
देवदारुमलयजजयावायसतुण्डिका ॥ १,२३.२१ ॥
कुमारीमुसलीवन्ध्याकर्कोटीरससंयुतम् ।
सूतं दिनं मर्दयेच्च पुनः पातनयन्त्रके ॥ १,२३.२२ ॥
पातयेद्योजयेत्सूतं शुद्धं वैद्यस्य कर्मणि ।
[तृतीयः प्रकारः]
दग्धं पाषाणचूर्णं च निशाकन्यारसै रसम् ॥ १,२३.२३ ॥
मर्दयेद्दिनमेकं च पूर्वयन्त्रे च पातयेत् ।
एवं संस्कारसंशुद्धं योजयेद्वैद्यकर्मणि ॥ १,२३.२४ ॥
[चतुर्थः प्रकारः]

दरदं याममात्रं तु पारिभद्रद्रवैः प्रिये ।
अथवा जम्बीररसैर्मर्दयित्वा तु पाचयेत् ॥ १,२३.२५ ॥
यन्त्रे पातनके देवि दोषकञ्चुकवर्जितः ।
[पञ्चमः प्रकारः]
पुनर्नवारसैः पेष्यं धान्याभ्रं पारदं समम् ॥ १,२३.२६ ॥
तप्तखल्वे दिनं कृत्वा वज्रमूषागतं रसम् ।
पचेद्भूधरयन्त्रे च पुनः संमर्दयेच्च तम् ॥ १,२३.२७ ॥
पूर्वद्रवैर्यथापूर्वं मर्दनं पाचनं पुनः ।
कृत्वैतं दशवारं तं पात्यं पातनयन्त्रके ॥ १,२३.२८ ॥
शुद्धः स्यात्पारदो देवि योज्यो योगे रसायने ।
[षष्ठः प्रकारः]
दशमांशं रसाद्गन्धं तप्तखल्वे विनिक्षिपेत् ॥ १,२३.२९ ॥
वराजम्बीरकन्याग्निद्रवैर्यामं विमर्दयेत् ।
पातयेत्पातनायन्त्रे कुर्यादेवं तु सप्तधा ॥ १,२३.३० ॥
सगन्धकं मर्दनं च पातनं भवति प्रिये ।
शुद्धः स्यात्पारदो देवि योज्यः पारदकर्मणि ॥ १,२३.३१ ॥
[सप्तमः प्रकारः]
तिलतैलैर्माहिषिकैर्मूत्रैर्मद्याम्लकेन च ।
गोमांसैर्हिङ्गुलं पाच्यं लोहपात्रे क्रमाग्निना ॥ १,२३.३२ ॥
सप्ताहं लोहदण्डेन चालयेत्तद्द्रवं मुहुः ।
सार्द्रं मयूरपित्तेन भावयेदातपे दिनम् ॥ १,२३.३३ ॥
पातयेत्पातनायन्त्रे दरदं खरवह्निना ।
शुद्धो भवेच्चतुर्यामात्पारदो योगवाहकः ॥ १,२३.३४ ॥
[जारणार्हो वडबानलविडः]
शृणु देवि प्रवक्ष्यामि जारणार्हं बिडं प्रिये ।
चूर्णं कृत्वा दग्धशङ्खं घर्मेऽर्कक्षीरभावितम् ॥ १,२३.३५ ॥
कुर्याद्दिनं ततो देवि धूमसारं च भावयेत् ।
दिनं जम्बीरकरसैरातपे चातितीव्रके ॥ १,२३.३६ ॥
चतुर्याममजामूत्रैः षोडशांशं सुवर्चलम् ।
यथा सान्द्रत्वमाप्नोति तावत्क्वाथ्यं वरानने ॥ १,२३.३७ ॥
नरमूत्रे षोडशांशे कण्टकारीं समूलकाम् ।
यावद्घनीभवेत्तावत्क्वाथनीया प्रयत्नतः ॥ १,२३.३८ ॥
तिन्त्रिणीक्षारकासीससर्जक्षाराः शिलाजतु ।
जम्बीरस्य रसैः सर्वं चतुर्यामं पृथक्पृथक् ॥ १,२३.३९ ॥
जेपालं तत्त्वचाहीनं मूलकक्षारसैन्धवम् ।
गुञ्जां च टङ्कणं शिग्रुद्रवैर्भाव्यं पृथक्पृथक् ॥ १,२३.४० ॥
जम्बीराणां द्रवैर्भाव्यं शङ्खाद्यं तत्त्रयोदश ।
सर्वं समांशं च दिनमेकीकृत्य तु गालितम् ॥ १,२३.४१ ॥
रक्षयेत्सर्वदा ज्ञेयो नाम्ना च वडबानलः ।
सुवर्णादिमलोहानां रत्नानां जारणे तथा ॥ १,२३.४२ ॥
अभ्राद्युपरसानां च योजनीयं प्रयत्नतः ।
[पारदभस्मविधिः; प्रथमः प्रकारः]
शुद्धसूतं शुद्धगन्धं मर्दयेद्गोघृतैः समम् ॥ १,२३.४३ ॥
पिण्डीभूतं कुमार्याश्च दलगर्भे निवेशयेत् ।
सम्यक्सूत्रेण संवेष्ट्य तमयस्कान्तसंपुटे ॥ १,२३.४४ ॥

निरुध्य तं मृदुपुटे त्रिधा पाच्यं पुनः प्रिये ।
आदाय दृढमूषायामन्धयित्वा धमेत्सुधीः ॥ १,२३.४५ ॥
भस्मीभवेत्सूतराजो योज्यो योगे रसायने ।
[द्वितीयः प्रकारः]
छायाशुष्काणि कुर्वीत शाकपक्वफलानि च ॥ १,२३.४६ ॥
मर्दयेदर्कपयसा तेन मूषोदरं लिपेत् ।
अग्रप्रसूतगोजातजरायोः शिषितं रजः ॥ १,२३.४७ ॥
मूषामध्ये क्षिपेत्पश्चात्सूतं गन्धश्च तद्रजः ।
क्षिप्त्वा निरुध्य च धमेद्भस्मीभवति पारदः ॥ १,२३.४८ ॥
[तृतीयः प्रकारः]
वन्ध्या कार्कोटकी काकतुण्डी च कटुतुम्बिका ।
कञ्चुकी नलिका काकमाची वै कालमञ्जरी ॥ १,२३.४९ ॥
काकजङ्घास्त्विमाः सर्वाः पिष्ट्वा मूषान्तरे क्षिपेत् ।
पूर्वोक्तवन्ध्यामुख्याभिरष्टाभिर्मर्दयेद्रसम् ॥ १,२३.५० ॥
तद्रसं लिप्तमूषायां क्षिप्त्वा रुद्ध्वा च भूधरे ।
पचेदेवं चाष्टवारमेवं मूषाप्रलेपनम् ॥ १,२३.५१ ॥
मर्दनं धमनं कुर्याद्भूयो भूयः सुरेश्वरि ।
मृतो भवति सूतेन्द्रो योग्यो रोगे रसायने ॥ १,२३.५२ ॥
[चतुर्थः प्रकारः]
नियामकौषधैर्मर्द्यं चतुर्यामं रसं दृढम् ।
द्विगुणे गन्धतैले च शनैर्मन्दाग्निना पचेत् ॥ १,२३.५३ ॥
यावत्खोटत्वमाप्नोति तावदेवं पचेद्रसम् ।
तत्खोटं संपुटे लौहे क्षिप्त्वा रुन्ध्याद्दृढं सुधीः ॥ १,२३.५४ ॥
पथ्याजलैर्लोहकिट्टं पिष्ट्वा सम्पुटमालिखेत् ।
तस्योर्ध्वं श्रावके काचं कृत्वा नागं विनिक्षिपेत् ॥ १,२३.५५ ॥
स नागो द्रवते यावत्तावदेवं धमेत्प्रिये ।
यावन्न याति काठिन्यं तावन्नैव धमेत्सुधीः ॥ १,२३.५६ ॥
पुनः कठिनतां प्राप्ते धमेत्पूर्वोक्तवन्मुहुः ।
त्रियामधमनादेवं भस्मीभवति पारदः ॥ १,२३.५७ ॥
भस्मीकृते मूलिकाभिर्जारणारहितो रसः ।
देहे लोहे न योज्यः स्याद्योज्यो भेषजकर्मणि ॥ १,२३.५८ ॥
[पञ्चमः प्रकारः]
द्विगुणे गन्धतैले च शुद्धं सूतं विमर्दयेत् ।
एकाहं तं पुनर्मर्द्यं सर्पाक्षीभृङ्गराडपि ॥ १,२३.५९ ॥
विष्णुक्रान्ता त्र्यहं चैषां रसैः श्लक्ष्णं विमर्दयेत् ।
पचेद्यन्त्रे त्रिसंघट्टे ह्यष्टवारमिति प्रिये ॥ १,२३.६० ॥
कुर्याद्भस्मति सूतेन्द्रो रोगसंघातनाशनः ।
[षष्ठः प्रकारः]
श्वेताङ्कोलस्य मूलोत्थरसैर्मर्द्यस्त्र्यहं रसः ॥ १,२३.६१ ॥
मूषायां निक्षिपेद्रुद्ध्वा पचेद्भूधरयन्त्रके ।
पारदो भस्मतां याति सर्वरोगहरः परः ॥ १,२३.६२ ॥
[सप्तमः प्रकारः]
विष्णुक्रान्तां वेदिकां च काञ्जिकेन विमर्दयेत् ।
तत्कल्केन रसो मर्द्यः सप्तधा मूर्छितोत्थितः ॥ १,२३.६३ ॥
तं रसं श्रावके क्षिप्त्वा सिञ्चयेत्तद्रसैर्मुहुः ।

दीपाग्निना दिनं पच्याद्भस्म स्याल्लवणाकृतिः ॥ १,२३.६४ ॥
[अष्टमः प्रकारः]
काकोदुंबरिकाक्षीरैर्भावयेत्सोमरामठम् ।
पुनः पुनः सप्तधैवं शोषयेन्मर्दयेत्सुधीः ॥ १,२३.६५ ॥
काकोदुम्बरपञ्चाङ्गं षोडशांशे जले क्षिपेत् ।
यथैकांशोऽवशिष्टः स्यात्तेन तद्धिङ्गु मर्दयेत् ॥ १,२३.६६ ॥
तद्गोलके रसं क्षिप्त्वा मूषायां तं च रोधयेत् ।
भूधरे च पुटेदेवमष्टवारं पुनः पुनः ॥ १,२३.६७ ॥
पुटे पुटे च तद्धिङ्गु दद्यात्सूतो मृतो भवेत् ।
[नवमः प्रकारः]
उरुबूकस्य बीजानि तथापामार्गजानि च ॥ १,२३.६८ ॥
पूर्णयेत्तच्च मूषायां क्षिप्त्वा सूतं ततः क्षिपेत् ।
तदूर्ध्वं पूर्वचूर्णं च सम्यङ्मूषां निरोधयेत् ॥ १,२३.६९ ॥
पचेल्लघुपुटैरेवं चतुर्भिर्भस्मतां व्रजेत् ।
[दशमः प्रकारः]
कुड्डुहुञ्च्याः कन्दमध्ये कान्तास्तन्यपरिप्लुते ॥ १,२३.७० ॥
रसं क्षिप्त्वा मुखं रुद्ध्वा तन्मज्जकल्कतः सुधीः ।
तं गोमयैः समालिप्य स्वेदयेद्गोमयाग्निना ॥ १,२३.७१ ॥
एवं कृते सप्तवारं रसो भस्मत्वमाप्नुयात् ।
[एकादशः प्रकारः]
अङ्कोलस्य शिफानीरैः सूतं गन्धं समं समम् ॥ १,२३.७२ ॥
दिनमेकं मर्दयेच्च मूषागर्भे निरोधयेत् ।
पुटेद्भूधरयन्त्रे च दिनान्ते भस्म जायते ॥ १,२३.७३ ॥
[द्वादशः प्रकारः]
सूतं धान्याभ्रकं तुल्यं मारकौषधिजै रसैः ।
मर्दयेद्दिनमेकं तु तत्कल्कैर्वस्त्रलेपनम् ॥ १,२३.७४ ॥
तद्वस्त्रं वर्तिकां कृत्वा धृत्वा दंशेन दीपयेत् ।
तद्द्रुतिं पतितां कांस्ये कृष्णवर्णं च तद्भवेत् ॥ १,२३.७५ ॥
तत्पुनर्मारकैर्मर्द्यं पातनायन्त्रके पचेत् ।
मृतो भवेद्दिनैकेन तद्भस्माखिलरोगहृत् ॥ १,२३.७६ ॥
[त्रयोदशः प्रकारः]
कालधुत्तूरतैलेन मर्दनीयश्च पारदः ।
ततो नियामकैर्मर्द्याद्दिनैकं कूर्मयन्त्रके ॥ १,२३.७७ ॥
पाचयेद्भस्मतां याति शुभ्रः स्यात्सर्वरोगहा ।
[चतुर्दशः प्रकारः]
शुद्धसूतादर्धभागं शुद्धं गन्धं विमर्दयेत् ॥ १,२३.७८ ॥
मारकौषधजैर्द्रावैर्दिनं मूषागतं पचेत् ।
यन्त्रे भूधरसंज्ञे च दिनेनैकेन भस्मति ॥ १,२३.७९ ॥
[पञ्चदशः प्रकारः]
सूतमभ्रं वटक्षीरैस्त्रियामं मर्दयेत्प्रिये ।
मूषागर्भे विनिक्षिप्य करीषाग्नौ दिनं पचेत् ॥ १,२३.८० ॥
भस्मीभवति सूतेन्द्रः शुभ्रः सर्वार्तिनाशनः ।
[षोडशः प्रकारः]
मुखीकृते वासिते च पारदे समकाञ्चनम् ॥ १,२३.८१ ॥
जारयेत्पूर्वयोगेन ततो गन्धं समं क्षिपेत् ।

दिव्यौषधिद्रवैर्मर्द्यं दिनं मूषाधृतं रसम् ॥ १,२३.८२ ॥
दिवानक्तं करीषाग्नौ पचेद्वा तुषवह्निना ।
स्वेदयेत्तं समुद्धृत्य भूयो दिव्यौषधोद्भवैः ॥ १,२३.८३ ॥
बीजैः समांशैः संमर्द्यं चतुर्यामं सुरेश्वरि ।
वज्रमूषागतं धाम्यं भस्मीभवति पारदः ॥ १,२३.८४ ॥
तद्भस्म दिव्यं युञ्जीत सदा रोगे रसायने ।
[सप्तदशः प्रकारः]
स्वजीर्णे पारदे स्वर्णं सममम्लेन मर्दयेत् ॥ १,२३.८५ ॥
पिष्टीभूतं काञ्जिकेन प्रक्षाल्यादाय तां पुनः ।
पिष्ट्यर्धं शुद्धगन्धं च तदर्धं टङ्कणं क्षिपेत् ॥ १,२३.८६ ॥
सर्वतुल्यां निशां नारीपुष्परक्तद्रवैर्दिनम् ।
मर्दयेत्तां दिनान्ते च कुर्यात्तद्गोलकं ततः ॥ १,२३.८७ ॥
पचेद्गड्डुकयन्त्रे च दिनं मन्दाग्निना सुधीः ।
समादाय विचूर्ण्यैव दत्त्वा तत्समगन्धकम् ॥ १,२३.८८ ॥
गर्भयन्त्रे त्र्यहं पाच्यं लघुना तत्तुषाग्निना ।
रसो भस्म भवेद्देवि निरुत्थः स्याद्रसायनम् ॥ १,२३.८९ ॥
[अष्टादशः प्रकारः]
कर्षत्रयं शुद्धसूतं कर्षं ताम्ररजः प्रिये ।
अम्लैः संमर्दयेद्गाढं दिनं खल्वे ततो भवेत् ॥ १,२३.९० ॥
पिष्टिस्तां क्षालयेत्तोयैस्तत आदाय निर्मलम् ।
माक्षीकसत्वं तत्सर्वं चक्रमर्दच्छदद्रवैः ॥ १,२३.९१ ॥
त्रिदिनं मर्दयेद्गाढं तां पिष्टिं गर्भयन्त्रके ।
तुषाग्निना पचेद्देवि त्रिदिनं वा दिवानिशम् ॥ १,२३.९२ ॥
करीषाग्नौ भवेत्सूतभस्म रोगजरापहम् ।
[एकोनविंशः प्रकारः]
सूतं स्वर्णं व्योमसत्वं समं स्वर्णसमं बिडम् ॥ १,२३.९३ ॥
रम्भादण्डद्रवैः सर्वं तत्खल्वे मर्दयेद्दिनम् ।
ततो दिव्यौषधोद्भूतैर्बीजैस्तुल्यं दिनद्वयम् ॥ १,२३.९४ ॥
सह संमर्दयेद्रम्भातोयैस्तद्गर्भयन्त्रके ।
पूर्वक्रमेण विपचेद्रसभस्म भवेच्छुभम् ॥ १,२३.९५ ॥
जरामरणरोगघ्नं सर्वसिद्धिप्रदायकम् ।
[विंशः प्रकारः]
रसेन्द्रं विमलासत्वं तुल्यं मर्द्य दिनत्रयम् ॥ १,२३.९६ ॥
सिन्दुवारछदरसैः पिष्टिः स्यात्तां विनिक्षिपेत् ।
काचकूप्यन्तरे कूपीं सप्तमृत्कर्पटैर्लिपेत् ॥ १,२३.९७ ॥
शोषयेद्वालुकायन्त्रे दिनं मन्दाग्निना पचेत् ।
रसभस्म भवेद्दिव्यं रुग्जरामरणापहम् ॥ १,२३.९८ ॥
[एकविंशः प्रकारः]
कर्षद्वयं रसेन्द्रं च तदर्धं शुद्धगन्धकम् ।
माक्षीकसत्वं गन्धांशं तत्सर्वं मर्दयेद्दिनम् ॥ १,२३.९९ ॥
निर्गुण्डीपत्रसारैश्च तं गोलं निक्षिपेत्प्रिये ।
मूषामध्ये ततो मूषावक्त्रं रुद्ध्वा विनिक्षिपेत् ॥ १,२३.१०० ॥
तां मूषां गड्डुकायन्त्रे पचेन्मन्दाग्निना दिनम् ।
रसभस्म भवेद्दिव्यं सिन्दूरारुणसन्निभम् ॥ १,२३.१०१ ॥
जरामरणरोगघ्नं सर्वसिद्धिप्रदं शुभम् ।

[द्वाविंशः प्रकारः]
पक्वमूषोदरे तुल्यगन्धकान्तरितं रसम् ॥ १,२३.१०२ ॥
तयोश्चतुर्गुणं दत्त्वा काकमाचीरसं पुनः ।
आच्छाद्य गड्डुकायन्त्रे तां निधाय पचेत्क्रमात् ॥ १,२३.१०३ ॥
मृदुमध्यमचण्डाख्यवह्नौ यामचतुष्टयम् ।
ततश्च सर्वरोगघ्नं रसभस्म भवेच्छुभम् ॥ १,२३.१०४ ॥
[त्रयोविंशः प्रकारः]
स्नुहीक्षीरैर्दिनं सूतं मर्दयेत्तदभावतः ।
अम्लवल्ल्या रसैरेव तं रसं गन्धकैः समम् ॥ १,२३.१०५ ॥
गर्भयन्त्रे विनिक्षिप्य पूर्ववद्विपचेद्बुधः ।
मृतो भवेद्रसः सोऽयं सर्वरोगहरो भवेत् ॥ १,२३.१०६ ॥
[चतुर्विंशः प्रकारः]
गुञ्जाफलं रससमं मधुटङ्कणयावकैः ।
भृङ्गपत्ररसैर्युक्तं दिनमेकं विमर्दयेत् ॥ १,२३.१०७ ॥
छादितं वज्रमूषायां धमयेन्मृदुवह्निना ।
अयं रसायनो वृष्यो रसः स्याच्छशिसन्निभः ॥ १,२३.१०८ ॥
[पञ्चविंशः प्रकारः]
समं गन्धरसं शुद्धं कीटमारिणिकाद्रवैः ।
अजमार्यहिमार्योर्वा श्वेताङ्कोलरसेन वा ॥ १,२३.१०९ ॥
मर्दयेत्त्रिदिनं क्षिप्त्वा मृण्मये संपुटे ततः ।
दिनमेकं करीषाग्नौ तुषाग्नौ वा दिनत्रयम् ॥ १,२३.११० ॥
पचेत्ततः सूतभस्म जायते रुग्जरापहम् ।
[षड्विंशः प्रकारः]
ताम्राभ्रपातनायोगाच्छोधितं पारदं प्रिये ॥ १,२३.१११ ॥
वज्रभस्म समं हंसपादीद्रावैर्विमर्दयेत् ।
दिव्यौषधिभवैर्बीजैर्वज्रमूषान्तरं लिपेत् ॥ १,२३.११२ ॥
तस्मिन्पूर्वरसं क्षिप्त्वा रुद्ध्वाथ त्रिदिनं पचेत् ।
तुषाग्निना तत उद्धृत्य तत्तुल्यं द्रुतपारदम् ॥ १,२३.११३ ॥
हंसपादीरसैः सर्वं मर्दयेत्त्रिदिनं ततः ।
पूर्ववत्तं पचेत्सोऽयं रसो भस्मति निश्चयः ॥ १,२३.११४ ॥
जरामरणरोगघ्नः सर्वसिद्धिप्रदः शुभः ।
[सप्तविंशः प्रकारः]
वासितं पारदं कर्षमष्टगुञ्जं सुवर्णकम् ॥ १,२३.११५ ॥
मृतवज्रं चतुर्गुञ्जं मर्द्यं हंसपदीरसैः ।
तप्तखल्वे वज्रमूषागतं कृत्वा निरोधयेत् ॥ १,२३.११६ ॥
पचेद्भूधरयन्त्रे च पुनरादाय तं रसम् ।
हंसपादीद्रवैर्मर्द्यं तप्तखल्वे दिनत्रयम् ॥ १,२३.११७ ॥
पूर्ववद्भूधरे यन्त्रे पचेत्तं च पुनः पुनः ।
एवं शतपुटं कृत्वा भस्म स्याद्रक्तवर्णकम् ॥ १,२३.११८ ॥
जरामरणदारिद्र्यनाशनं भवनाशनम् ।
[अष्टाविंशः प्रकारः]
युगांशः शुद्धसूतः स्यादेकांशं ताम्रचूर्णकम् ॥ १,२३.११९ ॥
अम्ले दिनं मर्दयेत्तं प्रक्षाल्यादाय पिष्टिकाम् ।
ताप्यसत्वं पिष्टिसमं चक्रमर्ददलद्रवैः ॥ १,२३.१२० ॥
मर्दयेत्त्रिदिनं सर्वं गोलकं गर्भयन्त्रके ।

निक्षिप्य त्रिदिनं पाच्यं तुषाग्नौ वा सुरेश्वरि ॥ १,२३.१२१ ॥
दिवारात्रं करीषाग्नौ पचेद्भस्म भवेद्रसः ।
[एकोनत्रिंशः प्रकारः]
मुखीकृतरसं चाभ्रसत्वं स्वर्णं त्रयं समम् ॥ १,२३.१२२ ॥
रंभाद्रवेण संमर्द्यं दिनं सर्वसमं बिडम् ।
ततो दिव्यौषधीनां च बीजैर्मर्द्यं दिनत्रयम् ॥ १,२३.१२३ ॥
गर्भयन्त्रे पचेत्पश्चात्करीषाग्नौ मृतो भवेत् ।
[त्रिंशः प्रकारः]
खजीर्णसूतं विमलां समं निर्गुण्डिकारसैः ॥ १,२३.१२४ ॥
मर्दयित्वा त्र्यहं काचकूपिकायां विनिक्षिपेत् ।
सिकतायन्त्रके पच्याच्चतुर्यामेन भस्मितः ॥ १,२३.१२५ ॥
[एकत्रिंशः प्रकारः]
ताप्यसत्वं समं गन्धं द्वाभ्यां तुल्यं च जारितम् ।
सूतं निर्गुण्डिकां मर्द्य दिनं तद्गोलकं पुनः ॥ १,२३.१२६ ॥
वज्रमूषान्धितं कृत्वा धमेद्वा गड्डुयन्त्रके ।
पचेत्तद्रक्तवर्णं स्यात्स रसः सर्वरोगहा ॥ १,२३.१२७ ॥
[रसभस्मलक्षणम्]
अक्षयित्वं निरुत्थत्वं निर्लेपत्वं सुभस्मता ।
मारकत्वं च लोहानां लक्षयेद्रसभस्मतः ॥ १,२३.१२८ ॥
[१. गन्धपिष्टी; प्रथमः प्रकारः]
संचूर्ण्य शोधितं गन्धं पूर्वपत्ररसेन च ।
सप्तधा भावयेद्घर्मे स्त्रीणां च रजसा तथा ॥ १,२३.१२९ ॥
तथा मानवपित्तेन लोलयेद्गन्धकं पुनः ।
पलमेकं शुद्धरसं कर्परे चातपे न्यसेत् ॥ १,२३.१३० ॥
तदूर्ध्वं लोलितं गन्धं विन्यस्याङ्गुष्ठमर्दितम् ।
कुर्यात्सूतो भवेत्पिष्टिः सर्वकर्मसु सिद्धिदः ॥ १,२३.१३१ ॥
[द्वितीयः प्रकार, स्वर्णगन्धपिष्टी]
गन्धकं शोधितं देवि तिलपर्णीरसेन च ।
सप्तधा मर्दयेच्छोष्यं छायायां भावयेत्क्रमात् ॥ १,२३.१३२ ॥
मूषायां पारदं शुद्धं पलमात्रं विनिक्षिपेत् ।
सुवर्णनिष्कगुलिकां मूषायां निक्षिपेत्ततः ॥ १,२३.१३३ ॥
तत्र नारीरजोमूत्रमलमात्रं विनिक्षिपेत् ।
वालुकायन्त्रमध्ये च तां मूषां स्थापयेच्छिवे ॥ १,२३.१३४ ॥
अल्पमल्पं पूर्वगन्धं वारं वारं विनिक्षिपेत् ।
मृद्वग्निना पचेद्यावत्कर्षगन्धं च जीर्यते ॥ १,२३.१३५ ॥
अवतार्य स्वाङ्गशीतमाहरेत्स्वर्णगोलकम् ।
स्वर्णपिष्टिर्भवेद्दिव्या सर्ववाञ्छितदायिनी ॥ १,२३.१३६ ॥
[तृतीयः प्रकारः]
भावयेन्मर्कटीतोयैः शतधा शुद्धगन्धकम् ।
छायायां शुद्धसूतं च घर्मे मृत्कर्परे क्षिपेत् ॥ १,२३.१३७ ॥
किंचित्किंचित्पूर्वगन्धं निक्षिपेन्मर्कटीरसम् ।
जीर्णे गन्धे द्रवं देयं मुहुर्गन्धं मुहुर्द्रवम् ॥ १,२३.१३८ ॥
यावत्पादांशकं जीर्णं गन्धं च पिष्टिका भवेत् ।
दिव्या सा सर्वकर्मार्हा देवानामपि दुर्लभा ॥ १,२३.१३९ ॥
[चतुर्थः प्रकारः]

शुद्धगन्धं चूर्णयित्वा त्रिवारं काञ्जिकेन च ।
जम्बीराम्लैस्त्रिवारं च हंसपादीरसेन च ॥ १,२३.१४० ॥
सप्तधा क्षालयेदेवं कर्पूरं भावयेत्पृथक् ।
श्वेताद्रिकर्णिकातोयैरातपे च त्रिवारकम् ॥ १,२३.१४१ ॥
द्विगुञ्जमात्रं कर्पूरं यन्त्रान्तः परिलेपयेत् ।
तत्र गन्धं सार्धनिष्कं भावितं चूर्णितं क्षिपेत् ॥ १,२३.१४२ ॥
तदूर्ध्वं च पलं सूतं निक्षिपेत्तस्य पृष्ठतः ।
पूर्वमात्रं च कर्पूरं तदूर्ध्वं सार्धनिष्ककम् ॥ १,२३.१४३ ॥
गन्धकं च पुनः क्षिप्त्वा ततो गोमूत्रकेन च ।
श्वेताद्रिकर्णिकामूलं पिष्ट्वा तत्कल्ककेन च ॥ १,२३.१४४ ॥
आच्छाद्य तच्छरावेण रोधयेत्पाचयेत्क्रमात् ।
जालिकायन्त्रमध्ये च दिव्यं पश्चात्तमुद्धरेत् ॥ १,२३.१४५ ॥
एवं कुर्यात्त्रिवारं च गन्धपिष्टिर्भवेद्ध्रुवम् ।
[पञ्चमः प्रकारः]
स्नेहलिप्ते खल्वमध्ये शुद्धसूतं पलं न्यसेत् ॥ १,२३.१४६ ॥
कर्षं च शोधितं गन्धं देवदालीद्रवं क्षिपेत् ।
कराङ्गुल्या खरे घर्मे मर्दयेत्पिष्टिका भवेत् ॥ १,२३.१४७ ॥
[षष्ठः प्रकारः]
ताम्रखल्वे पलं सूतं कर्षार्धं गन्धकं क्षिपेत् ।
मृद्वग्निना पचेद्यामं कराङ्गुष्ठेन चालयेत् ॥ १,२३.१४८ ॥
गन्धपिष्टिर्भवेद्दिव्या सर्वकर्मकरी शुभा ।
[पिष्टीस्तम्भनम् (२)]
पिष्टीनां स्तम्भनं वक्ष्ये तिक्तकोशातकीभवम् ॥ १,२३.१४९ ॥
बीजं चण्डालिनीकन्दं तुल्यं कान्तास्तनोद्भवैः ।
क्षीरैः पिष्ट्वा च तां पिष्टीं लेपयेदङ्गुलं दृढम् ॥ १,२३.१५० ॥
वन्ध्याकन्देऽथवा क्षीरकन्दे वा सूरणोद्भवे ।
कन्दे वा वज्रकन्दे वा कन्दे वा कुडुहुञ्चिजे ॥ १,२३.१५१ ॥
तां पिष्टिं निक्षिपेत्तत्तन्मज्जया रोधयेन्मुखम् ।
तत्कन्दं च मृदा लिप्त्वा पुटेद्भूधरयन्त्रके ॥ १,२३.१५२ ॥
दिवानक्तं करीषाग्नावूर्ध्वाधः परिवर्तनम् ।
यथा कन्दं तु न दहेत्तथा पाकक्रमः स्मृतः ॥ १,२३.१५३ ॥
अथ पिष्टिं समानीयाद्भवेत्सा स्तम्भिता प्रिये ।
[पिष्टीजारणम् (२)]
पिष्टीनां स्तम्भितानां च जारणा वक्ष्यते शिवे ॥ १,२३.१५४ ॥
स्तनयन्त्रे लोहकृते गन्धकं पिष्टितुल्यकम् ।
क्षिपेदूर्ध्वं च देवेशि स्तम्भितां गन्धपिष्टिकाम् ॥ १,२३.१५५ ॥
तदूर्ध्वं पिष्टितुल्यं च गन्धकं चूर्णितं क्षिपेत् ।
निरुध्य भूधरे यन्त्रे पाचयेज्जारयेत्क्रमात् ॥ १,२३.१५६ ॥
गन्धं पुनःपुनर्देयमेवं शतगुणं प्रिये ।
जीर्णे शतगुणे गन्धे यन्त्रात्पिष्टिं समाहरेत् ॥ १,२३.१५७ ॥
सर्वासां गन्धपिष्टीनां जारणं स्याच्च रञ्जनम् ।
[पिष्टीमारणम् (२)]
जारितानां च पिष्टीनां प्रवक्ष्ये मारणक्रमम् ॥ १,२३.१५८ ॥
तप्तखल्वे विनिक्षिप्य जारितां गन्धपिष्टिकाम् ।
दिव्यौषधिरसैः पिष्ट्वा दिनं कुर्याच्च गोलकम् ॥ १,२३.१५९ ॥

दिव्यौषधीनां बीजानि पिष्ट्वा दिव्यौषधोद्भवैः ।
स्वरसैर्वज्रमूषान्तर्लेपयेत्पूर्वगोलकम् ॥ १,२३.१६० ॥
क्षिप्त्वा निरुध्य मूषास्यं पचेद्भूधरयन्त्रके ।
प्रवर्तयंश्चोर्ध्वमधो दिनमेकं पुनः प्रिये ॥ १,२३.१६१ ॥
समाहृत्य यथापूर्वं पूर्वतोयैश्च मर्दयेत् ।
पुटयेत्पूर्ववद्देवि दशवारमिति क्रमात् ॥ १,२३.१६२ ॥
असंशयं गन्धपिष्टिर्म्रियते सर्वकार्यकृत् ।
गन्धपिष्टिक्रमाज्जातरसभस्मानि भैरवि ॥ १,२३.१६३ ॥
सर्वकर्मसु मुख्यानि विशेषाद्वादकर्मणि ।
[रसबन्धाः; प्रथमः प्रकारः: वैक्रान्तबन्धः]
वक्ष्यामि रसबन्धानि शृणु भैरवि सम्प्रति ॥ १,२३.१६४ ॥
शोधितं पारदं खल्वे दशनिष्कं विनिक्षिपेत् ।
निष्कैकं शुद्धगन्धं च स्वल्पं स्वल्पं विनिक्षिपेत् ॥ १,२३.१६५ ॥
कुट्टयेन्मर्दयेद्ग्राव्णा पिष्टिः स्याद्याममात्रके ।
क्षीरकन्देऽथवा वन्ध्याकन्दे वा कुडुहुञ्चिजे ॥ १,२३.१६६ ॥
कन्दे वा निक्षिपेत्पक्वे शुभे गन्धकपिष्टिकाम् ।
निष्कार्धं भस्म वैक्रान्तमूर्ध्वाधो निक्षिपेत्सुधीः ॥ १,२३.१६७ ॥
तत्कन्दमज्जया वक्त्रं निरुध्य च मृदा बहिः ।
लिम्पेदङ्गुलिमात्रेण शोषयित्वाथ सर्वतः ॥ १,२३.१६८ ॥
अष्टवारं पचेद्यन्त्रे भूधरे कौक्कुटे पुटे ।
करीषाग्नौ पुनः कुर्यादूर्ध्वभागमधः प्रिये ॥ १,२३.१६९ ॥
अधोभागं तथोर्ध्वं च भूयो भूयः प्रवर्तनम् ।
एवमेकदिनं पश्चात्पचेद्युगकरीषकैः ॥ १,२३.१७० ॥
पक्वदाडिमबीजाभो बद्धो भवति पारदः ।
वैक्रान्तबद्धनामा स्याच्चूर्णितो योगवाहकः ॥ १,२३.१७१ ॥
[द्वितीयः प्रकारः: गन्धकबन्धः]
पूर्वोक्तां गन्धपिष्टीं तां वस्त्रे बद्ध्वाथ संपुटे ।
लोहजे पोट्टलीं स्थाप्यचोर्ध्वाधः समगन्धकम् ॥ १,२३.१७२ ॥
निरुध्य संपुटं सम्यक्पचेत्भूधरयन्त्रके ।
यथा जीर्णो भवेद्गन्धो भूयो भूयस्तथापि च ॥ १,२३.१७३ ॥
एव षड्गुणगन्धस्तु जारणीयो महेश्वरि ।
एवं गन्धकबद्धोऽयं रसः सर्वामयापहः ॥ १,२३.१७४ ॥
[तृतीयः प्रकारः: गन्धकबन्धः]
षोडशाङ्गुलदीर्घा च जम्बीरफलविस्तृता ।
पक्वमूषा दृढतरा वालुकायन्त्रमध्यतः ॥ १,२३.१७५ ॥
त्रिभागमग्नां कुर्वीत बहिः पादांशसंस्थिताम् ।
तस्यां क्षिपेद्गन्धसूतं पलमेकं सुरेश्वरि ॥ १,२३.१७६ ॥
सूतादथोर्ध्वभागे तु द्विपलं शुद्धगन्धकम् ।
निक्षिपेत्तन्मुखं सम्यग्रोधयेन्मन्दवह्निना ॥ १,२३.१७७ ॥
पचेन्निर्धूमता यावत्तावद्धूमे गते पुनः ।
काकमाचीद्रवैः पूर्या तद्द्रवे जीर्णतां गते ॥ १,२३.१७८ ॥
रसेन नागवल्ल्याश्च पूरणीया पुनः प्रिये ।
उन्मत्तकरसैः पूर्या शनैर्मन्दाग्निना पचेत् ॥ १,२३.१७९ ॥
गन्धकं जीर्यते यावत्काकमाच्यादिकद्रवैः ।
धत्तूरान्तैः पचेदेवं बद्धो भवति पारदः ॥ १,२३.१८० ॥

नाम्ना गन्धकबद्धोऽयं सर्वयोगेषु योजयेत् ।
[चतुर्थः प्रकारः गन्धकस्वर्णबन्धः]
पूर्ववद्गन्धपिष्टिं च विधायादौ विचक्षणः ॥ १,२३.१८१ ॥
सप्तार्धनिष्कसूतः स्यादध्यर्धं शुद्धहाटकम् ।
याममम्लेन संमर्द्यं ख्यातोऽयं हेमपिष्टिका ॥ १,२३.१८२ ॥
गन्धपिष्टिं हेमपिष्ट्या समयावेष्ट्य बाह्यतः ।
स्तनाकारे लोहमये संपुटे वस्त्रबन्धिताम् ॥ १,२३.१८३ ॥
कृत्वा तां पिष्टिकां क्षिप्त्वा पिष्ट्यूर्ध्वाधश्च गन्धकम् ।
सर्वतुल्यं क्षिपेत्सन्धिं रुद्ध्वाम्ललवणैः सुधीः ॥ १,२३.१८४ ॥
पचेद्भूधरयन्त्रे च जीर्णे जीर्णे पुनः पुनः ।
षड्गुणं गन्धकं दद्यात्ततो वस्त्रं शनैर्हरेत् ॥ १,२३.१८५ ॥
समांशं गन्धकं भूयो भूयो जार्यं शनैः शनैः ।
निःशेषं गन्धकं नैव कुर्याच्चेत्पारदच्युतिः ॥ १,२३.१८६ ॥
एवं शतगुणे जीर्णे गन्धपिष्टिं समाहरेत् ।
तत्समांशसुवर्णस्य संपुटे पिष्टिकां क्षिपेत् ॥ १,२३.१८७ ॥
काचं कन्याद्रवैः पिष्ट्वा लेपयेद्बाह्यतोऽङ्गुलम् ।
ततष्टङ्कणकैर्लिप्त्वा पश्चान्मृल्लवणैः क्रमात् ॥ १,२३.१८८ ॥
एकैकं लेपनं कार्यं वेष्ट्यमङ्गुलमानकम् ।
प्रतिलेपं शोषयेच्च कोष्ठीयन्त्रगतं धमेत् ॥ १,२३.१८९ ॥
वङ्कनालेन तीव्रेण वह्निना प्रहरं भवेत् ।
उदयादित्यसङ्काशं खोटं दिव्यरसायनम् ॥ १,२३.१९० ॥
गन्धहाटकबन्धोऽयं जराव्याधिदरिद्रहा ।
[पञ्चमः प्रकारः गन्धकबन्धः]
अथवा गन्धपिष्टिं तां वस्त्रे बद्ध्वाथ गन्धकम् ॥ १,२३.१९१ ॥
तुल्यं दत्त्वा निरुध्याथ संपुटे लोहजे दृढम् ।
पुटेत्तद्भूधरे तावद्यावज्जीर्यति गन्धकम् ॥ १,२३.१९२ ॥
एवं पुनः पुनर्देयं यावद्गन्धं तु षड्गुणम् ।
इत्येवं गन्धके बद्धः सूतः स्यात्सर्वरोगजित् ॥ १,२३.१९३ ॥
[षष्ठः प्रकारः मूलिकाबन्धः]
कार्कोटीमूलजैर्द्रावैः पारदं मर्दयेद्दिनम् ।
मर्कटीमूलजे पिण्डे क्षिपेत्तं मर्दितं रसम् ॥ १,२३.१९४ ॥
तं पिण्डं वज्रमूषायां रुद्ध्वा तीव्राग्निना पचेत् ।
जायते खोटबद्धोऽयं सर्वकार्यकरः शुभः ॥ १,२३.१९५ ॥
[सप्तमः प्रकारः मूलिकाबन्धः]
अर्कमूलं रविक्षीरैः पिष्ट्वा मूषां प्रलेपयेत् ।
तन्मध्ये रञ्जितं सूतं क्षिप्त्वा बद्ध्वाथ रोधयेत् ॥ १,२३.१९६ ॥
मृण्मये संपुटे तं च निरुन्ध्याल्लोहसंपुटे ।
पचेद्गजपुटे पश्चात्पारदो बन्धमाप्नुयात् ॥ १,२३.१९७ ॥
[अष्टमः प्रकारः मूलिकाबन्धः]
जलकुम्भीरसैः सूतं मर्दयेद्दिवसत्रयम् ।
जलकुम्भीदलैर्मूषां कृत्वा तत्र क्षिपेद्रसम् ॥ १,२३.१९८ ॥
रुद्ध्वा तां वज्रमूषायां छायाशुष्कं पुटेल्लघु ।
छगणैरेकवृद्ध्या तु त्रिंशद्वारं पुटैः पचेत् ॥ १,२३.१९९ ॥
ततो गजपुटे देयं सम्यग्बद्धो भवेद्रसः ।
[नवमः प्रकारः मूलिकाबन्धः]

एकवीराद्रवैर्मर्द्यं दिनं शुद्धं तु सूतकम् ॥ १,२३.२०० ॥
एकवीराकन्दकल्कैर्वज्रमूषां प्रलेपयेत् ।
तस्यां पूर्वरसं क्षिप्त्वा ध्माते बद्धो भवेद्रसः ॥ १,२३.२०१ ॥
[दशमः प्रकारः मूलिकाबन्धः]
आरक्तक्षीरकन्दोत्थद्रवैः स्त्रीस्तन्यसंयुतैः ।
त्रिदिनं पारदं मर्द्यं वज्रकन्दद्रवैस्त्र्यहम् ॥ १,२३.२०२ ॥
क्षीरकन्दस्य कल्केन वज्रमूषां प्रलेपयेत् ।
तत्र पूर्वरसं बद्ध्वा ध्माते बद्धो भवेद्रसः ॥ १,२३.२०३ ॥
[एकादशः प्रकारः मूलिकाबन्धः]
अर्कमूलफलं पिष्ट्वा मूषां तेन प्रलेपयेत् ।
तन्मध्ये निक्षिपेन्मूषां पुङ्खामूलविनिर्मिताम् ॥ १,२३.२०४ ॥
तन्मध्ये सूतकं क्षिप्त्वा पुङ्खामूलसमुद्भवैः ।
पूरयित्वा रसैर्मूषां निरुन्ध्यात्तन्मुखं दृढम् ॥ १,२३.२०५ ॥
एवमन्धीकृतां मूषां क्षिपेत्सम्पुटमध्यतः ।
ततस्तं लेपयेद्यत्नाल्लवणेन मृदा तथा ॥ १,२३.२०६ ॥
ततोऽसौ पुटयोगेन सूतो बन्धमवाप्नुयात् ।
राजिकाद्वयमात्रेण चित्रकद्रवसैन्धवैः ॥ १,२३.२०७ ॥
चूर्णितो भक्षितः प्रातः सर्वरोगविनाशकः ।
[द्वादशः प्रकारः मूलिकाबन्धः]
कपित्थस्य शिफानीरैर्यामं सूतं विमर्दयेत् ॥ १,२३.२०८ ॥
अन्यस्यामन्धमूषायां सूतमूषां निरोधयेत् ।
तथा धमेत्ततो मूषां यथा सिन्दूरवद्भवेत् ॥ १,२३.२०९ ॥
एवं कृते रसेन्द्रोऽसौ बध्यते नात्र संशयः ।
मूलिकाबन्धनं ह्येतद्रसेन्द्रस्य प्रकीर्तितम् ॥ १,२३.२१० ॥
इत्येते मारिताः सूता मूर्छिता बन्धमागताः ।
प्रत्येकं योजितास्तत्र प्रयोगैर्योगवाहिनः ॥ १,२३.२११ ॥
[रसमूर्च्छनाविधिः; प्रथमः प्रकारः]
अथ शुद्धस्य सूतस्य मूर्च्छनाविधिरुच्यते ।
मेघनादवचाहिङ्गुलशुनैर्मर्दयेद्रसम् ॥ १,२३.२१२ ॥
दिनं पिष्टं तु तद्गोलं हिङ्गुना वेष्टयेद्बहिः ।
पचेल्लवणयन्त्रस्थं दिनैकं चण्डवह्निना ॥ १,२३.२१३ ॥
ऊर्ध्वलग्नं समादाय दृढं वस्त्रेण बन्धयेत् ।
ऊर्ध्वाधो गन्धकं तुल्यं दत्त्वा सोमानले पचेत् ॥ १,२३.२१४ ॥
जीर्णे गन्धं पुनर्देयं षड्भिर्वारैः समं समम् ।
षड्गुणे गन्धके जीर्णे मूर्छितो रोगहा भवेत् ॥ १,२३.२१५ ॥
[द्वितीयः प्रकारः]
गन्धकं धूमसारं च शुद्धं सूतं समं समम् ।
यामैकं चूर्णयेत्खल्वे काचकुप्यां निवेशयेत् ॥ १,२३.२१६ ॥
रुद्ध्वा द्वादशयामान्तं वालुकायन्त्रके पचेत् ।
स्फोटयेत्स्वांगशीतं तमूर्ध्वस्थं गन्धकं त्यजेत् ॥ १,२३.२१७ ॥
अधःस्थं रसमादाय सर्वयोगेषु योजयेत् ।
[तृतीयः प्रकारः]
शुद्धसूतं तथा गन्धं सूतार्धं सैन्धवे क्षिपेत् ॥ १,२३.२१८ ॥
द्रवैः सितजयन्त्याश्च मर्दयेद्दिवसत्रयम् ।
कृत्वा गोलं तु संशोष्य मूषायां तं निरोधयेत् ॥ १,२३.२१९ ॥

शोषयित्वा धमेत्किंचित्सुतप्तेऽथ जले क्षिपेत् ।
तस्माद्रसं समुद्धृत्य त्रिकन्दरसभावितम् ॥ १,२३.२२० ॥
योजयेत्सर्वरोगेषु धमेद्वा भूधरे पचेत् ।
[चतुर्थः प्रकारः]
रसार्धं गन्धकं मर्द्यं घृतैर्युक्तं तु गोलकम् ॥ १,२३.२२१ ॥
कृत्वा तद्बन्धयेद्वस्त्रे डोलायन्त्रगतं पचेत् ।
गोमूत्रे तद्गतं यामं नरमूत्रैर्दिनत्रयम् ॥ १,२३.२२२ ॥
शोषयेत्तत्पुनर्वस्त्रैर्बद्ध्वा वेष्ट्यं मृदा दृढम् ।
शुष्कं निरुध्य मूषायां पचेदथ तुषाग्निना ॥ १,२३.२२३ ॥
ऊर्ध्वभागमधः कृत्वा त्वधोभागमथोर्ध्वगम् ।
इत्यादिपरिवर्तेन स्वेदयेद्दिवसत्रयम् ॥ १,२३.२२४ ॥
पश्चादुद्धृत्य तं सूतं योगवाहं रुजापहम् ।
सद्योजातस्य बालस्य विष्ठां पालाशबीजकम् ॥ १,२३.२२५ ॥
चण्डालीरुधिरं सूतं सूतपादं च टङ्कणम् ।
जयन्त्या मर्दयेद्द्रावैर्दिनमेकं तु गोलकम् ॥ १,२३.२२६ ॥
पिष्टया सहदेव्याथ लेपयेत्ताम्रसम्पुटम् ।
तन्मध्ये गोलकं क्षिप्त्वा द्वियामं स्वेदयेल्लघु ॥ १,२३.२२७ ॥
वालुकायन्त्रमध्ये तु समुद्धृत्य ततः पुनः ।
चित्रकैः सहदेव्या च गन्धकं लेपयेद्बहिः ॥ १,२३.२२८ ॥
सम्पुटं बन्धयेद्वस्त्रे मृदा लेप्यं च शोषयेत् ।
तं रुद्ध्वा चान्यमूषायां ध्माते सम्पुटमाहरेत् ॥ १,२३.२२९ ॥
सूक्ष्मचूर्णं हरेद्रोगान्योगवाहो महारसः ।
सम्पुटं सूततुल्यं स्याच्छास्त्रदृष्टेन कर्मणा ॥ १,२३.२३० ॥
[पञ्चमः प्रकारः]
धुत्तूरकद्रवैर्मर्द्यं दिनं गन्धांशसूतकम् ।
अन्धमूषागतं स्वेद्यं भूधरे मूर्छितो दिनात् ॥ १,२३.२३१ ॥
[षष्ठः प्रकारः]
कृत्वा षडङ्गुलां मूषां सुपक्वां मृण्मयीं दृढाम् ।
मूषागर्भे विलिप्याथ मूलैर्वर्तुलपत्त्रजैः ॥ १,२३.२३२ ॥
तन्मध्ये सूतकं क्षिप्त्वा मूषां पूर्यात्तु तद्द्रवैः ।
रुद्ध्वा तां वालुकायन्त्रे चुल्ल्यां दीपाग्निना पचेत् ॥ १,२३.२३३ ॥
सप्ताहान्ते समुद्धृत्य योजयेत्तं जरापहम् ।
[सप्तमः प्रकारः]
कुरण्डकरसैः सान्द्रमातपे मर्दयेद्रसम् ॥ १,२३.२३४ ॥
लताकरञ्जपत्रोत्थैः पादांगुष्ठेन मर्दयेत् ।
दिनैकं मूर्छितं सम्यक्सर्वयोगेषु योजयेत् ॥ १,२३.२३५ ॥
[अष्टमः प्रकारः]
कासीसं सैन्धवं सूतं तुल्यं तुल्यं विमर्दयेत् ।
कासीसस्याप्यभावे तु दातव्या फुल्लतूरिका ॥ १,२३.२३६ ॥
स्तोकं स्तोकं क्षिपेत्खल्वे त्रयमेकत्र मूर्छयेत् ।
प्रत्येकं शतनिष्कं स्यादूनं नैवाधिकं क्वचित् ॥ १,२३.२३७ ॥
स्थालीसम्पुटयन्त्रेण दिनं चण्डाग्निना पचेत् ।
ऊर्ध्वलग्नं ततः शुभ्रं मूर्छितं चाहरेच्छुभम् ॥ १,२३.२३८ ॥
[नवमः प्रकारः]
अथ शुद्धस्य सूतस्य मूर्छितस्यापरो विधिः ।

सूततुल्यं मृतं स्वर्णं द्वाभ्यां तुल्यं च गन्धकम् ॥ १,२३.२३९ ॥
रविक्षीरैर्दिनं मर्द्यमन्धयेद्भूधरे पुटे ।
दिनैकेन भवेत्सिद्धो रसो हैरण्यगर्भकः ॥ १,२३.२४० ॥
शुभ्रः शोणोऽथवा कृष्णवर्णो गुरुतरो रसः ।
पुनरुत्थानवान्यस्तु मूर्छितः स उदाहृतः ॥ १,२३.२४१ ॥
[मूलिकाबन्धाः]
श्रीभैरवी ।
कीदृशी ओषधी नाथ रसमूर्च्छाकरी शुभा ।
केन वा भस्म सूतश्च केन वा खोटबन्धनम् ॥ १,२३.२४२ ॥
श्रीभैरवः ।
शृणु भैरवि तत्त्वेन रहस्यं रसबन्धनम् ।
ब्रह्मविष्णुसुरेन्द्राद्यैर्न ज्ञातं सुरवन्दिते ॥ १,२३.२४३ ॥
[निशाचरमूलिकाकल्पः]
गङ्गायमुनयोर्मध्ये प्रयागो नाम राक्षसः ।
तस्यासने वरारोहे क्षणाद्बध्येत सूतकः ॥ १,२३.२४४ ॥
निशाचरस्य पत्राणि गृह्णीयात्साधकोत्तमः ।
ततो निपीड्यते देवि रसो भवति चोत्तमः ॥ १,२३.२४५ ॥
रसं संमर्द्य तेनैव दिनानि त्रीणि वार्तिकः ।
आरोटं बन्धयेत्क्षिप्रं गगनं तत्र जारयेत् ॥ १,२३.२४६ ॥
तेन पत्ररसेनैव साधयेद्गन्धकं पुनः ।
सप्तधा भावितं तेन त्र्यूषणेन सहैकतः ॥ १,२३.२४७ ॥
यन्त्रे विद्याधरे देवि गगनं तत्र जारयेत् ।
मासमात्रेण देवेशि जीर्यते तु समं समम् ॥ १,२३.२४८ ॥
समजीर्णे तु गगने शतवेधी भवेद्रसः ।
निशाचररसे देवि गन्धकं भावयेत्ततः ॥ १,२३.२४९ ॥
भावयेत्सप्तवारं तु द्विपद्याश्च रसेन तु ।
तारस्य पत्रलेपेन अर्धार्धे काञ्चनोत्तमम् ॥ १,२३.२५० ॥
गन्धके समजीर्णेऽस्मिन् शतवेधी भवेद्रसः ।
निशाचररसैर्भाव्यं सप्तवारं तु तालकम् ॥ १,२३.२५१ ॥
तेनैव घातयेद्वङ्गं नागं तारे तु निर्वहेत् ।
तत्तारं जारयेत्सूते तत्सूतं बन्धितं भवेत् ॥ १,२३.२५२ ॥
चतुः षष्टितमे भागे शुल्बवेधं तु दापयेत् ।
तदंशं जायते श्रेष्ठं धर्मकामार्थमोक्षदम् ॥ १,२३.२५३ ॥
निशाचरस्य पुष्पाणि सूक्ष्मचूर्णानि कारयेत् ।
पलानि दशचूर्णस्य रसैर्धात्र्यास्तु भावयेत् ॥ १,२३.२५४ ॥
घृतेन मधुनालोड्यं नवभाण्डे विनिक्षिपेत् ।
धान्यराशौ निधातव्यं त्रिः सप्ताहं सुरेश्वरि ॥ १,२३.२५५ ॥
तेन भक्षितमात्रेण वलीपलितवर्जितः ।
वल्कलं सूक्ष्मचूर्णं तु मधुना सहितं लिहेत् ॥ १,२३.२५६ ॥
अर्धमासप्रयोगेण प्रत्ययोगं भवेत्प्रिये ।
तस्य मूत्रपुरीषेण शुल्बं भवति काञ्चनम् ॥ १,२३.२५७ ॥
मासमात्रप्रयोगेण पन्नगः काञ्चनं भवेत् ।
[मेर्चुर्य्:: पट्टबन्ध]
ग्राह्यं तत्फलतैलं तु यन्त्रे पातालसंज्ञके ॥ १,२३.२५८ ॥
तेन तैलेन देवेशि रसं संकोचयेद्बुधः ।

तत्क्षणाज्जायते देवि पाटबन्धो महारसः ॥ १,२३.२५९ ॥
कटकं कङ्कणं कार्यं रसलिङ्गं वरानने ।
संकोचमरणं तेन कर्तव्यं परमाद्भुतम् ॥ १,२३.२६० ॥
[अङ्गनायिकाकल्पः]
पुनरन्यं प्रवक्ष्यामि रसबन्धं सुदुर्लभम् ।
त्रैलोक्यजननी या सा ओषधी अङ्गनायिका ॥ १,२३.२६१ ॥
तया संपर्कमात्रेण बद्धस्तिष्ठति पारदः ।
सप्ताहं मर्दितस्यास्य महौषध्या रसै रसः ॥ १,२३.२६२ ॥
शतांशेनैव वेधेन कुरुते दिव्यकाञ्चनम् ।
त्रिः सप्ताहं रसे तस्या मर्दनाद्वरवर्णिनि ॥ १,२३.२६३ ॥
लक्षवेधी रसः साक्षादष्टौ लोहानि विध्यति ।
त्रिसप्ताहेन देवेशि दशलक्षाणि विध्यति ॥ १,२३.२६४ ॥
चतुर्थे चैव सप्ताहे कोटिवेधी भवेद्रसः ।
स्वेदतापनिघर्षेण महौषध्या रसेन तु ॥ १,२३.२६५ ॥
ददाति खेचरीं सिद्धिमनिवारितगोचरः ।
कामयेत्कामिनीनां तु सहस्रं दिवसान्तरे ॥ १,२३.२६६ ॥
नष्टच्छायो ह्यदृश्यश्च त्रैलोक्यं च भ्रमेदसौ ।
महौषध्या रसेनैव मृतसंजीवनं भवेत् ॥ १,२३.२६७ ॥
अनेन घातयेत्सूतं पञ्चावस्थं कुरु प्रिये ।
मृतस्य दापयेन्नस्यं हस्तौ पादौ तु मर्दयेत् ॥ १,२३.२६८ ॥
तस्य तु प्रविशेज्जीवो मृतस्यापि वरानने ।
[नरसारकल्पः]
पुनरन्यं प्रवक्ष्यामि रसबन्धं सुदुर्लभम् ॥ १,२३.२६९ ॥
नरसारस्पर्शनेन क्षणाद्बध्येत सूतकः ।
नरसाररसं दत्त्वा द्विपदीरजसा रसे ॥ १,२३.२७० ॥
दिनान्ते बन्धमायाति सर्वलोहानि रञ्जति ।
नरसाररसेनैव भावयेत्तु मनःशिलाम् ॥ १,२३.२७१ ॥
निर्गन्धा जायते सा तु घातयेत्तेन पन्नगम् ।
द्विपदीरजसा सार्धं निरुद्धः पन्नगो भवेत् ॥ १,२३.२७२ ॥
नरसाररसेनैव जीर्णे षड्गुणपन्नगे ।
तारे ताम्रेऽपि वा देवि कोटिवेधी भवेद्रसः ॥ १,२३.२७३ ॥
नरसाररसे स्तन्ये भावितं सप्तधा पृथक् ।
रसस्य दापयेद्ग्रासं यन्त्रे विद्याधराह्वये ॥ १,२३.२७४ ॥
जीर्यते गगनं देवि निर्मुखे च वरानने ।
नरसाररसेनेशि कीटनारीरसेन च ॥ १,२३.२७५ ॥
द्रावयेद्गगनं देवि तीक्ष्णलोहं च पन्नगम् ।
नरसाररसेनेशि हनुमत्या रसेन च ॥ १,२३.२७६ ॥
जायते काञ्चनं दिव्यं निषेकाद्भास्करः प्रिये ।
नरसाररसे दत्त्वा मञ्जिष्ठां रक्तचन्दनम् ॥ १,२३.२७७ ॥
स्वरसैर्मदयन्त्याश्च पन्नगं देवि सेचयेत् ।
तत्क्षणात्काञ्चनं दिव्यं सप्तवारा निषेचितम् ॥ १,२३.२७८ ॥
अष्टमांशयुतं हेम हेमकर्मणि चौषधम् ।
नरसाररसे भाव्यं सप्तवारं तु हिङ्गुलम् ॥ १,२३.२७९ ॥
तेनैव घातयेत्तीक्ष्णं भस्मीभूतत्वमाप्नुयात् ।
तद्भस्म ताम्रपिष्टे तु त्रिगुणं तेन निर्वहेत् ॥ १,२३.२८० ॥

तच्छुल्बं हेमसङ्काशं तारे वाष्टांशयोजितम् ।
तारं हेमसमांशं तु द्विवर्णं पतितं भवेत् ॥ १,२३.२८१ ॥
नरसाररसे भाव्यं रसकं सप्तवारतः ।
नरसाररसेनैव रसेन्द्रं सप्तवारतः ॥ १,२३.२८२ ॥
तं रसं रसकं चैव तीक्ष्णलोहं च पन्नगम् ।
नरसाररसेनैव तेनैकत्र विमर्दयेत् ॥ १,२३.२८३ ॥
तत्क्षणाज्जायते बद्धो रसस्य रसकस्य च ।
तीक्ष्णनागं तथा शुल्बं रसकेन तु रञ्जयेत् ॥ १,२३.२८४ ॥
हठात्तज्जायते हेम कूष्माण्डकुसुमप्रभम् ।
[कङ्कालखेचरीकल्पः]
पुनरन्यं प्रवक्ष्यामि रसबन्धं सुदुर्लभम् ॥ १,२३.२८५ ॥
कङ्कालखेचरी नाम्ना ओषधी परमेश्वरि ।
तस्य तैलं तु संग्राह्यमाद्यखेचरिसंयुतम् ॥ १,२३.२८६ ॥
स्थापयेद्दिनमेकं तु पात्रे भास्करनिर्मिते ।
द्वितीये वासरे प्राप्ते वज्ररत्नं तु घातयेत् ॥ १,२३.२८७ ॥
अनले धामयेत्तं तु सुतप्तं प्रज्वलत्प्रभम् ।
[मन्त्रसिह्मासनीकल्पः]
सबीजा चौषधी ग्राह्या काचिद्गुल्मलता प्रिये ॥ १,२३.२८८ ॥
मन्त्रसिंहासनी नाम तृतीया देवि खेचरी ।
पातालयन्त्रे तत्तैलं गृह्णीयात्ताम्रभाजने ॥ १,२३.२८९ ॥
तस्य तैलस्य मध्ये तु प्रक्षिपेत्खेचरीरसम् ।
मेदिनीयन्त्रमध्ये तु स्थापयेच्च वरानने ॥ १,२३.२९० ॥
पूर्वौषध्यां तु तद्देवि गगनं मेदिनीजले ।
रसे मासं ततो दत्त्वा मर्दनाद्गोलकं कुरु ॥ १,२३.२९१ ॥
बद्ध्वा पोट्टलिकां तेन गगनं जारयेत्प्रिये ।
समे तु गगने जीर्णे बद्धस्तिष्ठति पारदः ॥ १,२३.२९२ ॥
भस्त्राफूत्कारयुक्तेन धाम्यमानो न नश्यति ।
काकविष्ठासमं रूपं समजीर्णस्य जायते ॥ १,२३.२९३ ॥
द्विगुणे गगने जीर्णे ह्यष्टलोहानि संहरेत् ।
[इरिन्दिरीकल्पः]
पुनरन्यं प्रवक्ष्यामि रसबन्धं सुदुर्लभम् ॥ १,२३.२९४ ॥
शिवदेहात्समुत्पन्ना ओषधी तु इरिन्दिरी ।
जारयेद्गन्धकं सा तु जारयेत्सापि तालकम् ॥ १,२३.२९५ ॥
काञ्चनं जारयेत्सा तु रसेन्द्रं सा च बन्धयेत् ।
प्रवालं द्रावयेत्सा तु द्रावयेद्गगनं तथा ॥ १,२३.२९६ ॥
वज्रं च घातयेत्सा तु सर्वसत्वं च घातयेत् ।
जारयेत्सर्वलोहानि सत्वान्यपि च जारयेत् ॥ १,२३.२९७ ॥
इरिन्दिरीरसे न्यस्य गोशृङ्गे तु वरानने ।
धान्यराशौ निधातव्यं द्रुतस्तिष्ठति पारदः ॥ १,२३.२९८ ॥
दिव्यौषध्या रसेनैव रसेन्द्रः सुरवन्दिते ।
समे तु कनके जीर्णे दशकोटिं तु वेधयेत् ॥ १,२३.२९९ ॥
पञ्चमे लक्षकोटिं तु षड्गुणे स्पर्शवेधकः ।
सप्तमे धूपवेधी स्यादष्टमे त्ववलोकतः ॥ १,२३.३०० ॥
नवमे शब्दवेधी स्यादत ऊर्ध्वं न विद्यते ।
भ्रमन्ति पशवो मूढाः कुलौषधिविवर्जिताः ॥ १,२३.३०१ ॥

तृणौषधिरसानां च नैव सिद्धिः प्रजायते ।
तस्मात्सर्वप्रयत्नेन ज्ञातव्या तु कुलौषधिः ॥ १,२३.३०२ ॥
दिव्यौषध्यश्चतुः षष्टिः कुलमध्ये व्यवस्थिताः ।
नैव जानाति मूढास्ताः शिवमोहेन मोहिताः ॥ १,२३.३०३ ॥
अदिव्यास्तु तृणौषध्यो जायन्ते गिरिगह्वरे ।
तृणौषध्या रसे सूतो नैव बद्धः कदाचन ॥ १,२३.३०४ ॥
अक्षयो नैव तिष्ठेत कुलौषधिविवर्जितः ।
कुलौषध्या विहीनास्तु गगनं चारयन्ति ये ॥ १,२३.३०५ ॥
स रसस्तु वरारोहे वह्निमध्ये न तिष्ठति ।
न खोटं न च वा भस्म नैव द्रव्यं करोति सः ॥ १,२३.३०६ ॥
किंचिद्द्रव्यं प्रकुर्वन्ति धाम्यमानं न तिष्ठति ।
पत्रे पाके कषे छेदे नैव तिष्ठति काञ्चनम् ॥ १,२३.३०७ ॥
न वेधं च शतादूर्ध्वं करोति स रसः प्रिये ।
यावन्न चाब्दमेकं तु विक्रान्तं त्रपु तत्तु काञ्चनम् ॥ १,२३.३०८ ॥
धर्मार्थकाममोक्षेषु नैव दद्यात्ततः प्रिये ।
श्रीभैरवी ।
निर्जीवत्वं गतः सूतः कथं जीवं ददाति सः ॥ १,२३.३०९ ॥
निर्जीवेन तु निर्जीवं कथं जीवति शंकरः ।
श्रीभैरवः ।
दिव्यौषध्या यदा देवि रसेन्द्रो मर्दितो भवेत् ॥ १,२३.३१० ॥
कालिकारहितः सूतस्तदा भवति पार्वति ।
परस्य हरते कालं कालिकारहितो रसः ॥ १,२३.३११ ॥
अष्टानां चैव लोहानां मलं शमयति क्षणात् ।
महामूर्च्छागतं सूतं को वा विकथयेन्मृतम् ॥ १,२३.३१२ ॥
दिव्यौषध्या रसेनैव जायते नष्टचेतनः ।
पञ्चभूतात्मकः सूतस्तिष्ठत्येव सदाशिवः ॥ १,२३.३१३ ॥
[क्ष्मापालकल्पः]
पुनरन्यं प्रवक्ष्यामि रसबन्धनमीश्वरि ।
क्ष्मापालेन हरेद्वज्रमनेनैव तु काञ्चनम् ॥ १,२३.३१४ ॥
वज्रभस्म हेमभस्म तद्वा एकत्र बन्धयेत् ।
[अन्ये कुलमूलिकाकल्पाः]
निशाचररसे जार्यं नरजीवेन जारयेत् ॥ १,२३.३१५ ॥
तं सूतं मारयेद्भद्रे जागरिर्दिव्य ओषधिः ।
भक्षितः स रसो येन सोऽपि साक्षात्सदाशिवः ॥ १,२३.३१६ ॥
भक्षिते तोलकैकेन स्पर्शवेधी भवेन्नरः ।
प्रस्वेदात्तस्य गात्रस्य अष्टौ लोहानि काञ्चनम् ॥ १,२३.३१७ ॥
लक्षवर्षसहस्राणि स जीवेत्साधकोत्तमः ।
प्रस्वेदात्तस्य गात्रस्य रसराजश्च बध्यते ॥ १,२३.३१८ ॥
अजापतिः कृष्णतेजाः क्षणाद्बध्नाति सूतकम् ।
जागरीस्पर्शनाद्देवि क्ष्मापालेन च बध्यते ॥ १,२३.३१९ ॥
तुरुवल्ल्या रसेनैव भावितं गगनं प्रिये ।
जारयेद्वालुकायन्त्रे खोटो भवति तत्क्षणात् ॥ १,२३.३२० ॥
द्रुतगोलकमाषैकं माषैकं हेमगोलकम् ।
एकीकृत्य तु संमर्द्य लुङ्गाम्लेन दिनत्रयम् ॥ १,२३.३२१ ॥
कर्षैकं नागपत्राणि रसकल्केन लेपयेत् ।

वेष्टयेद्वृश्चिकालीं च तत्पिण्डं लेपयेत्ततः ॥ १,२३.३२२ ॥
मारयेत्पन्नगं देवि शक्रगोपनिभं भवेत् ।
कर्षैकं तारपर्णानि मृतनागेन लेपयेत् ॥ १,२३.३२३ ॥
लेपयेद्वृश्चिकालीं च तत्पत्रं लेपयेत्ततः ।
तत्तारं म्रियते देवि सिन्दूरारुणसन्निभम् ॥ १,२३.३२४ ॥
सहस्रांशेन तेनैव शुल्बवेधं प्रदापयेत् ।
जायते कनकं दिव्यं देवाभरभूषणम् ॥ १,२३.३२५ ॥
क्षीरयुक्ता बहुफला ग्रन्थियुक्ता च पार्वति ।
नाम्ना वर्तुलपत्त्राणि शस्यते रसबन्धने ॥ १,२३.३२६ ॥
एकवारं कन्दकल्के मूकमूषागतं रसम् ।
धमेन्मुखानिलैर्बद्धो भक्षणाय प्रशस्यते ॥ १,२३.३२७ ॥
रक्तकञ्चुकिकन्दं तु स्त्रीस्तन्येन तु पेषितम् ।
मूषायां पूर्वयोगेन कुरुते सूतबन्धनम् ॥ १,२३.३२८ ॥
वृश्चिकापत्त्रिकाबीजं नारीक्षीरसमन्वितम् ।
धमयेत्पूर्ववत्सूतं भक्षणार्थाय वार्तिकः ॥ १,२३.३२९ ॥
वज्रकन्दं समादाय रसं मध्ये विनिक्षिपेत् ।
गजेन्द्राख्यं पुटं दद्यात्सप्तधा बन्धतां नयेत् ॥ १,२३.३३० ॥
भक्षयेत्तं रसं प्राज्ञः षण्मासादमरो भवेत् ।
लाङ्गलीकन्दमादाय कर्कोटीकन्दमेव च ॥ १,२३.३३१ ॥
रसं तन्मध्यगं कृत्वा स्वेदयेन्मर्दयेत्पुनः ।
म्रियते नात्र सन्देहो ध्मातस्तीव्रानलेन तु ॥ १,२३.३३२ ॥
शुकचञ्चुगतं सूतं पुटयेद्धामयेत्ततः ।
शतांशवेधकर्तायं देहसिद्धिकरो भवेत् ॥ १,२३.३३३ ॥
हंसपादीरसं सूतं शुष्ककन्दोदरे क्षिपेत् ।
गजेन्द्रपुटनं दद्यान्म्रियते नात्र संशयः ॥ १,२३.३३४ ॥
सहस्रवेधकर्ता च जायते नात्र संशयः ।
हंसाङ्घ्रिं शुकचञ्चुं च गृहीत्वा मर्दयेद्रसम् ॥ १,२३.३३५ ॥
क्रौञ्चपादोदरे क्षिप्त्वा ततो दद्यात्पुटत्रयम् ।
म्रियते नात्र सन्देहो लक्षवेधी महारसः ॥ १,२३.३३६ ॥
[तृणज्योतिःकल्पः]
तृणज्योतिरिति ख्यातां शृणु दिव्यौषधिं प्रिये ।
निशा तु प्रज्वलेन्नित्यं नाह्ना ज्वलति पार्वति ॥ १,२३.३३७ ॥
तस्य मूले तु संक्षिप्ते क्षीरं रक्तं भवेत्क्षणात् ।
तन्मूलरसगन्धाभ्रैर्मातुलुङ्गाम्लपेषितैः ॥ १,२३.३३८ ॥
शुल्बपत्रं विलिप्तं तु भवेद्धेम पुटत्रयात् ।
तन्मूलचूर्णसंयुक्तो रसराजः सुरेश्वरि ॥ १,२३.३३९ ॥
मातुलुङ्गरसे घृष्टमभ्रकं चरति क्षणात् ।
[उच्चाटाकल्पः]
अथोच्चाटां प्रवक्ष्यामि रसबन्धकरीं प्रिये ॥ १,२३.३४० ॥
एकमेव भवेन्नालं तस्या रोमप्रवेष्टनम् ।
तस्याग्रे च भवेत्पुष्पं शुकतुण्डस्य सन्निभम् ॥ १,२३.३४१ ॥
तत्पत्राणि च देवेशि शुकपिञ्छनिभानि च ।
तत्कन्दं कूर्मसंस्थानं क्षीरं सिन्दूरसन्निभम् ॥ १,२३.३४२ ॥
जलं स्रवेन्मधूच्छिष्टे तत्समादाय पार्वति ।
वेधयेत्सर्वलोहानि काञ्चनानि भवन्ति च ॥ १,२३.३४३ ॥

रसतालकतुत्थानि मर्दयेदुच्चटारसैः ।
आतपे म्रियते तप्तो रसो दिव्यौषधीबलात् ॥ १,२३.३४४ ॥
वेधयेत्सर्वलोहानि लक्षांशेन वरानने ।
आवर्तितं भवेद्यावज्जायतेऽर्कसमप्रभम् ॥ १,२३.३४५ ॥
[रक्तस्नुहीकल्पः]
रसं रक्तस्नुहीक्षीरं कुनटीं गन्धकाभ्रकम् ।
दरदं चैव लोहानि सहस्रांशेन वेधयेत् ॥ १,२३.३४६ ॥
स्नुहीक्षीरं समादाय निशाचूर्णेन वेष्टयेत् ।
गुटिकीकृत्य तेनैव नागं विध्यति तत्क्षणात् ॥ १,२३.३४७ ॥
[स्थलपद्मिनीकल्पः]
अथातः स्थलपद्मिन्या दिव्यौषध्या विधिं शृणु ।
पद्मिनीसदृशा पत्रैः पुष्पैरपि च तादृशी ॥ १,२३.३४८ ॥
भङ्गे चैव स्रवेत्क्षीरं रक्तवर्णा सुशोभना ।
आक्रम्य वामपादेन पश्येद्गगनमण्डलम् ॥ १,२३.३४९ ॥
पश्येच्च तारकायुक्तं ग्रहनक्षत्रमण्डलम् ।
लक्षयोजनतो देवि सा ज्ञेया स्थलपद्मिनी ॥ १,२३.३५० ॥
तस्याः पञ्चाङ्गमादाय हरगौरीसमन्वितम् ।
मनःशिलातालयुक्तं माक्षिकेण समन्वितम् ॥ १,२३.३५१ ॥
मर्दयेत्सप्तरात्रं तु तेन शुल्बं च वेधयेत् ।
सहस्रांशेन देवेशि विद्धं भवति काञ्चनम् ॥ १,२३.३५२ ॥
तस्याः पञ्चाङ्गमादाय पूर्वोक्तविधिना प्रिये ।
चारयेत्सूतराजं तु मूकमूषागतं धमेत् ॥ १,२३.३५३ ॥
म्रियते मूषिकामध्ये संकोचेन न संशयः ।
तेनैव सर्वलोहानि सहस्रांशेन वेधयेत् ॥ १,२३.३५४ ॥
[चित्रककल्पः]
चित्रकस्य यथा गुह्यं कथयामि समासतः ।
त्रिविधश्चित्रको ज्ञेयः कृष्णो रक्तो रसायनम् ॥ १,२३.३५५ ॥
शुक्लो व्याधिप्रशमनः श्रेष्ठमध्यकनीयसाः ।
कृष्णं रक्तं सितं वापि हेमन्ते नोद्धरेद्बुधः ॥ १,२३.३५६ ॥
कृष्णचित्रकमुत्पाट्य गोभिर्नाघ्रातमीश्वरि ।
क्षीरमध्ये क्षिपेत्क्षीरं कृष्णवर्णं भवेत्क्षणात् ॥ १,२३.३५७ ॥
तस्य पञ्चाङ्गचूर्णेन पारदं सह मर्दयेत् ।
धमेच्च मूकमूषायां खोटो भवति तत्क्षणात् ॥ १,२३.३५८ ॥
रक्तांबरधरो भूत्वा रक्तमाल्यानुलेपनः ।
कृष्णपक्षे तु पञ्चम्यां रक्तमाल्यौदनेन तु ॥ १,२३.३५९ ॥
बलिं दत्त्वा महादेवि रक्तचित्रकमुद्धरेत् ।
रक्तचित्रकचूर्णेन वङ्गं पायैस्त्रिभिस्त्रिभिः ॥ १,२३.३६० ॥
सर्वदोषविनिर्मुक्तः स्तम्भमायाति तत्क्षणात् ।
तन्मूलं सूतकं ताम्रं कुङ्कुणीतैलसेचनात् ॥ १,२३.३६१ ॥
एकविंशतिवारेण शुद्धं शुल्बं भविष्यति ।
रक्तचित्रकभल्लाततैललिप्तं पुटेन तु ॥ १,२३.३६२ ॥
चन्द्रार्कपत्रं देवेशि जायते दिव्यकाञ्चनम् ।
नागिनीकन्दसूतेन्द्ररक्तचित्रसंयुतम् ॥ १,२३.३६३ ॥
पत्रलेपप्रतीवापैश्चन्द्रार्कं काञ्चनं भवेत् ।
[ज्योतिष्मतीतैलकल्पः]

ज्योतिष्मतीतैलविधिं वक्ष्यामि शृणु पार्वति ॥ १,२३.३६४ ॥
ज्योतिष्मती नाम लता या च काञ्चनसन्निभा ।
वल्लीवितानबहुला हेमवर्णफला शुभा ॥ १,२३.३६५ ॥
आषाढपूर्वपक्षेऽस्या गृहीत्वा बीजमुत्तमम् ।
तिलवत्क्वाथयित्वा वा हस्तपादैरथापि वा ॥ १,२३.३६६ ॥
तस्यास्तैलं समादाय कुम्भे ताम्रमये क्षिपेत् ।
स्थापयेद्भूगतं कुम्भं क्रमादूर्ध्वतुषाग्निना ॥ १,२३.३६७ ॥
षण्मासे तु व्यतिक्रान्ते स घटः काञ्चनं भवेत् ।
ताम्रं हेमसमं कृत्वा तैलमाक्षीकमिश्रितम् ॥ १,२३.३६८ ॥
प्रतिवापेन सिञ्चेत्तद्धेम ताम्रसमं भवेत् ।
तथा च शतवेधी स्याद्विद्यारत्नमनुत्तमम् ॥ १,२३.३६९ ॥
[दग्धरुहाकल्पः]
दग्धरुहां प्रवक्ष्यामि रसबन्धकरीं प्रिये ।
स्पर्शौषधीति सा ज्ञेया सर्वकामार्थसाधनी ॥ १,२३.३७० ॥
शश्वच्छिन्ना महादेवि दग्धा सा पावकेन तु ।
प्ररोहति क्षणाद्दिव्या दग्धा सा तु महौषधी ॥ १,२३.३७१ ॥
रक्तं पीतं सितं कृष्णं तस्याः पुष्पं प्रजायते ।
चणकस्येव पत्राणि सुप्रसूतानि लक्षयेत् ॥ १,२३.३७२ ॥
सा स्थिता गोमतीतीरे गङ्गायामर्बुदे गिरौ ।
उज्जयिन्या दक्षिणतो वनान्तेषु च दृश्यते ॥ १,२३.३७३ ॥
तस्याः कन्दरसं दिव्ये कृष्णराजीसमन्वितम् ।
ताम्बूलेन समं कृत्वा घुटिकां कारयेद्बुधः ॥ १,२३.३७४ ॥
सर्वेषामेव लोहानां द्रुतानां वह्निमध्यतः ।
सहस्रं वेधयित्वा तु काञ्चनं कुरुते क्षणात् ॥ १,२३.३७५ ॥
तथैव म्रियते सूतः कान्तहेमाभ्रसंयुतः ।
[कटुतुम्बीकल्पः]
कटुतुंबी तु विख्याता देवि दिव्यौषधिं शृणु ॥ १,२३.३७६ ॥
तस्या बीजानि संगृह्य सूक्ष्मचूर्णं तु कारयेत् ।
एकविंशतिवाराणि भाव्यं धात्रीरसेन च ॥ १,२३.३७७ ॥
पयसा सह तेनैव विश्वभेषजसंयुतम् ।
बीजं यन्त्रे विनिक्षिप्य तैलं संगृह्य पिण्डितः ॥ १,२३.३७८ ॥
रसं मूर्छापयेत्तेन चक्रमर्देन मर्दयेत् ।
[लोहदण्डकल्पः]
गोपित्तं शिखिपित्तं च कांक्षीकासीससंयुतम् ॥ १,२३.३७९ ॥
तारतुल्यानि चैतानि सर्वेषां सूतकं समम् ।
मेषशृङ्गे निधातव्यं मासमेकं निरन्तरम् ॥ १,२३.३८० ॥
लोहदण्डेन संसिक्तं सर्वलोहानि वेधयेत् ।
गन्धकं लोहदण्डेन एकविंशतिभावितम् ॥ १,२३.३८१ ॥
युक्तं लोहकुलेनैव जम्बीररससंयुतम् ।
सबीजं सूतकोपेतमन्धमूषानिवेशितम् ॥ १,२३.३८२ ॥
भूगतं मासमेकं तु तारं काञ्चनतां नयेत् ।
दलस्य भागमेकं तु तारपञ्चांशमेव च ॥ १,२३.३८३ ॥
शुल्बं च पञ्चभागं च बीजस्यैकं च योजयेत् ।
एते द्वादशभागाः स्युः सर्वं तद्धारयेत्क्षितौ ॥ १,२३.३८४ ॥
स्थानस्यास्य निषेकं तु सुदण्डेन तु कारयेत् ।

पञ्चविंशद्दिनान्ते तु जायते कनकोत्तमम् ॥ १,२३.३८५ ॥
[क्षीरकन्दकल्पः]
क्षीरकन्दविधिं वक्ष्ये सर्वसिद्धिकरं तथा ।
चतुर्वर्णं विषं तत्र रक्तकन्दं प्रशस्यते ॥ १,२३.३८६ ॥
भग्नमेतत्स्रवेत्क्षीरं रक्तवर्णं सुशोभनम् ।
मेघानां तु निनादेन संजातैरुपशोभितम् ॥ १,२३.३८७ ॥
पत्रैः स्नुहीसमैः स्निग्धैः समभिर्हेमसत्प्रभैः ।
बन्धनं रसराजस्य सर्वसत्ववशंकरम् ॥ १,२३.३८८ ॥
तस्य क्षीरं तु संगृह्य तारं निर्वाहयेद्बुधः ।
धमेद्धठाग्निना चैव जायते हेम शोभनम् ॥ १,२३.३८९ ॥
तिन्त्रिणीपत्रनिर्यासमीषत्ताम्ररजोयुतम् ।
मर्दयेत्पारदं प्राज्ञो रसबन्धो भविष्यति ॥ १,२३.३९० ॥
तोयमध्ये विनिक्षिप्य गुलिका वज्रवद्भवेत् ।
[शाकवृक्षकल्पः]
शाकवृक्षस्य देवेशि निष्पीड्य रसमुत्तमम् ॥ १,२३.३९१ ॥
रक्तचन्दनसंयुक्तं सर्वलोहानि जारयेत् ।
मिलन्ति सर्वलोहानि द्रवन्ति सलिलं यथा ॥ १,२३.३९२ ॥
गन्धकं रसकं ताप्यं पारदं रक्तचन्दनम् ।
रुदन्त्या रससंयुक्तं तारमायाति काञ्चनम् ॥ १,२३.३९३ ॥
शाकवृक्षस्य निर्यासं यत्नतः परिगालयेत् ।
शिग्रुमूलस्य चूर्णं तु तद्रसेन तु मर्दयेत् ॥ १,२३.३९४ ॥
प्रलिप्तशुल्बपत्राणि पुटेत्क्षिप्त्वा विपाचयेत् ।
तद्द्रुतं काञ्चनं दिव्यं भवेल्लक्षणसंयुतम् ॥ १,२३.३९५ ॥
फलानि शाकवृक्षस्य परिपक्वानि संगृहेत् ।
तद्रसेन तु सम्प्राज्ञः सप्तरात्रं तु भावयेत् ॥ १,२३.३९६ ॥
तद्रसेन समायुक्तं मञ्जिष्ठामिश्रितं तथा ।
लेपयेत्तारपत्राणि ध्मातं भवति काञ्चनम् ॥ १,२३.३९७ ॥
[देवदालीकल्पः]
देवदाल्या महौषध्या विधिं वक्ष्याम्यतः परम् ।
सा श्वेता व्याधिशमने कृष्णा पीता रसायने ॥ १,२३.३९८ ॥
पौर्णमास्यां त्रयोदश्यां राहुग्रस्ते दिवाकरे ।
अथवा कृष्णपञ्चम्यामिमां विधिवदुद्धरेत् ॥ १,२३.३९९ ॥
देवदालीफलं देवि विष्णुक्रान्तां च सूतकम् ।
मूर्छयेद्बन्धयेत्क्षिप्रं शुल्बं हेम करोति च ॥ १,२३.४०० ॥
देवदालीफलं मूलमीश्वरीरसमेव च ।
तोयेन मर्दितं कृत्वा वङ्गं स्तम्भयति क्षणात् ॥ १,२३.४०१ ॥
[श्वेतगुञ्जाकल्पः]
अथातः सम्प्रवक्ष्यामि श्वेतगुञ्जाविधिं प्रिये ।
कृष्णपक्षे चतुर्दश्यामष्टम्यां च सुरार्चिते ॥ १,२३.४०२ ॥
कपाले मृत्तिकां न्यस्य सेचयेत्सलिलेन तु ।
बीजानि सितगुञ्जायाः पुष्ययोगे तु वापयेत् ॥ १,२३.४०३ ॥
वक्ष्यमाणेन योगेन कुर्यात्संग्रहणं तथा ।
ओं नमो भगवति श्वेतवल्लि श्वेतपर्वतवासिनि ॥ १,२३.४०४ ॥
सर्वकार्याणि कुरु कुरु अप्रतिहतं नमो नमः स्वाहा ।
शुद्धशुल्बं तु संगृह्य मूषामध्ये तु संस्थितम् ॥ १,२३.४०५ ॥

त्रिपञ्चपलसंख्या तु कर्षार्धसितगुञ्जया ।
सहैकत्र भवं तारं तस्य गन्धविवर्जितम् ॥ १,२३.४०६ ॥
ब्रह्मरीतिसमायुक्तं गुञ्जाचूर्णं सहैकतः ।
देवीनां भूषणं देवि जायते हेम शोभनम् ॥ १,२३.४०७ ॥
[कर्तरीरसबन्धः]
अथातः सम्प्रवक्ष्यामि कर्तरीरसबन्धनम् ।
असुराणां समायोगे क्रोधाविष्टेन चेतसा ॥ १,२३.४०८ ॥
सुदर्शनं महाचक्रं प्रेषितं मुरवैरिणा ।
भालपट्टात्ततस्तस्य निपेतुः स्वेदबिन्दवः ॥ १,२३.४०९ ॥
ते भूमौ पतिता दिव्याः संजाताः कर्तरीरसः ।
रक्षार्थं स्थापितं तत्र विष्णुना च सुदर्शनम् ॥ १,२३.४१० ॥
चक्रतुल्यं भ्रमत्येतदायुधानि निकृन्तति ।
कुरुते गर्जनं नादं धूमज्वालां विमुञ्चति ॥ १,२३.४११ ॥
कर्तरीदृष्टिमात्रेण तथान्या शब्दकर्तरी ।
लोकानां तु हितार्थाय घोरशक्तिर्व्यवस्थिता ॥ १,२३.४१२ ॥
रसरूपा महाघोरा सा सिद्धानां तु वेदिनी ।
तस्य क्षेत्रं यदा गच्छेदघोरास्त्रं जपेत्तदा ॥ १,२३.४१३ ॥
पुनर्घोरं न्यसेत्तत्र अथान्यं विन्यसेद्बुधः ।
अनुलोमविलोमेन देहेऽधिष्ठाप्य कर्तरीम् ॥ १,२३.४१४ ॥
मुद्रया मुद्रयेत्तां तु अघोरास्त्रेण योजिताम् ।
दीप्तेन रोधयेत्तां तु स्तम्भयेद्दीपनेन तु ॥ १,२३.४१५ ॥
निष्ठया मुद्रया तां तु स्थानयोगेन योजयेत् ।
[उदकबन्धाः; चन्द्रोदकबन्धः]
अथ चन्द्रोदकेनेशि वक्ष्यामि रसबन्धनम् ॥ १,२३.४१६ ॥
दृष्ट्वा चन्द्रोदकं मन्त्री पौर्णमास्यां विशेषतः ।
ग्रहणं तत्र कर्तव्यं पौर्णमास्यां प्रयत्नतः ॥ १,२३.४१७ ॥
निर्गच्छति महीं भित्त्वा चन्द्रवृद्ध्या तु वर्धते ।
क्षेत्रबन्धं पुरा कृत्वा देवमभ्यर्च्य शङ्करम् ॥ १,२३.४१८ ॥
चतुर्दश्यां तु तत्क्षेत्रं पूजयित्वा विचक्षणः ।
अहोरात्रोषितो भूत्वा बलिं तत्र निवेदयेत् ॥ १,२३.४१९ ॥
पौर्णमास्यां च रात्रौ च गत्वा तस्य समीपतः ।
चन्द्रोदकं तु संगृह्य मन्त्रयुक्तः सुमन्त्रितम् ॥ १,२३.४२० ॥
आलोड्य मधुसर्पिर्भ्यां पिबेत्तत्तु समाहितः ।
पीतमात्रेण तेनैव मूर्छितो भवति क्षणात् ॥ १,२३.४२१ ॥
चन्द्रोदये तथोत्तिष्ठेत्क्षारं तस्य तु दापयेत् ।
सप्तरात्रप्रयोगेण चन्द्रवन्निर्मलो भवेत् ॥ १,२३.४२२ ॥
एकविंशतिरात्रेण जीवेद्ब्रह्मदिनत्रयम् ।
एकमासप्रयोगेण ब्रह्मायुः स भवेन्नरः ॥ १,२३.४२३ ॥
चन्द्रोदकेन गगनं रसं हेम च मर्दयेत् ।
मूषामध्यगतं ध्मातं तत्क्षणाद्घुटिका भवेत् ॥ १,२३.४२४ ॥
अयं तु स्पर्शमात्रेण लोहान्यष्टौ च वेधयेत् ।
तद्रसं तु रसं चान्यं वज्रेण समजारितम् ॥ १,२३.४२५ ॥
चतुःषष्ट्यंशतो विध्येद्द्विगुणेन सहस्रकम् ।
दशसङ्कलिकाबद्धं गुञ्जामात्रं रसं ततः ॥ १,२३.४२६ ॥
त्रिलोहवेष्टितं वक्त्रे धृत्वा चादृश्यतां व्रजेत् ।

ओं नमो रुद्राय दंष्ट्रोत्कटाय विघ्नं नाशय नाशय दिशो रक्ष रक्ष रुद्रो ज्ञापयति हुं फट्स्वाहा ।
इति दिग्बन्धमन्त्रः ।
ओं नमो भगवते रुद्राय त्रिशूलहस्ताय अमृतोद्भव रक्ष रक्ष हुं फट्स्वाहा ।
इति पानमन्त्रः ।
[विषोदकबन्धः]
अथातः सम्प्रवक्ष्यामि विषोदरसबन्धनम् ॥ १,२३.४२७ ॥
सितपीतादिवर्णाढ्यं तत्र देवि रसोत्तमम् ।
तत्र गत्वाचलोद्देशे स्मरेद्घोरं सहस्रकम् ॥ १,२३.४२८ ॥
केशाः क्षिप्ताः स्फुटन्त्यस्मिन्नात्मच्छायां न दृश्यते ।
तैलं च गोलकाकारं घृतं तेन विसर्पति ॥ १,२३.४२९ ॥
गन्धकस्य हरेद्गन्धं पललं लवणायते ।
ज्ञात्वा पलाशपत्रेण कटुकालाबुके क्षिपेत् ॥ १,२३.४३० ॥
विषोदकं गन्धकं च हरबीजं च तत्समम् ।
अजाक्षीरेण पिष्ट्वा तु शुल्बपात्रे तु लेपयेत् ॥ १,२३.४३१ ॥
तत्पुटेन भवेद्देवि सिन्दूरारुणसन्निभम् ।
शतांशेनैव तद्देवि सर्वलोहानि वेधयेत् ॥ १,२३.४३२ ॥
अनेन विधिना देवि नागः सिन्दूरतां व्रजेत् ।
सहस्रांशेन तस्यैव तारं भवति काञ्चनम् ॥ १,२३.४३३ ॥
रक्तं पीतं तथा कृष्णमुत्तरोत्तरकार्यकृत् ।
त्रिफलाकान्तपात्रे वा पात्रेऽलाबुमयेऽपि वा ॥ १,२३.४३४ ॥
गृहीत्वा पूर्ववत्पत्रैः पालाशैर्वेष्टयेद्बहिः ।
स्थापयेद्धान्यमध्ये तु दिवसानेकविंशतिम् ॥ १,२३.४३५ ॥
महिषीक्षीरमध्ये तु बिन्दुमेकं तु साधयेत् ।
पायसं भक्षयेद्यस्तु पयोमध्वाज्यसंयुतम् ॥ १,२३.४३६ ॥
यावत्पूर्णं बलं देवि जीवेत्तद्बिन्दुसंख्यया ।
लाङ्गली गृहधूमश्च सिन्दूरं रजनीद्वयम् ॥ १,२३.४३७ ॥
मेषस्य शृङ्गं शृङ्गीं च कृष्णोन्मत्ताश्वमारकम् ।
सबीजसूतकं चैव विषतोयेन मर्दयेत् ॥ १,२३.४३८ ॥
विषतोयेन मेधावी सप्तवाराणि भावयेत् ।
अथवा भावयेत्तं तु यावच्चूर्णं तु मर्दयेत्तद्भवेत् ॥ १,२३.४३९ ॥
तेन नागं प्रतीवाप्य षोडशांशेन खं भवेत् ।
मूषास्थं वेणुयन्त्रे च त्रीणि वाराणि भावयेत् ॥ १,२३.४४० ॥
धूमं परिहरेत्तस्य अङ्गव्याधिकरं परम् ।
स्थापयेन्नागसिन्दूरं पात्रेऽलाबुमये च तत् ॥ १,२३.४४१ ॥
तच्चूर्णं तु शतांशेन तारताम्रादि वेधयेत् ।
विषपानीयमादाय वङ्गमावर्तितं शुभम् ॥ १,२३.४४२ ॥
निषिक्तं चैव तत्तोयैस्तारं भवति काञ्चनम् ।
विषपानीयमादाय प्रक्षिपेच्च रसोत्तमे ॥ १,२३.४४३ ॥
कुनटीगन्धपाषाणविषटङ्कणलाङ्गलीः ।
नष्टपिष्टं कृतं खल्वे तारपत्राणि लेपयेत् ॥ १,२३.४४४ ॥
अन्धमूषागतं ध्मातं निर्बीजं कनकं भवेत् ।
ओं ह्रीं नीलकण्ठाय ठः ठः ।
अस्य अयुतं जपेत् ।
इति विषोदकग्रहणपानमन्त्रः ।
[सञ्जीवनीजलकल्पः]

संजीवनीजलस्याथ विधिं वक्ष्यामि पार्वति ॥ १,२३.४४५ ॥
शुक्रेणाराधितो देवि प्रागहं सुरवन्दिते ।
दानवानां हितार्थाय मृतानां देवसङ्गरे ॥ १,२३.४४६ ॥
मया संजीवनी विद्या दत्ता चोदकरूपिणी ।
तया संजीविता दैत्या ये मृता देवसङ्गरे ॥ १,२३.४४७ ॥
निक्षिप्ता मर्त्यलोके सा सम्यक्ते कथयाम्यहम् ।
अस्ति मर्त्या महापुण्या पवित्रा दक्षिणापथे ॥ १,२३.४४८ ॥
दक्षिणे तु तटे तस्या उत्पलीनगरं परम् ।
तस्य दक्षिणतः शैलः सर्वलोकेषु विश्रुतः ॥ १,२३.४४९ ॥
नाम्ना कृष्णगिरिः चेति दृश्यते सर्वमङ्गले ।
सुप्रसिद्धाम्बिका नाम ग्रामस्तस्यास्ति सन्निधौ ॥ १,२३.४५० ॥
तत्राप्युदकमालोक्य परीक्षेत सुरार्चिते ।
गृहीत्वा शुष्कवंशं तु क्षिपेत्तोयस्य मध्यतः ॥ १,२३.४५१ ॥
जायते हरितं स्निग्धमहोरात्रेण निश्चितम् ।
मुञ्चत्यङ्कुरपत्रानि दृश्यतेऽतिमनोहरम् ॥ १,२३.४५२ ॥
बलिपुष्पोपहारेण ततो देवि समर्चयेत् ।
क्षेत्राधिपं गणेशं च चन्द्रं योगिगणं तथा ॥ १,२३.४५३ ॥
ओं चन्द्राय पिनाकिने शूलपाणये ओं दिशो बन्ध बन्धय दिशो बन्ध बन्धय ठः ठः ।
तिलांश्च सर्षपांश्चैव मन्त्रेणानेन सर्षपान् ।
सप्ताभिमन्त्रितान्कृत्वा साधको दिक्षु निक्षिपेत् ॥ १,२३.४५४ ॥
कटुकालाबुके तोयं कृतरक्षः समाहितः ।
गृहीत्वा तत्प्रयत्नेन निजं स्थानं समाश्रयेत् ॥ १,२३.४५५ ॥
ओं नमोऽमृते अमृतरूपिणि अमृतं कुरु कुरु एवं रुद्र आज्ञापयति स्वाहा ।
सप्ताभिमन्त्रितं कृत्वा मन्त्रेणानेन तज्जलम् ।
दिनमेकं तथा सूतं स्वर्णमाषद्वयान्वितम् ॥ १,२३.४५६ ॥
मर्दयेत्तेन तोयेन पिबेत्तत्तु विचक्षणः ।
एकविंशतिरात्रं तु क्षीराहारोऽथ यत्नतः ॥ १,२३.४५७ ॥
जीवेत्कल्पायुतं साग्रं कामरूपो महाबलः ।
योजनानां शतं गत्वा पुनरेव निवर्तते ॥ १,२३.४५८ ॥
अवध्यः सर्वभूतानां स्वेच्छाहारः स खेचरः ।
कनकं पारदं व्योम सममेकत्र योजयेत् ॥ १,२३.४५९ ॥
मर्दयेत्तेन तोयेन सप्ताहं स्वेदयेत्ततः ।
स रसः सर्वलोहानि षष्ट्यंशेन तु वेधयेत् ॥ १,२३.४६० ॥
अथवा तं रसं दिव्यं मधुना सह भक्षयेत् ।
मासमात्रप्रयोगेन जीवेद्ब्रह्मदिनायुतम् ॥ १,२३.४६१ ॥
तस्य मूत्रमलस्वेदैः शुल्बं भवति काञ्चनम् ।
निर्वाते तोयमादाय पारदं च मनःशिलाम् ॥ १,२३.४६२ ॥
मर्दयेत्खल्वपाषाणे नष्टपिष्टं भवेत्ततः ।
स्वेदयेत्सप्तरात्रं तु त्रिलोहेन च वेष्टयेत् ॥ १,२३.४६३ ॥
अन्तर्धानं क्षणाद्गच्छेद्विद्याधरपतिर्भवेत् ।
सिद्धकन्याशतवृतो यावत्कल्पांश्चतुर्दश ॥ १,२३.४६४ ॥
दिनेषु तेषु सर्वेषु दद्याच्छाल्योदनं घृतम् ।
पयसा च समायुक्तं नित्यमेवं च कारयेत् ॥ १,२३.४६५ ॥
[उष्णोदककल्पः]
उष्णोदकविधिं वक्ष्ये समाहितमनाः शृणु ।

पश्यत्युष्णोदकं यत्र वासं तत्रैव कारयेत् ॥ १,२३.४६६ ॥
शर्वरीमुषितां तत्र चणकास्तु दिने दिने ।
भक्षयेन्मासमात्रं तु जीवेद्वर्षशताष्टकम् ॥ १,२३.४६७ ॥
तस्य मूत्रपुरीषेण शुल्बं भवति काञ्चनम् ।
उष्णोदकं च कासीसं गन्धपाषाणसंयुतम् ॥ १,२३.४६८ ॥
चतुर्थांशेन रसकं दशभागं विनिक्षिपेत् ।
शुल्बं च मर्दयेत्सर्वं नष्टपिष्टं क्षणेन तु ॥ १,२३.४६९ ॥
तेन लेपितमात्रेण शुल्वं भवति काञ्चनम् ।
निषिक्तं तेन तोयेन प्रतिवापं ददेद्बुधः ॥ १,२३.४७० ॥
शुल्बं च जायते हेम तरुणादित्यवर्चसम् ।
तारं च तेन मार्गेण निषिक्तं हेमतां व्रजेत् ॥ १,२३.४७१ ॥
उष्णोदकेन भल्लातं तिलमुष्टिं च भक्षयेत् ।
मासद्वयप्रयोगेण जीवेद्वर्षशतत्रयम् ॥ १,२३.४७२ ॥
रसगन्धाश्मरसकतुत्थं दरदमाक्षिकम् ।
याममुष्णाम्बुना घृष्ट्वा तारपत्राणि लेपयेत् ॥ १,२३.४७३ ॥
विश्राम्य तु धमेद्देवि स्याच्चतुर्दशवर्णकम् ।
क्रमेणानेन देवेशि शुल्बं षोडशवर्णकम् ॥ १,२३.४७४ ॥
एकैकं हेमतारांशं द्वयं कांताभ्रयोः पृथक् ।
उष्णोदकेन संमर्द्य धमनात्खोटतां नयेत् ॥ १,२३.४७५ ॥
तं मुखे धारयेन्मासं वज्रकायो भवेत्ततः ।
तच्चूर्णं यवमात्रं तु भक्षयेन्मधुसर्पिषा ॥ १,२३.४७६ ॥
यावत्पलं तस्य मलैः शुल्बं भवति काञ्चनम् ।
उष्णोदपाचितान् खादेत्कुलुत्थान्क्षीरपो भवेत् ॥ १,२३.४७७ ॥
स्नानमुष्णांभसा कुर्याद्वर्षाद्वर्षाच्छतायुषः ।
क्षीरमुष्णोदकं क्वाथं त्रिफलायाश्च पाचयेत् ॥ १,२३.४७८ ॥
पाचयेत्पायसं कान्तपात्रे भुक्त्वा महायुषः ।
[शैलोदककल्पः]
अतः परं प्रवक्ष्यामि शैलोदकविधिं प्रिये ॥ १,२३.४७९ ॥
कर्दमापो महीशैलशिला चेति चतुर्विधम् ।
कानिचित्क्षणवेधीनि दिनवेधीनि कानि च ॥ १,२३.४८० ॥
पक्षमासादिषण्मासवेधनानि महीतले ।
क्षिप्तं जले यदा काष्ठं शैलीभूतं च दृश्यते ॥ १,२३.४८१ ॥
बहिरन्तश्च देवेशि वेधकं तत्प्रकीर्तितम् ।
हिङ्गुलं हरितालं च गन्धकं च मनःशिलाम् ॥ १,२३.४८२ ॥
एषां गन्धापहारं तु कुरुते तच्च वेधकम् ।
अन्यथा चेष्टकं देवि तदग्राह्यं निरर्थकम् ॥ १,२३.४८३ ॥
श्रीशैले श्रीवनप्रान्ते पर्यङ्काख्ये शिलातले ।
तत्रस्थं क्षणवेधि स्यान्नद्यां भगवतीतटे ॥ १,२३.४८४ ॥
एकाहे वेधकं तत्र गोकर्णे तु दिनत्रयम् ।
भद्राङ्गे दिनवेधि स्यात्त्रिस्थलान्ते त्रिवत्सरम् ॥ १,२३.४८५ ॥
धारेश्वरे पाक्षिकं स्यात्कर्षापुर्यां दिनैकतः ।
ब्रह्मेश्वरे मासिकं स्याद्व्याघ्रपुर्यां तु वासरम् ॥ १,२३.४८६ ॥
अघोरेशे मासिकं स्यात्सिंहद्वीपे तथा पुनः ।
दिनमेकं ब्रह्मगिरौ विन्ध्ये तु क्षणवेधकम् ॥ १,२३.४८७ ॥
वासरं माल्यवन्ते तु क्षणवेधी तु तत्र च ।

किष्किन्धे पर्वते रम्ये पम्पातीरे क्षणोदकम् ॥ १,२३.४८८ ॥
तस्य पश्चिमतो देवि योजनद्वितये पुनः ।
भूशैलमस्ति तत्रैव त्रिदिनं वेदपर्वते ॥ १,२३.४८९ ॥
अन्यत्र यत्र यत्रापि ब्रह्मविष्णुशिवोद्भवम् ।
अमृतं तत्र तत्रापि वज्रीकरणमुत्तमम् ॥ १,२३.४९० ॥
तस्योत्पत्तिं प्रवक्ष्यामि यथा जानाति साधकः ।
महीं समुद्धृतवतो वराहस्य कलेवरात् ॥ १,२३.४९१ ॥
यः स्वेदः पतितस्तस्माज्जातं शैलोदकं परम् ।
तं मुखे क्षणिकं जातं कर्णदेशे तु वासरम् ॥ १,२३.४९२ ॥
बाहुभ्यां त्र्यहवेधी स्यान्मासवेधी तु पार्श्वयोः ।
षण्मासमपराङ्गे च सर्वं समफलं च तत् ॥ १,२३.४९३ ॥
अघोरास्त्रेण तत्क्षेत्रे रक्षां कृत्वा दिशां बलिम् ।
दत्त्वा लक्षं जपित्वा तु गृह्णीयादमृतं परम् ॥ १,२३.४९४ ॥
शरद्ग्रीष्मवसन्तेषु हेमन्ते वा सुरार्चिते ।
आयसे ताम्रपात्रे वा कान्तलोहमयेऽथवा ॥ १,२३.४९५ ॥
शिलाम्बुपलमष्टौ तु पलं क्षीरस्य निक्षिपेत् ।
क्षीरावशेषं संक्वाथ्यं त्रिसप्ताहं पिबेन्नरः ॥ १,२३.४९६ ॥
जीवेद्वर्षसहस्रं तु वलीपलितवर्जितः ।
अथवाष्टपलं क्षीरं पलैकेनाम्बुमिश्रितम् ॥ १,२३.४९७ ॥
क्षीरावशेषं सेवेत पूर्वोक्तं लभते फलम् ।
कुलुत्थाष्टगुणं वारि पचेदष्टावशेषितम् ॥ १,२३.४९८ ॥
चतुर्गुणेन तेनाज्यं पाचयेद्घृतशेषितम् ।
लिह्यान्मधुसितोपेतं त्रिसप्ताहाद्बृहस्पतिः ॥ १,२३.४९९ ॥
द्विरष्टवार्षिकाकारः सहस्रायुर्न संशयः ।
अवशिष्टकुलुत्थं तु पादांशमधुसर्पिषा ॥ १,२३.५०० ॥
भक्षयेत्कर्षमेकं तु मासेनायुतजीवितः ।
तत्सिद्धतैलेनाभ्यङ्गं म्रक्षणं चैव कारयेत् ॥ १,२३.५०१ ॥
पामाविचर्चिकादद्रुकुष्ठानि सहसा जयेत् ।
वलीपलितनिर्मुक्तः सहस्रायुश्च जायते ॥ १,२३.५०२ ॥
यः पिबेत्प्रातरुत्थाय शैलाम्बु चुलुकं पयः ।
षण्मासात्स्यात्सहस्रायुर्निर्वलीपलितश्च सः ॥ १,२३.५०३ ॥
अथवा सूतकं देवि वारिणा सह मर्दयेत् ।
मासेनैकेन देवेशि नष्टपिष्टिर्भविष्यति ॥ १,२३.५०४ ॥
मासमात्रं समश्नीयात्स भवेदजरामरः ।
अथवा तं रसं हेम्ना धामयेत्खदिराग्निना ॥ १,२३.५०५ ॥
गुलिका सुन्दरी नाम सर्वायुधनिवारिणी ।
कर्ता हर्ता स्वयं सिद्धो जीवेच्चन्द्रार्कतारकम् ॥ १,२३.५०६ ॥
अथ तेनोदकेनैव क्षीरार्धं पायसं पचेत् ।
मासमात्रप्रयोगेण वलीपलितवर्जितः ॥ १,२३.५०७ ॥
पक्त्वा तेनाम्भसा पथ्याः षष्टिस्त्रीणि शतानि च ।
मधु संयोज्य भाण्डस्थं भूमौ सर्वं निधापयेत् ॥ १,२३.५०८ ॥
दिने दिने तदेकैकं भक्षयेत्प्रातरुत्थितः ।
वलीपलितनिर्मुक्तो जीवेद्वर्षसहस्रकम् ॥ १,२३.५०९ ॥
शैलीभूतं कुलुत्थं वा भक्षयेन्मधुसर्पिषा ।
षण्मासात्तु प्रयोगेण जीवेद्वर्षसहस्रकम् ॥ १,२३.५१० ॥

कूष्माण्डमादितः कृत्वा यानि कानि फलानि च ।
जले क्षिप्तानि लोहानि शैलभूतानि भक्षयेत् ॥ १,२३.५११ ॥
क्षीराहारश्च जीर्णान्ते वज्रकायो भवेन्नरः ।
तेनोदकेन संमर्द्यमभ्रकं क्वाथयेत्प्रिये ॥ १,२३.५१२ ॥
कटुत्रययुतं खादेज्जीवेद्वर्षसहस्रकम् ।
अथवा रसकर्षैकं तज्जलेन तु मर्दितम् ॥ १,२३.५१३ ॥
इङ्गुदीफलमध्यस्थं तच्छैलोदकमध्यगः ।
कालेन त्रिगुणेनैव काठिन्यं तस्य जायते ॥ १,२३.५१४ ॥
षण्मासं तन्मुखे धार्यं वज्रकायं करोति तत् ।
दशनागसमप्राणो देवैः सह स मोदते ॥ १,२३.५१५ ॥
गृहीत्वा त्रिफलां तत्र शैलवारिणि निक्षिपेत् ।
यदा भवति तच्छैलं गृहीत्वा चूर्णयेत्ततः ॥ १,२३.५१६ ॥
कान्तजीर्णरसं तेन सार्धं घृतमधुप्लुतम् ।
भक्षयेद्वर्षमेकं तु ततः क्षीराशनो भवेत् ॥ १,२३.५१७ ॥
उदयादित्यसङ्काशो मेधावी प्रियदर्शनः ।
नीलकुञ्चितकेशश्च जीवेच्चन्द्रार्कतारकम् ॥ १,२३.५१८ ॥
पारदं हरितालं च शिलां माक्षिकमेव च ।
दरदं च विषं चैव सर्वमेकत्र कारयेत् ॥ १,२३.५१९ ॥
मर्दयेत्खल्वपाषाणे मातुलुङ्गरसेन तु ।
गोलकं कारयित्वा तु वारिमध्ये विनिक्षिपेत् ॥ १,२३.५२० ॥
तेन तारं च शुल्बं च कांचनं भवति ध्रुवम् ।
उपयुञ्जीत मासैकं वलीपलितवर्जितः ॥ १,२३.५२१ ॥
सहस्रं जीवितं तस्य महाबलपराक्रमः ।
शैलीभूतहरिद्रां तु तच्चूर्णावापमात्रतः ॥ १,२३.५२२ ॥
हेमत्वं लभते नागो बालार्कसदृशप्रभः ।
शैलोदके विनिक्षिप्य भूशैले कर्दमेऽपि वा ॥ १,२३.५२३ ॥
ज्ञात्वा कालप्रमाणेन बन्धयेत्पारदं ततः ।
रक्तक्षारयुतं ध्मातं सुवर्णसमसारितम् ॥ १,२३.५२४ ॥
शतांशेन तु लोहानां सर्वेषां हेमकारकम् ।
द्वितीयसारणां प्राप्य सहस्रांशेन विध्यति ॥ १,२३.५२५ ॥
तं खोटं धारयेद्वक्त्रे दिव्यत्वं लभते ध्रुवम् ।
[केचन घुटिकायोगाः]
निचुले ककुभे चैव किंशुके मधुकेऽपि वा ॥ १,२३.५२६ ॥
इङ्गुदीफलमध्ये वा रजनीद्वयमार्द्रके ।
अमृते कन्दके वाथ उक्तकन्दौषधीषु च ॥ १,२३.५२७ ॥
विधाय कोटरं तत्र क्षिप्त्वा तेनैव डोलयेत् ।
त्रिफलाव्योषकल्केन वेष्टयित्वा प्रयत्नतः ॥ १,२३.५२८ ॥
पादेन कनकं दत्त्वा पारदं तत्र योजयेत् ।
शैलोदके क्षिपेत्तत्र गुलिका वज्रवद्भवेत् ॥ १,२३.५२९ ॥
पूर्ववत्सारणा कार्या पूर्ववत्सिद्धिदा भवेत् ।
धार्यमाणा मुखे सा तु सहस्रायुष्करी भवेत् ॥ १,२३.५३० ॥
द्वितीयसारणायोगादयुतं वेधयेत्तु सा ।
धार्यमाणा मुखे सैवमयुतायुष्यदा भवेत् ॥ १,२३.५३१ ॥
तृतीयसारणायोगाज्जायते लक्षवेधिनी ।
तं खोटं धारयेद्वक्त्रे लक्षायुर्जायते नरः ॥ १,२३.५३२ ॥

चतुर्थी सारणा देवि कोटिवेधी न संशयः ।
कोट्यायुर्जीवितं तस्य खेचरत्वं च लभ्यते ॥ १,२३.५३३ ॥
पञ्चभिर्दशकोटिः स्यात्षड्भिः कोटिशतं भवेत् ।
यावच्चन्द्रार्कजीवित्वमनन्तबलवीर्यवान् ॥ १,२३.५३४ ॥
ददाति सप्तमी चापि सारणा गुलिका परा ।
खेचरी नाम विख्याता भैरवेण प्रचोदिता ॥ १,२३.५३५ ॥
यस्तु तद्राजिकामात्रं मासमेकं तु भक्षयेत् ।
वज्रदेहः स सिद्धः स्याद्दिव्यस्त्रीजनवल्लभः ॥ १,२३.५३६ ॥
क्रीडते खेचरैर्भोगैः स्वेच्छया शिवतां व्रजेत् ।
नानाविधफलाश्चास्या घुटिकां शृणु सुन्दरि ॥ १,२३.५३७ ॥
शुद्धबद्धं रसेन्द्रं तु गन्धकं तत्र जारयेत् ।
त्रिगुणे गन्धके जीर्णे तेन हेम तु कारयेत् ॥ १,२३.५३८ ॥
कारयेद्भस्म सूतं तु काञ्चनं तेन सूतकम् ।
तद्भस्म सूतके जार्यं रसेन्द्रस्य समे समम् ॥ १,२३.५३९ ॥
तेन सूतकजीर्णेन वज्ररत्नं तु घातयेत् ।
तद्वज्रं जायते भस्म सिन्दूरारुणसन्निभम् ॥ १,२३.५४० ॥
तद्भस्म जारयेत्सूते त्रिगुणे तु सुरार्चिते ।
हाटकं सारयेत्तं तु घुटिकां तेन कारयेत् ॥ १,२३.५४१ ॥
त्रिलोहावेष्टितं तं तु मुखे प्रक्षिप्य साधकः ।
नष्टच्छायो भवेत्सोऽयमदृश्यो देवदानवैः ॥ १,२३.५४२ ॥
लक्षवर्षसहस्राणि निर्वलीपलितो भवेत् ।
शूलिनं शक्तिसंयुक्तं रत्नादिगुणभूषितम् ॥ १,२३.५४३ ॥
वक्त्रे करे च बिभृयात्सर्वायुधनिवारणम् ।
व्योम माक्षिकसत्वं च तारं ताम्रं सुरायुधम् ॥ १,२३.५४४ ॥
सारलोहं सूतकं च रत्नादिगुणभूषितम् ।
घुटिका सा वरारोहे मधुरत्रयसंय